वं जलात्मने तत्त्वात्मिकायै ललिता देव्यै नैवेद्यं कल्पयामि नमः ।

**प्रथम श्लोकस्थ वर्णबीज–शिं = श + इ का ध्यान—**

**श—** चतुर्भुजां चकोराक्षीं चारुचन्दनचर्चिताम् ।
शुक्लवर्णां त्रिनयनां वरदां च शुचिस्मिताम् ॥
रत्नालङ्कारभूषाढ्यां श्वेतमाल्योपशोभितम् ।
देववृन्दैरभिवन्द्यां सेवितां मोक्षकाङ्क्षिभिः ॥
शकारं परमेशानि शृणु वर्णं शुचिस्मिते ।
रक्तवर्णं प्रभाकारं स्वयं पद्मकुण्डली ॥
चतुर्वर्गप्रदं देवि शकारं ब्रह्मविग्रहम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये ॥
रत्नपञ्चतमोद्युक्तं त्रिकूटसहितं सदा ।
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ॥

**इ—** इकारं परमानन्दं सुगन्धं कुंकुमच्छविः ।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये ॥
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा ।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम् ॥
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गता भवेत् ।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत् ॥
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम् ।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम् ॥
चतुर्भुजां च वरदां हरिचन्दनभूषिताम् ।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत् ॥

**सर्वार्थसिद्धि यन्त्र**

क्लीं

**बीजाक्षर**—'शिं' (श् + इ), जप—१०००; जप-स्थान—मूलाधार चक्र के चार दलों में; होम—रक्तपुष्प, बिल्व, तिल और यव तथा घृत से १०० या १० आहुतियाँ; मार्जन—१०; तर्पण—१; श्लोक पाठ संख्या—१०; श्लोक पाठ की आहुति—१ ॥

**श्रीविद्यारहस्यार्थ**—हे प्रभु ! हे विश्वनायक, आप सदा शक्तिमय ही हैं । यदि आप शक्तिरहित होते तो 'इकार' रहित शिव शववत् होता तथा विश्वक्रिया का स्पन्दन कहाँ और किस प्रकार होता? विश्वदृश्य दर्शनाधारा शुद्ध चैतन्य प्रस्फुरिता दिव्यशक्ति ही है । अतः वह परम्परा, महामाया, कामकूटा, सिद्धिदा, पूर्णकामा, कामस्वरूपा, हरिहरविरिञ्चिवरदा एवं सर्वदेववृन्दैरभिवन्द्या ही इस विश्व में आराध्य या आराधना करने योग्य है । उत्पत्ति-स्थिति-संहारात्मिका, परामहाशक्ति, हे अनन्तशक्ति ! आपके अनन्त गुणों का गान करने तथा आपके अमोघ चरणकमलवन्दन का सौभाग्य अकृतपुंण्य वाले अनधिकारी साधक को किस प्रकार प्राप्त हो सकता है ?

**विमर्श**—(१) 'कुशलः स्पन्दितुमपि' कु—'सूक्ष्मपरवासः कैलाशः', श (स) सूर्यो आदित्यः; ल—भू—अर्थात् सूक्ष्म-पर निवास श्री कैलाश व्यापिनी सूक्ष्मतरा गति शक्ति, सूर्यरश्मि प्राणज्योति आदि में गतिस्पन्द उत्पन्न हो कर सृष्टिक्रम प्रारम्भ नहीं हो सकता। (२) यहाँ शिव एवं शक्ति के संयोग से पञ्चदशी महामन्त्र विद्या की उत्पत्ति बताई गई है— शिवो ह, शक्ति स। इस प्रकार हकार तथा सकार के संयोग के बिना देव—'क' तथा भूबीज 'लं' से मन्त्रसृष्टि नहीं हो सकती। शिव एवं शक्ति के संयोग से ही कामकूट (क्लीं) की सृष्टि हुई है।

(३) ह शिवात्मक, स शक्त्यात्मक, क देवात्मक, ल पृथ्व्यात्मक और दिव्य तथा भू के मध्य आकाश व्यापक होने से आकाशबीज ह मध्यस्थ हुआ है। इससे 'हसकहल' यह मन्त्र निष्पन्न हुआ। हरिहरविरिञ्चि सेविता महामाया बीज 'ह्रीं' सहित द्वितीय मन्त्रकूट 'हसकहल ह्रीं' बनता है—यह हादि विद्या है। इसमें शक्तित्रय (इच्छा, ज्ञान, क्रिया) लक्ष्य से मायाबीज 'ह्रीं' त्रिपुटित हो जाता है अर्थात् प्रत्येक मन्त्रकूट के साथ में एक-एक का समायोजन है ॥ १ ॥

**तनीयांसं पांसुं तव चरणपङ्केरुहभवं**
**विरिञ्चिः सञ्चिन्वन्विरचयति लोकानविकलम्।**
**वहत्येनं शौरिः कथमपि सहस्रेण शिरसां**
**हरः संक्षुद्यैनं भजति भसितोद्धूलनविधिम्॥ २ ॥**

**लक्ष्मीधरा**—**तनीयांसं** अतिसूक्ष्मं, **पांसुं** रजःकणं, **तव** भवत्याः, देव्याः **चरण-पङ्केरुहभवं** चरणौ पङ्के रुहे इव ताभ्यां भवं **विरिञ्चिः** ब्रह्मा—विरिञ्चिशब्द इकारान्तः, 'विरिञ्चिश्च विरिञ्चनः' इति अमरशेषे अभिधानात्। **संचिन्वन्** सम्पादयन्, भाण्डीकुर्वन्नित्यर्थः, **विरचयति** विविधान् करोति, **लोकान्** लोक्यन्त इति लोकाः स्थावरजङ्गमात्मकप्रपञ्च इत्यर्थः। यद्वा—ऊर्ध्वलोकाः सप्त भूरादयः, अधो लोकाः सप्त अतलादयः, एवं चतुर्दशलोकान्। **अविकलं** परस्परासङ्कीर्णं यथा भवति तथा। यद्वा—यावत्प्रलयमेषां वैकल्यं यथा न भवति तथा। **वहति** प्रापयति रक्षति **एनं** पांसुकणं, चतुर्दशलोकात्मकतया अवस्थितम्। **शौरिः** शूरस्य यदोरपत्यं शौरिः बलभद्रः तेन शेषो लक्ष्यते, शेषावतारत्वात् बलभद्रस्य। यद्वा—शृणाति हिनस्ति दशतीति शौरिः सर्पराजः, शेष इति यावत्। यद्वा— शौरिः विष्णुः। तथोक्तं चतुःशत्याम्—

'शिंशुमारात्मना विष्णुः सप्तलोकानधःस्थितान्।
दध्रे शेषतया लोकान् भूरादीनूर्ध्वतः स्थितान्' ॥ इति।

शेषपक्षेऽपि शेष एव विष्णुः, रक्षणे विष्णोरेवाधिकारात्। **कथमपि** कथंचित्, **सहस्रेण शिरसाम्**। **हरः** अन्तकाले प्रपञ्चं हरतीति हरः, **संक्षुद्य** सम्यक् मर्दयित्वा, **एनं** चतुर्दशभुवनात्मकतया अवस्थितं पादरजःकणं, **भजति** सेवते, उपदिहतीत्यर्थः। **भसितोद्धूलनविधिं** भसितेन यदुद्धूलनं उपदेहनं अङ्गरागकरणं तस्य विधिः अनुष्ठानं तं तथोक्तम्।

**अत्रेत्थं पदयोजना**—हे भगवति विरिञ्चिः तव चरणपङ्केरुहभवं तनीयांसं पांसुं सञ्चिन्वन् लोकान् अविकलं विरचयति। हे भगवति शौरिरेनं शिरसां सहस्रेण कथमपि वहति। हे भगवति एनं संक्षुद्य हरः भसितोद्धूलनविधिं भजति ॥

**अयं भावः**—ब्रह्मविष्णुमहेश्वराणां प्रपञ्चविषयसृष्टिस्थितिलयकर्तृत्वं भगवत्याः पादाब्जरेणुमहिमायत्तमिति ॥ २ ॥

*** सरला ***

**तनीयांसमिति । तनीयांसं** अतिसूक्ष्म, **पांसुं** रजःकण, **तव** आप के **चरणपङ्केरुहभवं** चरणरूपी कमल से उत्पन्न, **विरिञ्चिः** ब्रह्मा, विरिञ्चि शब्द इकारान्त है क्योंकि विरिञ्चिश्च विरञ्चिनः ऐसा अमरकोश में कहा गया है । **संचिन्वन्** सम्पादन करते हुये अथवा उसे एकत्रित कर, **विरचयति** अनेक प्रकार का बनाते हैं, **लोकान्** लोक्यन्ते इति लोकाः स्थावरजङ्गमात्मक प्रपञ्च, अथवा भूः भुवः स्वः आदि सात ऊर्ध्वलोक और अतलादि सात अधोलोक, इस प्रकार १४ लोकों को, **अविकलं** परस्पर संकीर्णता से रहित अत्यन्त विस्तृत, अथवा प्रलय पर्यन्त । जिस प्रकार इनका विनाश न हो उस प्रकार से, **वहति** रक्षण करते हैं, **एनं** उसी पांसुकण को जो चतुर्दशलोकात्मक रूप से स्थित हैं, **शौरिः** शूर नामक यदु की अपबय रूप में उत्पन्न शौरि बलभद्र, शौरि शब्द की शेष अर्थ में लक्षणा की गई है क्योंकि बलभद्र शेषावतार माने गये हैं, अथवा श्रृणोति, हिनस्ति, दशतीति शौरिः, जो सुनता है मारता है, डँस लेता है वह शौरि है । इसका अर्थ हुआ सर्पराज शेष अथवा शौरि विष्णु को भी कहते हैं जैसा कि चतुःशती में कहा गया है—

विष्णु शिंशुमाररूप धारण कर नीचे के अतलादि सात लोकों को धारण करते हैं । इसी प्रकार शेष रूप धारण कर वे ऊपर के भू आदि लोकों को धारण करते हैं ।

यहाँ शेष के पक्ष में शेष पद से विष्णु ही विवक्षित हैं, **कथमपि** किसी प्रकार **सहस्रेण शिरसां** हजार शिर से भी समर्थ नहीं होते । **हरः** अन्तकाल में समस्त प्रपञ्च हरने के कारण हर कहे गए हैं । **संक्षुद्य** अच्छी प्रकार उसे चूर्ण कर, **एनं** चतुर्दशभुवनात्मकरूप से स्थित उसी पादरजःकण को, **भजति** सेवन करते हैं अर्थात् लेप करते हैं । **भसितोद्धूलनविधिं** भस्म से (उद्धूलन) लेप करना अथवा अङ्गराग बनाना, (तस्य) उसकी विधि का अनुष्ठान करते हैं ।

**पद योजना का अर्थ**—हे भगवति ! ब्रह्मदेव आपके चरणकमल से उत्पन्न होने वाले अत्यन्त सूक्ष्म रजःकण को एकत्रित कर स्थावर-जङ्गमात्मक चतुर्दश लोकों का विशद रूप से निर्माण करते हैं, अथवा प्रलय पर्यन्त इनका नाश न हो इस प्रकार की सावधानी से रचना करते हैं । हे भगवति ! उसी चतुर्दश लोकात्मक रजःकण को शेष अपने सहस्रों फणों से किसी प्रकार धारण करते हैं तथा उसी चतुर्दशात्मक लोक रूप सूक्ष्म रज को मर्दन द्वारा भस्म बना कर लोकों का हरण करने वाले भगवान् शिव अपने अङ्ग में भस्म का लेप करते हैं—

इस श्लोक का **यह भाव है** कि ब्रह्मा, विष्णु और महेश्वर जो इस प्रपञ्च विषय की सृष्टि करते हैं और उसका पालन एवं विलय करते हैं वह सब भगवती के चरण कमलों के रजःकण की महिमा के आधीन है ॥ २ ॥

**श्रीविद्यारहस्यार्थ**—इस श्लोक में देवी की गति का प्रतिपादन है । श्री महामाया परमा शक्ति की अद्भुत स्पन्दगति विद्या एवं अविद्या रूप धारण करती है । उसके गति-विक्षेप में अणुओं की सृष्टि होकर उनसे सूर्यादि बन जाते हैं; फिर भू आदि गोलक ग्रहों की सृष्टि

**कालभयनिवारण यन्त्र**

होती है तथा उनमें वर्तमान दृश्य तत्त्वों का निर्माण होकर विश्व-सृष्टि प्रारम्भ होती है। वे अणु सदा बनते बिगड़ते रहते हैं। विरञ्चि (= ब्रह्मा) को उनके सर्जन में तनिक भी प्रयास करने की आवश्यकता नहीं पड़ती। ये सभी ग्रह एवं लोक सौर-महाशक्ति के गुरुत्वाकर्षण (ग्रेविटी) में अधर में लटकते हुए भ्रमण करते हैं तथा सूर्य की प्रदक्षिणा करते हैं अर्थात् सौरशक्ति भू-सहित इस सम्पूर्ण ग्रहमण्डल को सहस्त्रों हाथों से धारण करती हुई भी स्वयं गतियुक्त है। इस बृहत्सृष्टि में लय होते हुए अणुओं की भस्म श्रीसदाशिव धारण कर उन अणुओं में पुनः जीवन अर्थात् गति प्रदान करते हैं। यह श्री भगवान् महाशिव का मृत्युञ्जय योग है।

**द्वितीय श्लोकस्थ वर्ण बीज 'त' का ध्यान—**

चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम्।<br>
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम्॥<br>
नानाऽलङ्कारभूषां तां सर्वसिद्धिप्रदायिनीम्।<br>
एवं ध्यात्वा तकारं तु मन्त्ररूपं सदा यजेत्॥<br>
तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली।<br>
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा॥<br>
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम्।<br>
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम्॥

**बीजाक्षर**—'त'; जप—१०००; जप-स्थान—मूलाधार चक्र; होम—रक्तपुष्प, बिल्व, तिल और यव तथा घृत से १०० अथवा १० आहुतियाँ; मार्जन—१०; तर्पण—१०; श्लोकपाठ-संख्या—१०; श्लोकपाठ-आहुति—१; पूजा-यन्त्र—त्रिकोण उसके मध्य में 'ह्रीं' ॥ २ ॥

तमेव पांसुं प्रस्तौति—

**अविद्यानामन्तस्तिमिरमिहिरद्वीपनगरी**<br>
**जडानां चैतन्यस्तबकमकरन्दस्रुतिझरी।**<br>
**दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ**<br>
**निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवति॥ ३ ॥**

**लक्ष्मीधरा**—एषः पांसुः **अविद्यानां** अविद्याविष्टचित्तानां, अज्ञानिनामित्यर्थः, न तु अविद्यमानविद्यानां, अविद्याया भावरूपत्त्वात्। अर्शआदित्वात् अच्प्रत्ययः, अविद्यावन्तः अविद्या इति। यद्वा—अविद्याविष्टचित्ता अपि उपचारेण अविद्या इति। तेषां **अन्तस्तिमिर-मिहिरद्वीपनगरी** अन्तस्तिमिरं अन्तः स्थिताज्ञानम् अज्ञानस्य तिमिरत्वारोपणं आवरकत्त्व-साम्यात्—यथा बाह्यपदार्थानावृणोति तमः, तथा आन्तरपदार्थम् आत्मानं आवृणोति अविद्या। तस्य तिमिरस्य मिहिरद्वीपनगरी, मिहिरस्य सूर्यस्य द्वीपः समुद्रमध्ये उदयप्रदेशः, तत्र नगरी पत्तनं, वासगृहमिति यावत्। **जडानां** मन्दानां दुर्मेधसां, **चैतन्यस्तबकमकरन्द-स्रुतिझरी** चेतनैव चैतन्यम्, स्वार्थे ष्यञ्, चेतना नाम आत्मगतपदार्थप्रबोधकारिणी चित्तविस्ताररूपा काचन शक्तिः, तदेव स्तबकः कल्पवृक्षपुष्पगुच्छः, तस्य मकरन्दः पुष्परसः,

तस्य स्रुतिः स्रवणं निष्यन्दः, तस्य झरी प्रवाहः । **दरिद्राणां** दीनानां, **चिन्तामणिगुणनिका** चिन्तामणेः रत्नविशेषस्य गुणनिका गुणना आम्रेडनं, समूह इति यावत् । **जन्मजलधौ** जन्मैव संसार एव जलधिः समुद्रः, संसारे समुद्रत्वारोपणं अपारत्वसाम्यात् । तत्र **निमग्नानां** नितरां उन्मज्जनराहित्येन मग्नानाम् । **दंष्ट्रा** स्पष्टम् । **मुररिपुवराहस्य** मुरो नाम दैत्यः, तस्य रिपुः विष्णुः, अयं मुररिपुशब्दः विशेषणवाच्यपि विशेष्यं विष्णुमेव कथयति, शब्दस्वाभाव्यात् । न चात्र पङ्कजादिपदवत् शक्तिसङ्कोचः, द्रव्यवाचकत्वादस्येति । तस्य वराहः अवतारविशेषः, तस्य तथोक्तस्य **भवति** वर्तते ॥

**अत्रेत्थं पदयोजना**—हे भगवति तव पादाब्जरेणुः एषः अविद्यानाम् अन्तस्तिमिरमिहिरद्वीपनगरी, जडानां चैतन्यस्तबकमकरन्दस्रुतिझरी, दरिद्राणां चिन्तामणिगुणनिका, जन्मजलधौ निमग्नानां मुररिपुवराहस्य दंष्ट्रा भवति ॥

अत्र परिणामालङ्कारः, आरोप्यमाणस्य आरोपविषयात्मतया स्थितेः । तथा च मङ्खकसूत्रम्—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति । अस्यैवार्थः आरोप्यमाणस्य प्रकृतोपयोगित्वं आरोपविषयात्मतया स्थितिनिबन्धनमेवेति फलाभिप्रायेणोक्त इति । यद्वा—उल्लेखालङ्कारः, नगर्यादिरूपेण पांसोरुल्लेखनात् । रूपकं वा भवतु, प्रकृतोपयोगो न विवक्ष्यत इति ॥ ३ ॥

## * सरला *

अब उसी पादपांसु की स्तुति करते हैं—

**अविद्यानामिति** । यह पादपांसु अर्थात् पद का एक रज कण, **अविद्यानां** अविद्या से आविष्ट चित्त वालों का अर्थात् अज्ञानियों व, इसका 'अविद्यमानविद्यानां' यह अर्थ नहीं है, क्योंकि अविद्या भाव रूप है । यहाँ अर्शादिभ्यः अच् से अच् प्रत्यय हुआ है, अथवा अविद्याविष्ट चित्त वाले भी, लक्षणया अविद्या स्वरूप ही हैं, उनके **अन्तस्तिमिरमिहिरद्वीपनगरी** अन्तस्तिमिर अर्थात् अन्तःकरण स्थित अज्ञान के । अज्ञान में तिमिर का आरोप इसलिये है कि जिस प्रकार अन्धकार बाह्य वस्तुओं पर पर्दा डालता है उसी प्रकार अविद्या रूप अज्ञान भी आत्मा पर आवरण करने वाला है, तस्य तिमिरस्य मिहिरद्वीपनगरी अर्थात् सूर्य समुद्र के मध्य में उदयप्रदेश रूप है, उसमें रहने वाली नगरी, पत्तन अथवा निवासस्थान । **जडानां** अत्यन्त मन्द बुद्धि अर्थात् स्वल्पबुद्धि वाले, **चैतन्यस्तबकमकरन्दस्रुतिझरी** चेतना को ही चैतन्य कहा गया है, यहाँ 'चेतन' शब्द से स्वार्थ मे ष्यञ् प्रत्यय हुआ है । आत्मा में रहने वाली वस्तुओं का ज्ञान कराने वाली चित्त विस्तार रूपा कोई अनिर्वचनीय शक्ति ही 'चेतना' कही जाती है । वही है स्तबकं अर्थात् कल्पवृक्ष के पुष्पों का गुच्छा, उसका मकरन्द अर्थात् पुष्परस उसकी स्रुति अर्थात् स्रवण, धीरे धीरे टपकना, उसकी झरी अर्थात् प्रवाह । **दरिद्राणां** दीनों की, **चिन्तामणिगुणनिका** चिन्तामणि रत्नविशेष है, उसकी गुणनिका गुणना, बारम्बार घुमाना अर्थात् उसका समूह 'जपमाला', जन्मजलधौ जन्म अर्थात् संसार, तद्रूप जलधि समुद्र, संसार में समुद्रत्व का आरोप है क्योंकि जिस प्रकार समुद्र अपार है उसी प्रकार संसार भी अपार है उसमें, **निमग्नानां** ऐसे डूब जाने वाले जहाँ से फिर न निकल सकें, **दंष्ट्रा** दाँत, **मुररिपुवराहस्य** मुर नामक दैत्य, उसके शत्रु विष्णु, यहाँ 'मुररिपु' शब्द यद्यपि विशेषण है तथापि इससे विशेष्य रूप विष्णु ही कहे गये हैं । शब्द के स्वभाव

के कारण यहाँ पङ्कजादि पद की तरह शक्ति का संकोच नहीं है क्योंकि वह द्रव्य का वाचक हैं। उन विष्णु का वराह अवतार विशेष, उनकी दंष्ट्रा, **भवति** आप हैं।

**पदयोजना का अर्थ**—हे भगवति! आपके चरण कमलों की धूलि अज्ञान रूप अन्धकार से आवृत्त अन्त:करण वालों के लिये उदीयमान सूर्य से प्रकाशित द्वीप में निवास का स्थान है और जड़ों के लिये चेतना उत्पन्न करने वाली कल्पवृक्ष के पुष्पगुच्छों के रस को टपकाने वाली निर्झरिणी है तथा दरिद्रों के लिये चिन्तामणि की माला है। बहुत क्या कहें? संसार रूपी समुद्र में डूबे रहने वाले लोगों का उद्धार करने के लिये वराह रूपधारी श्री विष्णु के दन्त है।

यहाँ परिणामालंकार है क्योंकि आरोप्यमाण ही आरोप का विषय बन कर स्थित है। जैसा कि मङ्खकसूत्र में कहा गया है—'जब आरोप्यमाण ही प्रकृत विषय में उपयोग किया जाय तो वहाँ परिणामालंकार होता है।' इसी का अर्थ है 'जब आरोप्यमाण ही प्रकृत विषय का उपयोगी बन कर आरोप के विषयात्मक रूप में स्थित हो जाय तब परिणामालंकार होता है अथवा यहाँ उल्लेखालंकार हैं क्योंकि एक पांसु का ही यहाँ नगरी, निर्झरिणी, गुणनिका तथा दंष्ट्रा रूप में वर्णन किया गया है, अथवा यहाँ रूपक है जिसका प्रकृत में उपयोग विवक्षित नहीं है ॥ ३ ॥

**श्रीविद्यारहस्यार्थ**—अविद्यारूप अन्धकारमय महासागर में, हे भगवति! आप प्रकाशमय द्वीप हैं, अनन्त सूर्य रूप से आप प्रकाश देने वाली हैं; आप जीवों के मन में विज्ञान-ज्योति जगाने वाली हैं। रस-रहित शून्य एवं जड़रूप ऊसर में आप रसमय पुष्प तथा पराग अर्थात् मधु का झरना हैं; आपकी दया से ही शुष्क जीवन-क्षेत्र आप्यायित हो, शान्ति की सुरम्य छाया का अनुभव करता है। आप दरिद्रों के लिए चिन्तामणि की दिव्य माला हैं। हे भगवति! वराह-रूप हरि ने महान्धकार-सागर में डूबती हुई पृथ्वी को जिस प्रकार अपने दन्ताग्र-भाग में धारण कर हिरण्याक्ष को मार कर डूबते हुए विश्वजीवों का संरक्षण किया था, उसी प्रकार इस जन्म-मरणरूप महाव्याधियुक्त भव-सागर में डूबते हुए संसार के जीवों का आप उध्दार करने वाली हैं। मेरा भी उद्धार कीजिए।

**दारिद्र्यनिवारण यन्त्र**

**विमर्श**—श्री कैवल्याश्रम स्वामी ने इस श्लोक को 'कामराजमातृका' भाव में कहा है तथा 'आदिस्वर' अकार (जिससे यह श्लोक प्रारम्भ होता है) से ईकार की और अ + ई सम्बन्ध से वाग्बीज 'ऐं' की उत्पत्ति बताई है। किसी किसी टीकाकार ने 'मिहिर' शब्द का अर्थ 'द्वादशादित्य' किया है। द्वादश सूर्यों के नाम निम्न हैं—१. धातृ, २. मित्र, ३. अर्यमा, ४. रुद्र, ५. वरुण ६. सूर्य, ७. भग, ८. विवस्वत, ९. पूषा, १०. सवितृ, ११. त्वष्ट्रा और १२. विष्णु।

**तृतीय श्लोकस्थ वर्ण बीज 'अ' का ध्यान**—

**अ**— केतकीपुष्पगर्भाभां द्विभुजां हंसलोचनाम्।
शुक्लपट्टाम्बरधरां पद्ममालविभूषिताम् ॥
चतुर्वर्गप्रदां नित्यं नित्यानन्दमयीं पराम्।
वराभयकरां देवीं नागपाशसमन्विताम् ॥

शृणु तत्त्वमकारस्य अतिगोप्यं वरानने ।
शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा ॥
पञ्चदेवमयं वर्णं शक्तिद्वयसमन्वितम् ।
निर्गुणं सगुणोपेतं स्वयं कैवल्यमूर्तिमान् ।
बिन्दुद्वयमयं वर्णं स्वयं प्रकृतिरूपिणी ॥

**बीजाक्षर**—'अ', जप—१०००, जप-स्थान—मूलाधार चक्र; होम—रक्तपुष्प, बिल्व; तिल, यव तथा घृत से १०० अथवा १०, मार्जन—१०; तर्पण—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—१; पूजायन्त्र—त्रिकोण उसके मध्य में 'श्रीं' ।

**त्वदन्यः पाणिभ्यामभयवरदो दैवतगणः**
**त्वमेका नैवासि प्रकटितवराभीत्यभिनया ।**
**भयात्त्रातुं दातुं फलमपि च वाञ्छासमधिकं**
**शरण्ये लोकानां तव हि चरणावेव निपुणौ ॥ ४ ॥**

**लक्ष्मीधरा**—**त्वत्** भवत्याः सकाशात्, **अन्यः** इतरः, **पाणिभ्यां** हस्ताभ्यां **अभयवरदः** अभयं भयराहित्यं, भयात् त्राणमिति यावत्, वरः इष्टार्थः, तौ ददातीति अभयवरदः, एकेन हस्तेन अभयदः अन्येन वरद इत्यर्थः । **दैवतगणः** देवता एव दैवतानि, विनयादित्वात् स्वार्थे अण्, 'स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते', तथा चेतनैव चैतन्यमिति । तेषां गणः इन्द्रादयः आदित्यादयश्च गणदेवताः । **त्वं** भवती, **एका** मुख्या, एकसंख्यासंख्येया वा, **नैवासि** न भवस्येव । **प्रकटितवराभीत्यभिनया**—प्रकटितः प्रकाशितः, हस्ताभ्यामिति शेषः, वरः इष्टार्थः अभीतिः अभयं **भयात्** त्राणं, तयोरभिनयः अभिव्यञ्जनं यस्याः सा तथोक्ता । हस्ताभ्याम् अभयवरप्रदानं सर्वदैवतसाधारणमिति अस्याः असाधारणं अभयवरप्रदानप्रकारमाह—**भयात् त्रातुं** संसाराद्रक्षितुं, दातुं फलं वाञ्छितार्थानुरूपं, अपि च समुच्चये, **वाञ्छासमधिकं** वाञ्छायाः कामनायाः सम्यगधिकं, कामितार्थादधिकमित्यर्थः । शरण्ये शरणार्हे लोकानां चतुर्दशभुवनानाम् । तव भवत्याः । हिशब्दः इत्यर्थे, इति सञ्चिन्त्येत्यर्थः । **चरणौ** पादौ । एवकारः अवधारणे । **निपुणौ** समर्थौ ॥

**अत्रेत्थं पदयोजना**—हे भगवति ! लोकानां शरण्ये ! त्वदन्यो दैवतगणः पाणिभ्यामभयवरदः । एका त्वं पाणिभ्यां प्रकटितवराभीत्यभिनया नैवासि हि । इति संचिन्त्य तव चरणावेव भयात् त्रातुं वाञ्छासमधिकं फलमपि च दातुं निपुणौ ॥

**अयं भावः**—हस्ताभ्यामभयवरदानं सर्वसाधारणमिति कृत्वा त्वच्चरणावेव तादृशाभयवरप्रदाने स्वयमेव व्यापृतौ । अतस्तव न कर्त्तव्यं हस्ताभ्यामभयवरप्रदानं, प्रयोजनाभावात्, सर्वसाधारण्यप्रसङ्गात्, लोकैकशरण्यत्वव्याघाताच्चेत्युपदेश इति ।

अत्र व्यतिरेकालङ्कारः स्पष्टः । वाक्यलिङ्गकः काव्यलिङ्गालङ्कारोऽपि स्पष्टः । तयोरङ्गाङ्गिभावेन सङ्करः ॥ ४ ॥

## * सरला *

**त्वदन्य इति । त्वत्** आप के संसर्ग से, **अन्यः** इतर, **पाणिभ्यां** दोनों हाथों से, **अभयवरदः** अभय अर्थात् भय से रहित करना, अथवा भय से रक्षा करना, **वरः** अर्थात्

वाञ्छित वस्तु जो उन दोनों को प्रदान करे अर्थात् एक हाथ से अभय प्रदान करना और दूसरे हाथ से वर देना । **दैवतगणः** देवता एव दैवतानि । विनयादिगण में पठित होने से दैवत प्रयोग अण् प्रत्यय से निष्पन्न हुआ है । 'स्वार्थिक प्रत्ययों में लिंग और वचन का व्यत्यय हो जाता है' इस नियम से दैवत प्रयोग निष्पन्न हुआ । जैसे 'चेतनैव चैतन्यम्' । उनका गण इन्द्रादि अथवा आदित्यादि गणदेवता हैं । **त्वं** आप, **एका** मुख्य रूप से, वहाँ एक पद संख्यावाचक अथवा असंख्येयवाचक है । **नैवासि** नहीं हो । **प्रकटितवराभीत्यभिनया** प्रकटित अर्थात् प्रकाशित करने वाली अर्थात् दोनों हाथों से वर देने वाली; अभीतिः अर्थात् भय से रक्षा, उन दोनों के अभिनय का अभिव्यञ्जन है जिसका वह प्रकटितवराभीत्यभिनया । दोनों हाथों से वर देना तथा अभय देना यह कार्य सभी साधारण देवताओं का है किन्तु अब इन भगवती का असाधारण अभय एवं वर प्रदान रूप प्रकार कहते हैं । **भयात् त्रातुं** संसार की रक्षा के लिये तथा, **दातुं फलं** वाञ्छितार्थानुरूप फल देने के लिये, **अपि च** समुच्चय अर्थ में **वाञ्छासमधिकं** कामना से अधिक, चाहे हुये से भी अधिक । **शरण्ये** शरण देने की योग्यता वाली, **लोकानां** १४ भुवनों के, **तव** आपके, **हि** शब्द का अर्थ है ऐसा सोचकर, **चरणौ** दोनों पैर, **एवं** एवकार का अर्थ है निश्चित रूप से, **निपुणौ** समर्थ हैं ।

**पदयोजना का अर्थ**—हे भगवति ! आपका अनुग्रह प्राप्त कर ही अन्य दैवता गण हाथों के द्वारा एक हाथ से वर तथा दूसरे हाथ से अभय देने का अभिनय करते हैं । किन्तु केवल एक आप ही मुख्य रूप से हाथों द्वारा वर तथा अभय प्रदान का अभिनय नहीं करती हो । यही विचार कर आपके दोनों चरण ही भक्तों को भय से रक्षा चाहने से भी अधिक फल देने में समर्थ हैं ।

इस श्लोक का **यह भाव है**—अपने हाथ से वर देना तथा अभय प्रदान करना यह सर्वसाधारण नियम है—ऐसा सोच कर आपके दोनों चरण उस प्रकार के वर तथा अभय प्रदान करने में स्वयं समर्थ हो गये । इसलिये आपको हाथ से वर और अभय देने की आवश्यकता ही नहीं पड़ती और उनका कोई प्रयोजन भी नहीं रहा क्योंकि ऐसा करने से सर्वसाधारणता आ जायगी और संसार के एक मात्र शरण्यत्व का व्याघात भी हो जायगा—इस श्लोक से इस प्रकार का उपदेश है ।

यहाँ व्यतिरेकालङ्कार स्पष्ट है तथा वाक्य की पदार्थता स्पष्ट करने के कारण काव्यलिङ्ग भी हैं और दोनों का अङ्गाङ्गिभाव होने से संकर भी है ॥ ४ ॥

**श्रीविद्यारहस्यार्थ**—हे मातः! समस्त विश्व आपके चरण-रज (गत्यात्मकता रूप भाव) से उत्पन्न हुआ है । समस्त देवता भी उसी दिव्य चरण-रज से उत्पन्न हुए हैं । समस्त देव संसार के भयातुर शरणागतों को वर एवं अभय देने वाले हैं । आप श्रीभगवती के तो चारों हाथ पाशांकुश, इक्षु, चाप, बाणादि से अलंकृत हैं । विश्वत्रिताप से भयभीत शरणागतों को वर एवं अभय देने के लिए आप श्रीभगवती का एक भी हाथ रिक्त नहीं है और फिर आवश्यकता ही क्या है? आपके श्रीचरणकमल अन्य देवताओं द्वारा प्रदत्त वर एवं अभय से भी अधिक फल प्रदान कर रहे हैं । जिन पूज्य चरण कमलों के रजःकण से अनन्त विश्व की सृष्टि हुई है, वे श्रीचरण अनन्तानन्त विश्व-जीवों के कल्याण करने में स्वयं समर्थ हैं । भाव यह है कि जब आप श्रीभगवती के चरण-कमल भक्तों को वाञ्छित से अधिक फल दे रहे हैं तब आपको वर एवं अभयहस्त की आवश्यकता ही क्या है?

कोई देवता अपने साधक को भोग-कामादि देता है तो कोई मोक्ष देता है, परन्तु आपके श्रीचरण तो चतुर्वर्ग को देने वाले हैं।

**ध्यान**—त्व = त् + व। **श्लोकस्थ वर्ण बीज 'त' का ध्यान—**

चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम्।
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम्॥
नानाऽलङ्कारभूषां तां सर्वसिद्धिप्रदायिनीम्।
एवं ध्यात्वा तकारं तु मन्त्ररूपं सदा यजेत्॥
तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा॥
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम्।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम्॥

**'व' बीज का ध्यान** इस प्रकार है—

कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम्।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम्॥
साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम्।
एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत्॥
वकारं चञ्चलापाङ्गि कुण्डलीमोक्षमव्ययम्।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा।
त्रिबिन्दुसहितं मन्त्रमात्मादितत्त्वसंयुतम्॥
पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम्।
चतुर्वर्गप्रदं शान्तं सर्वसिद्धिप्रदायकम्॥

**संकटनिवारण यन्त्र**

**बीजाक्षर**—'त्व'; जप—१०००; जप-स्थान—मूलाधार; होम—रक्तपुष्प, बिल्व, तिल और यवों से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोकपाठसंख्या—१०; श्लोक-पाठ-आहुति—१; पूजायन्त्र—अष्टदल कमल के मध्य में 'दुं' ॥ ४ ॥

**हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीं**
**पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत्।**
**स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा**
**मुनीनामप्यन्तः प्रभवति हि मोहायमहताम्॥ ५ ॥**

**लक्ष्मीधरा**—**हरिः** विष्णुः, **त्वां** भवतीं चक्ररूपिणीं विद्यारूपिणीं च **आराध्य** पूजयित्वा जपित्वा ध्यात्वा च। अत एव त्रिपुरसुन्दरीप्रस्तारभेदेषु एकस्य प्रस्तारस्य ऋषिः विष्णुः। ऋषिर्नाम वेदस्थितो मन्त्रो येन दृष्टः स इति। अत एवाहुः 'दर्शनादृषिः' (सर्वानुक्रमणी) इति। इयं पञ्चदशाक्षरी विद्या ऋग्वेदे आम्नाता 'चत्वार ईं बिभ्रति क्षेमयन्तः' (ऋ. ५.४७.४) इत्यादौ। न चात्र ईंकारत्रयं, हल्लेखात्रयस्यैव श्रुतत्त्वात्, इति वाच्यम्। षोडशकलात्मकस्य श्रीबीजस्य गुरुसम्प्रदायवशाद् विज्ञेयस्य स्थितत्वात् चतुर्णामींकाराणां सिद्धेः मूलविद्यायाः वेदस्थितत्वं सिद्धम्।

अत्र केचित्तु कुलसमयाचाराभिज्ञाः 'चत्वार ईं बिभ्रति क्षेमयन्तः' इत्यादिश्रुतिबोधिताश्चत्वार ईंकाराः ईकारेण सार्धं हृल्लेखात्रयमित्याहुः । तन्न, ईकारस्य ईंकारत्वोक्तेरयुक्तत्वात्, मूलविद्यायाः षोडशवर्णात्मकत्वात्, षोडशवर्णात्मकत्वं च षोडशनित्याप्रकृतिभूतत्वात् मूलविद्यायाः । एतच्च 'चतुष्षष्ट्या तन्त्रैः' (३१) इति 'शिवः शक्तिः कामः' (३२) इति च श्लोकद्वयव्याख्यानावसरे निपुणतरमुपपादयिष्यामः । किञ्चास्य मन्त्रस्य वेदमूलत्वं संज्ञानानुवाकेन (तै.ब्रा. ३.१०.१) 'इयं वाव सरघा' (तै.ब्रा. ३.१०.१०) इत्यनुवाकेन च प्रतिपाद्यत इति वक्ष्यते ॥

प्रकृतमनुसरामः—**प्रणतजनसौभाग्यजननीं**, प्रकर्षेण नताः प्रणताः कायिकवाचिकमानसिकनमस्कारवन्तः जनाः भक्तलोकाः, तेषां सौभाग्यस्य जननी प्रसवित्री तां; पुरा पूर्वं **नारी** कान्ता **भूत्वा** नारीरूपं धृत्वा, **पुररिपुं** त्रिपुरान्तकम् । **अपि**शब्दो जितेन्द्रियत्व सम्भावयति । **क्षोभं** मनोविकारं, **अनयत्** नयति स्म । 'गतिबुद्धि' इत्यादिसूत्रेण द्विकर्मकत्वम् । **स्मरोऽपि** मन्मथोऽपि । **अपि**शब्दः पूर्वोक्तविष्णुधर्मं समुच्चिनोति । यथा विष्णुर्भवन्मन्त्रस्य ऋषिः, एवं स्मरोऽपि । **त्वां** भवतीं, **नत्वा** शरणमुपगम्य, श्रीचक्रं सम्यगभ्यर्च्य, त्वन्मूलविद्यां सम्यगभ्यस्य, त्वत्प्रभावापन्नसत्त्वः रतिनयनलेह्येन रतेः स्वपत्न्याः नयनाभ्यां लेह्येन लेहनार्हेण, रतिनयनैकदृश्येनेत्यर्थः । यद्वा—रतिर्नाम अतिसुन्दरी, तस्याः नयनपेयेन इत्यतिसौन्दर्यं कामदेहस्येति । **वपुषा** देहेन । **मुनीनां** जितेन्द्रियाणाम् । **अपि** शब्दः सम्भावनायाम् । **अन्तः** अन्तरङ्गे चित्तवृत्तौ । **प्रभवति** समर्थः । **हिः** प्रसिद्धौ । **मोहाय** शब्दादिविषयवाञ्छोत्पादनाय । **महतां** महात्मनाम् ।

**अत्रेत्थं पदयोजना**—हे भगवति ! प्रणतजनसौभाग्यजननीं त्वां हरिराराध्य पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत् । स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा महतां मुनीनामप्यन्तर्मोहाय प्रभवति हि ।

पुरा किल नारायणः स्त्रीरूपधारी कनकस्वामिनं प्रलोभ्य अवधीत् । तादृशं स्त्रीरूपं शम्भुना प्रार्थितः सन् तस्मै दर्शयित्वा तं व्यामोहयामासेति कथा अनुसन्धेया । मन्मथोऽपि सकलमुनिमनस्संक्षोभं कुर्वाणः प्रवर्तते । अतश्च **वामकेश्वरमहातन्त्रे चतुःशत्यां** निरूपितम्—

> **'एतामेव पुराऽऽराध्य विद्यां त्रैलोक्यमोहिनीम् ।**
> **त्रैलोक्यं मोहयामास कामारिं भगवान् हरिः ॥**
> **कामदेवोऽपि देवेशीं देवीं त्रिपुरसुन्दरीम् ।**
> **समाराध्याभवल्लोके सर्वसौभाग्यसुन्दरः ॥** इति' ॥

अतश्च यत्र यत्र रतिमूलकं मनस्संक्षोभकरणं भवति तत्तद्भगवतीप्रसादलभ्यमिति वक्तुं कवेरयमारम्भः ॥ ५ ॥

### * सरला *

**हरिः** विष्णु, **त्वां** आपको अर्थात् विद्यास्वरूपिणी तथा चक्रस्वरूपिणी आपको, **आराध्य** पूजा कर जप कर और ध्यान कर । इसीलिये त्रिपुरसुन्दरी के प्रस्तार (मन्त्रभेदों) में एक प्रस्तार (मन्त्र) के ऋषि विष्णु भी कहे गये हैं । ऋषि उन्हें कहा जाता है जिन्होंने वेद में कहे गये मन्त्र का साक्षात्कार किया है । इसलिये **'दर्शनादृषिः'** सूत्र **सर्वानुक्रमणी** में कहा गया है । यह पञ्चदशाक्षरी विद्या **ऋग्वेद** में कही गई है 'चत्वार ईं बिभ्रति क्षेमयन्तः' इत्यादि

स्थलों पर। यदि यह कहो कि उस पञ्चदशाक्षरी मन्त्र में तो तीन ही ईंकार कहे गये हैं क्योंकि वहाँ तीन हृल्लेखा (ह्रीं) संश्रुत हैं इसलिए तीन ईकार हैं। षोडश कलात्मक 'श्री बीज' जो गुरुसम्प्रदाय से जाना जाता है उसको ले कर चार ईंकार सिद्ध हो जाता है। इस प्रकार मूल विद्या भी वेदों में वर्णित है यह बात सिद्ध हो जाती है।

यहाँ पर कुलसमयाचार (आन्तरपूजा) के विद्वान् 'चत्वार ईं बिभ्रति क्षेमयन्तः' इत्यादि वेद स्थलों में चार ईंकार अर्थात् एक ईकार और तीन ह्रींकार को लेकर चार ईंकार कहते हैं। किन्तु वह ठीक नहीं है क्योंकि ईकार को ईंकार रूप से बताना अयुक्त है। मूल विद्या षोडश वर्ण वाली ही है। इस मूलविद्या की षोडशवर्णात्मकता 'षोडशनित्या' की प्रकृति ही हैं। यह बात आगे 'चतुःषष्ट्या तन्त्रैः' (द्र० श्लोक ३१) शिवः शक्तिः (द्र० श्लोक ३२) इन दोनों श्लोकों की व्याख्या के समय ठीक तरह से उपपादन करेंगे। इतना ही नहीं इस मन्त्र की वेदमूलकता 'इयं वाव सरघा' तै० ब्राह्मण के इस संज्ञान अनुवाक से भी प्रतिपादित है यह बात भी आगे स्पष्ट करेंगे।

अब प्रकृत श्लोक की व्याख्या का अनुसरण करते हैं—**प्रणतजनसौभाग्यजननीं** प्रकर्ष रूप से नम्र लोगों को प्रणत कहते हैं जिसका अर्थ है कायिक, वाचिक तथा मानसिक नमस्कार करने वाले भक्तजन उनके सौभाग्य की जननी उन भगवती को, **पुरा** पूर्व में, **नारी** कान्ता, **भूत्वा** नारीरूप, **पुररिपुं** त्रिपुरान्तक सदाशिव को, **अपि** शब्द शिव की जितेन्द्रियता को व्यक्त करने वाला है। **क्षोभं** मनोविकारों को, **अनयत्** प्राप्त कराया। यह नाम धातु 'गतिबुद्धि' इस सूत्र से द्विकर्मक है। **स्मरोऽपि** मन्मथ भी, **अपि** शब्द पूर्वोक्त विष्णु के नारी बनने का भी निर्देश करता है। हे भगवति ! जिस प्रकार विष्णु आपके मन्त्र के ऋषि (द्रष्टा) हैं उसी प्रकार कामदेव भी आप के मन्त्र के द्रष्टा हैं, **त्वां** आप को, **नत्वा** शरणागत होकर श्री चक्र की सम्यक् उपासना कर, अथवा आपकी मूलविद्या का अभ्यास कर आपके प्रभाव से बल तेज एवं वीर्य प्राप्त कर, **रतिनयनलेह्येन** अपनी पत्नी रति के नेत्रों से लेह्य दृश्यमान अर्थात् रतिनयनैकदृश्य अथवा रति अत्यन्तसुन्दरी उसके नयनों से पीने के योग्य। इससे कामदेव देह की अत्यन्त सुन्दरता व्यक्त की गई है। **वपुषा** देह से, **मुनीनां** बड़े बड़े जितेन्द्रियों के भी **अपि** शब्द सम्भावनार्थक है। **अन्तः** अन्तःकरण अथवा चित्तवृत्ति में **प्रभवति** समर्थ है। **हि** प्रसिद्धि के अर्थ में, **मोहाय** शब्दादि विषयों की इच्छा उत्पन्न करने के लिये, **महतां** महात्माओं के मन को मोहित कर देते हैं।

**पदयोजना का अर्थ**—हे भगवति ! प्रणाम करने वाले अपने भक्तों पर आप सौभाग्य को प्रगट करने वाली हैं। भगवान् विष्णु ने आपकी आराधना कर पूर्वकाल में स्त्री का रूप धारण कर अत्यन्त जितेन्द्रिय शिव के मन में भी विकार उत्पन्न कर दिया। बहुत क्या? कामदेव भी आपको नमस्कार कर रति के नेत्रों द्वारा अथवा अत्यन्त सुन्दरियों के द्वारा नेत्रों से सकाम देखे जाने वाले अपने शरीर से अत्यन्त जितेन्द्रिय महा मुनियों के भी मन को मोहित कर देते हैं।

पूर्वकाल में भगवान् नारायण ने स्त्री रूप धारण कर कनक स्वामी (= भस्मासुर) को मोहित कर उनका वध कर डाला। सदाशिव द्वारा प्रार्थना किये जाने पर उसी रूप को धारण कर उन्होंने सदाशिव को भी मोहित कर लिया। यह कथा जिज्ञासुओं के लिये अनुसन्धातव्य

है। किं बहुना? कामदेव भी समस्त मुनियों के मन को क्षुब्ध करता हुआ प्रवृत्त होता है। इस बात को वामकेश्वरतन्त्र के 'चतुःशती' में इस प्रकार प्रतिपादन किया गया है—

भगवान् विष्णु ने पूर्वकाल में त्रैलोक्य को मोहन करने वाली इन्हीं महाविद्या की आराधना कर त्रिलोकी को मोहित कर लिया। कामदेव भी इन्हीं देवेशी त्रिपुरसुन्दरी की आराधना कर लोक में सौभाग्यसुन्दर बन गए।

इससे यह सिद्ध हुआ कि जहाँ जहाँ रतिमूलक 'मनःसंक्षोभ' होता है वह सब भगवती की प्रसन्नता से उत्पन्न होता है। यही कहने के लिये कवि ने इस श्लोक का उपक्रम किया है ॥ ५ ॥

**श्रीविद्यारहस्यार्थ**—हे प्रणतजन-सौभाग्य-जननि, हे भगवति! आपके इस दिव्य महापञ्चदशाक्षरी (हसकलह्रीं ...) श्री स्वरूप श्रीविद्या की आराधना के प्रभाव से प्राचीन काल में विष्णु स्त्री-रूप धारण कर महापुरुष भगवान् शिव को क्षोभित (मोहित) करने में समर्थ हुए थे। आपके इस महामन्त्र की आराधना से भगवान् मन्मथ श्रीरतिनाथ कामदेव रतिनेत्र-चुम्बनयुक्त मनोहारिणी शक्ति से बड़े-बड़े तपस्वी महामुनियों के मन में काम विकार जगा कर उन्हे मोहित कर देते हैं।

**विमर्श**—टीकाकारों ने इस श्लोक में साध्य सिद्धासन विद्या का संकेत किया है। क्लीं ब्लें (ब्लें; चतुरासन न्यास का चतुर्थ भाग)—हरि में से हर, स्मर कामबीज क्लीं, जननी—ईं, लेह्य का ल, मुनि का ँ, आदि लिया गया है।

**ध्यान—ह—श्लोकस्थ वर्णबीज 'ह' का ध्यान—**

चतुर्भुजां रक्तवर्णां शुक्लाम्बरविभूषिताम्।
रक्तालङ्कारसंयुक्तां वरदां पद्मलोचनाम् ॥
ईषद्धास्यमुखीं लोलां रक्तचन्दनचर्चिताम्।
स्याद्दात्रीं च चतुर्वर्गप्रदां सौम्यां मनोहराम् ॥
गन्धर्वसिद्धदेवाद्यैर्ध्यातामाद्यां सुरेश्वरीम्।
एवं ध्यात्वा हकारं तु तन्मन्त्रं दशधा जपेत् ॥
हकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम्।
कुण्डलीद्वयसंयुक्तं रक्तविद्युल्लतोपमम् ॥
रजस्सत्वतमोयुक्तं पञ्चदेवमयं सदा।
पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा ॥
त्रिबिन्दुसहितं वर्णं हृदि भावय पार्वति।
ऊर्ध्वादाकुञ्चिता मध्ये कुण्डलीत्वगता त्वधः ॥
ऊर्ध्वं गता पुनस्सैव तासु ब्रह्मादयः क्रमात् ॥

**सम्मोहन यन्त्र**

| शं | लं | रं |
|---|---|---|
| सं | ठँ | हं |
| यं | वं | षं |

**बीजाक्षर**—'ह'; जप—१०००; जप-स्थान—मूलाधार चक्र; होम—रक्तपुष्प, बिल्व, तिल, यव तथा घृत से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोकपाठसंख्या—१०; श्लोकपाठ आहुति—१; पूजनयन्त्र—चतुः त्रिशूल के मध्य में 'ठँ' ॥ ५ ॥

यद्यपि पूर्वस्मिन् श्लोके भगवतीप्रसादासादितं मन्मथस्य प्रागल्भ्यमुक्तम्, तथापि मन्मथस्य अनङ्गविद्यायां मन्मथप्रस्तारस्य ऋषित्वात् तदायत्तमतिप्रागल्भ्यमाह—

**धनुः पौष्पं मौर्वी मधुकरमयी पञ्च विशिखाः**
**वसन्तः सामन्तो मलयमरुदायोधनरथः ।**
**तथाप्येकः सर्वं हिमगिरिसुते कामपि कृपां**
**अपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥ ६ ॥**

**लक्ष्मीधरा**—अत्र पद्ये यत्तदोरध्याहारः । उभयाध्याहारः सकलकविसमयसिद्धः । यथा रघुवंशे—'वागर्थाविव सम्पृक्तौ' इत्यत्र यौ संपृक्तौ तौ वन्दे इति । यथा 'ये नाम केचिदिह नः प्रथयन्त्यवज्ञाम्' (भवभूति मालतीमाधव) इत्यादौ य उत्पत्स्यते तं प्रत्येष यत्न इति । **धनुः** आयोधनसाधनं चापः **पौष्पं** पुष्पमयम् । पुष्पाणामतिमृदुलत्वात् स्पर्शासहत्वात् नमनाकर्षणादिचापकार्यानर्हत्वमिति तात्पर्यम् । **मौर्वी** शिञ्जिनी, **मधुकरमयी** मधुकरैः भ्रमरैः प्रचुरा, भ्रमरपङ्क्तिनिर्मितेत्यर्थः । परस्परासम्बद्धानां शिञ्जिनीत्वं न सङ्गच्छत इति तात्पर्यम् । **पञ्च** पञ्चसङ्ख्यासङ्ख्ययाः, **विशिकाः** बाणाः । पञ्चानां विक्षेपणे तूष्णीम्भाव एव शरणमिति तात्पर्यम् । किञ्च—'पञ्च विशिखाः' इत्यनेन तद्विशिखानां प्रसूनात्मकत्वप्रसिद्धेः विशिखकार्यकारित्वाभाव इति तात्पर्यम् । **वसन्तः** कालविशेषः 'वसन्तो मधुमाधवौ इत्यभिधानात् । **सामन्तः** सचिवः । तस्य कालात्मकत्वात् साचिव्यकारित्वं न सङ्गच्छत इति तात्पर्यम् । **मलयमरुत्** दक्षिणानिलः **आयोधनरथः** आयोधनस्य युद्धस्य साधनं स्यन्दनः । मलयमरुतो मलये स्थितत्वात् न सार्वत्रिकत्वम्, सार्वत्रिकत्वेऽपि न सर्वदा सद्भावः, सर्वदा सद्भावेऽपि नीरूपत्वाद्रथकार्यकारित्त्वाभाव इति तात्पर्यम् । **तथापि** उक्तप्रकारे सार्वजनीने सिद्धेऽपि **एकः** असहायशूरः **सर्वं** सकलं प्रपञ्चम् । **हिमगिरिसुते** हिमप्रधानो गिरिः हिमगिरिः, शाकपार्थिवादित्वात्साधुः, तस्य सुता नन्दिनी, तस्याः सम्बुद्धिः । **कां** अनिर्वाच्याम् । **अपि** शब्दः सम्भावनायाम् कृपां अनुकम्पाम् । अपाङ्गात् कटाक्षात्, **ते** तव, **लब्ध्वा** प्राप्य । जगत् जङ्गमात्मकं लोकं, स्थावरात्मकस्याप्रसक्तेः । इदं परिदृश्यमानम् । **अनङ्गः** अङ्गरहितः । अत्र साधकस्यापि दौर्बल्यं सूचितम् । हस्ताभावादेव चापाकर्षणशरसन्धाने अप्यसम्भाविते । पादाभावाच्च रथादौ स्थितिरप्यसम्भाविता । वक्त्रनयनाद्यभावात् वयस्येन मधुना सार्धं सम्भाषणसन्निरीक्षणसहासनादयः असम्भाव्या इति तात्पर्यम् । **विजयते**, 'विपराभ्यां जेः' इत्यात्मनेपदम् ॥

**अत्रेत्थं पदयोजना**—हे हिमगिरिसुते ! यस्यानङ्गस्य धनुः पौष्पं, मौर्वी मधुकरमयी, विशिखाः पञ्च, सामन्तो वसन्तः, आयोधनरथः मलयमरुत्, तथाऽपि सोऽनङ्गः एकः ते अपाङ्गात् कामपि कृपां लब्ध्वा सर्वमिदं जगत् विजयते ।

अत्र विभावनालङ्कारः, विजयसाधनाभावेऽपि विजयोत्पत्तेः । 'कारणेन बिना कार्योत्पत्तिर्विभावना' इति लक्षणम् ॥ ६ ॥

## * सरला *

यद्यपि पहले श्लोक (५) में भगवती की कृपा से कामदेव को इस प्रकार का प्रागल्भ्य प्राप्त करना बताया गया है फिर भी मन्मथ के अनङ्ग हो जाने पर उसके मन्मथ प्रस्तार के

ऋषि होने से उसमें होने वाले बुद्धि के वैलक्षण्य को अब इस छठें श्लोक में कह रहे हैं—

इस पद्य में यत् तद् का अध्याहार है। यह दोनों अध्याहार समस्त कवियों के सम्प्रदाय परम्परा में प्रसिद्ध हैं। जैसे रघुवंश में 'वागर्थाविव सम्पृक्तौ' इस श्लोक में 'यौ संपृक्तौ तौ वन्दे'। तथा 'ये नाम केचिदिह न प्रथयन्त्यवज्ञां' यहाँ 'यः उत्पत्स्यते तं प्रति एष यत्नः न' यहाँ पर यद् तद् का अध्याहार है। **धनुः** युद्ध का साधनभूत चाप, **पौष्पं** पुष्प विकारों से निष्पन्न 'पुष्पमय' कूलारपुष्प अत्यन्त कोमल तथा स्पर्शसहन करने में असमर्थ होने से नमन आकर्षणादि चाप कार्य के अयोग्य होने पर भी, **मौर्वी** शिञ्जिनी (डोरी), **मधुकरमयी** बहुत मधुकरों के समूह वाली भ्रमरपंक्तियों से निर्मित जो परस्पर असम्बद्ध होने से डोरी के काम के योग्य नहीं होती। **पञ्च** पाँच संख्या से युक्त संख्येय, **विशिखा** बाण पाँचों को एक चलाने में सर्वथा मौन का आलम्बन लेने वाला और भी पञ्चविशिखा का तात्पर्य यह है कि ये पाँचों बाण पुष्पात्मक हैं जिनसे बाण का कार्य होना कदापि सम्भव नहीं। **वसन्तः** कालविशेष बसन्त मधु और माधव (चैत्र और वैशाख) नामक मासात्मक कालरूप है। **सामन्तः** सचिव, उसके कालात्मक होने से उसमें साचिव्यकारिता संगत नहीं होती। **मलयमरुत्** दक्षिण दिशा से चलने वाला वायु **आयोधनरथः** युद्ध का साधनभूत रथ। मलयमरुत मलय पर्वत पर ही स्थित है वह सार्वत्रिक हो ही नहीं सकता यदि मान भी लें कि वह सर्वदा सर्वत्र चलने वाला है तो नीरूप होने से रथ की कार्यकरता नहीं बनती। तथापि उक्त प्रकार से इन सभी उपकरणों के सार्वजनीन होने पर भी एक असहाय शूर, **सर्वं** सारे प्रपञ्च मात्र को, **हिमगिरिसुते** हिमप्रधान गिरि हिमगिरि—'शाकपार्थिवादि गण से सिद्ध होता है उसकी सुता नन्दिनी उसका सम्बोधन है। **काम्** अनिर्वाच्य **अपि** शब्द सम्भावनार्थक है, **कृपां** अनुकम्पा को अपाङ्गात् कटाक्ष से, **ते** आपके, **लब्ध्वा** प्राप्त कर, **जगत्** जङ्गमात्मक लोकों को क्योंकि स्थावरात्मक जगत् को युद्ध में प्रसक्ति ही नहीं होती। **इदं** परिदृश्यमान जगत् को **अनङ्गः** अङ्गरहित, इससे साधक की दुर्बलता कही गई है। क्योंकि हस्त आदि अङ्गावयावों के न होने से चाप का आकर्षण शर का अनुसन्धान भी असम्भव है और पादादि अङ्गों के अभाव से रथ पर बैठना भी सम्भव नहीं हैं। नेत्र मुखादि के अभाव से अपने मित्र मधु के साथ सन्निरीक्षण और सम्भाषण कार्य भी असम्भावित ही हैं **विजयते** जीत लेता है। यहाँ 'विपराभ्यां जे' इस सूत्र से आत्मनेपद हुआ है।

**पदयोजना का अर्थ**—हे हिमगिरिसुते! जिस अनङ्ग (कामदेव) का धनुष पुष्प है, उसकी शिञ्जिनी (डोरी) मधुकरमयी हैं, वाण पाँच हैं सामन्त (= सेनापति), वसन्त हैं युद्ध का रथ मलयमारुत है, फिर भी वह अनङ्ग (अकेले) असहाय होने पर भी आपके कटाक्षों की कोई अनिर्वचनीय (माया रूपी) कृपा प्राप्त कर सारे इस दृश्यमान् जगत् को जीत लेता है।

यहाँ विभावना अलङ्कार है। यहाँ विजय के साधन न होने पर भी सारे जगत् का विजय रूप कार्य उत्पन्न होता है अर्थात् कारण के न रहने पर भी कार्य की उत्पत्ति का होना 'विभावना' अलङ्कार हैं ॥ ६ ॥

**श्रीविद्यारहस्यार्थ**—हे मातः ! आपके कृपा कटाक्ष से एक क्षुद्र भी पूर्ण व्यापक

महाशक्ति बन सकता है। आप ही देखिये, जगद्विजेता श्रीभगवती और महाभैरव भगवान् एवं श्री मकरध्वज को आपकी कृपा से कैसी अद्भुत एवं अमोघ शक्ति प्राप्त हुई है। उन श्रीकामदेव का भ्रमर की प्रत्यञ्चा वाला धनुष पुष्पों से बना हुआ है; केवल पाँच बाण ही द्रोंण में है' अकेला वसंत ही साथी (सेनापति) है; शीतल मन्द मलय-पवन ही युद्ध का रथ है, तो भी अकेले श्रीकामदेव ने इस अखिल विश्व पर विजय प्राप्त की है। हे प्रशान्त महागिरि की शान्तिमयी कन्ये, हे मात: ! यह सब आपके कृपा कटाक्ष का फल है। इसी कारण श्री भगवान् कामदेव 'श्रीविद्या' के प्रस्तार चक्र के स्वामी हैं।

**ध्यान—श्लोकस्थ वर्णबीज 'ध' का ध्यान** इस प्रकार है—

षड्भुजां मेघवर्णां च रक्ताम्बरधरां पराम्।
वरदां शुभदां रम्यां चतुर्वर्गप्रदायिनीम्॥
एवं ध्यात्वा धकारं तु मन्त्रं च दशधा जपेत्।
त्रिकोणरूपरेखायां त्रयो देवा वसन्ति च।
विश्वेश्वरी विश्वमाता विश्वस्यधारिणीति च॥

**सन्तान प्राप्ति यन्त्र**

| क्लीं क्लीं क्लीं |
| --- |
| साध्य नाम |
| क्लीं क्लीं क्लीं |

**बीजाक्षर**—बीजाक्षर—'ह'; जप—१०००; जप-स्थान—मूलाधार चक्र; होम —रक्तपुष्प, बिल्व, तिल, यव तथा घृत से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोक-पाठसंख्या—१०, श्लोकपाठ-आहुति—१।

'सुधासिन्धोर्मध्ये' इत्युत्तरश्लोकोपयोगितया समयिनां चतुर्विधैक्यानुसन्धानमहिम्ना मणिपूरे भगवत्या यादृशं स्फुरति रूपं तादृशं प्रस्तौति—

**क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता**
**परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना।**
**धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः**
**पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका॥ ७॥**

**लक्ष्मीधरा—क्वणत्काञ्चीदामा** शिञ्जन्मणिमेखला। **करिकलभकुम्भस्तननता** करिकलभकुम्भतुल्याभ्यां स्तनाभ्यामीषन्नम्रमध्येत्यर्थः। **परिक्षीणा** कृशा, **मध्ये** अवलग्ने, तनुमध्येत्यर्थः। **परिणतशरच्चन्द्रवदना** परिणतः सम्पूर्णकलः शरदि शरत्काले चन्द्रः इन्दुः तद्वद्वदनं यस्याः सा। **धनुः** चापं, **बाणान्** पुष्पमयान्, **पाशं** दाम, **सृणिम्** अङ्कुशम्। **अपि** शब्दः उक्तमेव समुच्चिनोति। **दधाना** बिभ्रती, **करतलैः** चतुर्भिः हस्ताम्बुजैः। **पुरस्तात्** हृदयकमले, मणिपूरान्निर्गत्येति शेषः। **आस्तां** उपविशतु। **नः** अस्माकम्। **पुरमथितुः** त्रिपुरान्तकस्य। यद्वा—पुराणि त्रीणि वर्णानि त्रिपुराबीजानि मथ्नाति, मथित्वा नवनीतं करोति यस्मिन् रुद्रयामले स रुद्रः पुरमथितेत्युच्यते। **आहोपुरुषिका**—अहोशब्द आश्चर्य-वाची; पुरुषशब्दस्य प्रत्यगात्मवाचिनः अहंशब्दवाच्यत्वं लक्ष्यते; अतः अहो अहम्भावः आहोपुरुषिका, अहङ्कार इति यावत्। रुद्रस्याहङ्काररूपित्वं भगवत्याः 'शिवः शक्त्या' (१) इत्यादिश्लोकव्याख्याने प्रपञ्चितम्, प्रपञ्चयिष्यते च॥

**अत्रेत्थं पदयोजना**—क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता मध्ये परिक्षीणा परि-

णतशरच्चन्द्रवदना धनुः बाणान् पाशं सृणिमपि करतलैः दधाना पुरमथितुराहोपुरुषिका नः पुरस्तादास्ताम् ।

अत्र यद्वक्तव्यं यत्तु 'तवाज्ञाचक्रस्थम्' (३६) इत्यादिश्लोकषट्कव्याख्यानान्ते निपुणतरमुपपादयिष्यते, तत्तत एवावधार्यम् ॥ ७ ॥

## * सरला *

आगे कहे जाने वाले 'सुधासिन्धोर्मध्ये' इस श्लोक (८) में उपयोगी होने से चार प्रकार के वर्णनों का एक रूप होने से (सुधासिन्धोर्मध्ये मणिद्वीपे, नीपोपवनवति, चिन्तामणिगृहे, शिवाकारे मञ्चे) मणिपूर में निवास करने वाली भगवती का जैसा स्वरूप भक्त जनों के लिए ध्यान गम्य है, उसी स्वरूप का वर्णन भगवत्पाद आगे के श्लोक में प्रस्तुत कर रहे हैं—

**क्वणत्काञ्चीदामा**—सशब्दायमानमणि मेखला, **करिकलभकुम्भस्तननता** हाथी के बच्चे के कुम्भ के समान दोनों स्तनों से किञ्चित् झुकी हुई मध्यभाग वाली, **परिक्षीणा** अत्यन्त कृशभाग वाली, **परिणतशरच्चन्द्रवदना** सम्पूर्ण कलाओं से युक्त शरत्कालीन पूर्णमासी के चन्द्रमा के समान मुख वाली, **धनुः** चाप को, **बाणान्** पुष्पमय बाणों को, **पाशं** बाँधने वाली रस्सी, **सृणि** अङ्कुश, **अपि** शब्द समुच्चय वाचक होने से उक्त सभी उपकरणों को दधाना धारण करती हुई, **करतलैः** अपने हस्त कमलों से, **पुरस्तात्** हृदय रूप कमल में अर्थात् मणिपूर से निकल कर, **आस्ताम्** आकर बैठें । **नः** हम लोगों के, **पुरमथितुः** त्रिपुरान्तक भगवान् सदाशिव की, अथवा पुराणि अर्थात् तीन वर्ण वाले त्रिपुरा बीजों को मथ कर नवनीत बनाने वाले हैं जिसमें उस रुद्रयामल में वही रुद्र पुरमथिता कहे जाते है, **आहोपुरुषिका** अहो शब्द आश्चर्य वाचक है पुरुष शब्द प्रत्यगात्मवाचक है, वही अहंपद से वाच्य है । अतः अहो अहं भाव ही आहोपुरुषिका है जिसे अहङ्कार भी कहते हैं । वस्तुतः रुद्र की अहङ्कार स्वरूपा भगवती ही हैं । इस रहस्य को 'शिवः शक्त्या' इस प्रथम श्लोक के व्याख्यान के अवसर में कह दिया गया है और आगे भी इसका व्याख्यान करेंगे ।

**पदयोजना का अर्थ**—कटि तट पर रणरणत्कारमणिमेखलाओं वाली हाथी के बच्चे के कुम्भ के समान ऊँचे ऊँचे स्तनों से किञ्चित् झुकी हुई कृशता युक्त कटि वाली शरत्कालीन पूर्णचन्द्र के समान मुख वाली हाथों में धनुष, बाण, पाश एवं अङ्कुश धारण किये हुये भगवान् सदाशिव की अहङ्कार स्वरूपा भगवती हमारे हृदय प्रदेश में प्रकट रूप से विराजमान रहें ।

यहाँ और जो कहना है उसे आगे 'तवाज्ञाचक्र' आदि छः श्लोकों में (द्र० ३६-४१) उपपादन करेंगे । इसलिये इसका शेष व्याख्यान वहीं से समझना चाहिए ॥ ७ ॥

**श्रीविद्यारहस्यार्थ**—हे मातः ! हे जगदम्बे ! अनेक ब्रह्माण्ड-रूप घुँघरुओं से बनी मधुर शब्दयुक्त यह करधनी आपकी ललित कटि में बँधी हुई है । बाल हाथी के गण्डस्थल के समान मध्य में क्षीण आपके स्तन (विश्वपोषिणी शक्ति) भक्तों को पान कराने के लिये कुछ झुके हुये हैं । आपका श्री मुख अनन्त कोटि शरच्चन्द्र श्री के समान परम शान्तिमय है । आपकी चारों भुजाओं में इक्षु-धनु, पाश, अंकुश तथा बाण दुष्टदमिनी भक्तरक्षिणी आपकी अनिर्वचनीय शोभा को बढ़ा रहे हैं । हे त्रिपुरारि ! महाशिव परमेश्वर पर आवरण डालने वाली महामाया पुरुषिका ! आपकी दया से हमें आपका साक्षात्कार होवे ।

**विमर्श**—भाव यह है कि ब्रह्माण्डमयी कटि-किङ्किणि की मधुर ध्वनि साधकों तथा प्रेमी भक्तों को मायावरण के विचित्र कण्टक युक्त गर्तों से बचने के लिये चेतावनी देने वाली है। भगवती के नीचे के वाम हस्त में भ्रमररूप प्रत्यञ्चा वाला इक्षु-धनु (विवेक एवं बुद्धि) है। १. कमल, २. रक्तकैरव (करवीर), ३. कल्हार, ४. इन्दीवर तथा ५. सहकार पुष्प निर्मित पञ्चबाण हैं। ये पञ्च बाण (पञ्चतन्मात्रा) नीचे के दाहिने हाथ में हैं। ऊपर के वाम कर में पाश अर्थात् मन है। ऊपर के दक्षिण कर में अंकुश अर्थात् बुद्धि है।

इन शस्त्रों का गुप्त भाव तीन प्रकार का है—१ स्थूलभाव (गुणमय), २ सूक्ष्मभाव (मन्त्रमय) और ३ परभाव (वासनामय)। शस्त्रों का गुणमय स्थूल रूप ऊपर श्लोक में वर्णित है। शेष दो रूप इस प्रकार हैं—

**मन्त्रमय सूक्ष्म रूप भाव है**—१. धनुष = स्वाहा ठः ठः, २. पञ्च बाण = द्रां, द्रीं, क्लीं, ब्लूं, सः, ३. अंकुश = क्रों, ४. पाश = ह्रीं।

**वासनामय पररूप भाव है**—१ धनुष = मोक्ष, २ बाण = काम, ३ पाश = अर्थ, ४ अंकुश = धर्म।

**विमर्श**—इस श्लोक के बीज 'क्व' का भाव अत्यन्त रहस्यमय तथा मोक्ष देने वाला है। प्रत्येक प्रकार की आपत्ति से दूर करने वाले इस मन्त्र का २२५ अनुष्ठान-पुरश्चरण सर्वसिद्धियों को देने वाला है। टीकाकारों ने इस श्लोक में से वशीकरण बीज 'ब्लूँ' की उत्पत्ति बताई है। यथा—बाणान् में से 'ब', करतल में से 'ल', पुरमथितुः में से 'उ' और पाशं में से 'बिन्दु' लिया गया है।

चन्द्र का अर्थ है—अर्द्धमात्रा-बिन्दु और यह बिन्द्वावरण द्वितीया का चन्द्र शिव तथा जगदम्बा के मस्तक पर बताया गया है। बिन्द्वावरण का अर्थ है, जिसमें से बीजमन्त्रों का विस्फुरण हो। यहाँ तृतीय नेत्र का अर्थ है—मूलाग्नि, अर्थात् लयात्मिका पृथकीकरण शक्ति॥ ७॥

**ध्यान**—'क्व' = क् + व। श्लोकस्थ **वर्णबीज 'क' का ध्यान** इस प्रकार है—

जपापावकसिन्दूरसदृशीं कामिनीं पराम्।
चतुर्भुजां त्रिनेत्रां च बाहुवल्लीविराजिताम्॥
कदम्बकोरकाकारः स्तनयुग्मविराजिनाम्।
रत्नकङ्कणकेयूरहारनूपुरभूषिताम् ॥
एवं ककारं ध्यात्वा तु तन्मन्त्रं दशधा जपेत्।
शङ्खकुन्दसमा कीर्तिर्मात्रा साक्षात्सरस्वती॥
कुण्डली चांकुशाकारा कोटिविद्युल्लताऽऽकृतिः।
कोटिचन्द्रप्रतीकाशो मध्ये शून्यः सदाशिवः॥
शून्यगर्भस्थिता काली कैवल्यपददायिनी।
अर्थश्च जायते देवि तथा धर्मश्च नान्यथा॥
आसनं त्रिपुरा देव्याः ककारः पञ्चदैवतः।
ईश्वरो यस्तु देवेशि त्रिकोणे तत्त्वसंस्थितः॥
त्रिकोणमेतत्कथितं योनिमण्डलमुत्तमम्॥

**शत्रु विजय यन्त्र**

| क्लीं |
|---|

कैवल्यं प्रपदे यस्याः कामिनी सा प्रकीर्तिता।
एषा सा कादिविद्या चतुर्वर्गफलप्रदा॥

**श्लोकस्थ 'व' बीज का ध्यान इस प्रकार है—**

कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम्।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम्॥
साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम्।
एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत्॥
वकारं चञ्चलापाङ्गि कुण्डलीमोक्षमव्ययम्।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा।
त्रिबिन्दुसहितं मन्त्रमात्मादितत्त्वसंयुतम्॥
पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम्।
चतुर्वर्गप्रदं शान्तं सर्वसिद्धिप्रदायकम्॥

**बीजाक्षर**—'क', 'व'; जप—१०००; जप-स्थान—मूलाधार चक्र; होम—रक्तपुष्प, बिल्व, तिल, यव तथा घृत से १०० या १०; मार्जन—१०; तर्पण—१०, श्लोकपाठसंख्या—१०; श्लोकपाठ-आहुति—१ ॥ ७ ॥

**सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते**
**मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे।**
**शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां**
**भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम्॥ ८ ॥**

**लक्ष्मीधरा—सुधासिन्धोः** अमृतसमुद्रस्य **मध्ये सुरविटपिवाटीपरिवृते** सुरविटपिनां कल्पवृक्षाणां वाटीभिः झम्पाभिः परिवृते, **मणिद्वीपे** मणिमये अन्तरीपे, **नीपोपवनवति** नीपैः कदम्बैः उपवनवति **चिन्तामणिगृहे** चिन्तामणिविरचिते मन्दिरे **शिवाकारे** शिवात्मके शक्तिरूपे, त्रिकोणे इति यावत्, **मञ्चे** खट्वायां, **परमशिवपर्यङ्कनिलयां** परमशिव एव पर्यङ्कः तल्पं, तत्र निलयः अवस्थितिर्यस्याः तां, **भजन्ति** सेवन्ते, **त्वां** भवतीं, **धन्याः** त्वत्प्रसादवशात् कृतार्थाः, **कतिचन** विरलाः, **चिदानन्दलहरीं** चित् ज्ञानं, तदाकारः आनन्दः निरतिशयसुखं, तस्य लहरीं उत्सेकरूपाम्।

**अत्रेत्थं पदयोजना**—हे भगवति ! सुधासिन्धोः मध्ये सुरविटपिवाटीपरिवृते मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां त्वां चिदानन्दलहरीं कतिचन धन्याः भजन्ति।

**अत्रेदमनुसन्धेयम्**—भगवत्पादाचार्याः समयमतपारदृश्वानः समयाचारप्रवणाः समयरूपां भगवतीं स्तुवन्ति। समयाचारो नाम आन्तरपूजारतिः। कुलाचारो नाम बाह्यपूजारतिरिति रहस्यम्। एतच्च 'तवाधारे मूले सह समयया' (४१) इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः (पृ० १५२)। श्रीचक्रस्य वियच्चक्रमिति नामान्तरमस्ति वियच्चक्रत्वं तु वियत्पूज्यत्वात्। वियत्पूज्यत्वं द्विविधम्—दहराकाशजं बाह्याकाशजं चेति। बाह्याकाशजं नाम बाह्याकाशावकाशे पीठादौ भूर्जपत्रशुद्धपटहेमरजतादिपट्टतले लिखित्वा

समाराधनम् । एतदेव कौलपूजेत्याहुर्वृद्धाः । तदुत्तरत्र स्फोर्यते । दहराकाशजं नाम ह्यदयाकाशावकाशे चक्रस्य पूजनम् । इदमेव समय पूजेत्याहुः समयिनः । एतदप्युत्तरत्र स्फोर्यते । तत्र नवयोनिष्वधः—स्थितशिवात्मकयोनिचतुष्कस्योपरि ऊर्ध्वस्थितशक्त्यात्मकयोनिपञ्चकाधःप्रदेशस्य बैन्दव-स्थानस्य नाम सुधासिन्धुरिति ॥

'बिन्दुस्थानं सुधासिन्धुः पञ्चयोन्यः सुरद्रुमाः ।
तत्रैव नीपश्रेणी च तन्मध्ये मणिमण्डपम् ॥ १ ॥
तत्र चिन्तामणिकृतं देव्या मन्दिरमुत्तमम् ।
शिवात्मके महामञ्चे महेशानोपबर्हणे ॥ २ ॥
अतिरम्यतरे तत्र कशिपुश्च सदाशिवः ।
भृतकाश्च चतुष्पादा महेन्द्रश्च पतद्ग्रहः ॥ ३ ॥
तत्रास्ते परमेशानी महात्रिपुरसुन्दरी ।
शिवार्कमण्डलं भित्त्वा द्रावयन्तीन्दुमण्डलम् ॥ ४ ॥
तदुद्भूतामृतस्यन्दिपरमानन्दनन्दिता ।
कुलयोषित्कुलं त्यक्त्वा परं वर्षणमेत्य सा ॥ ५ ॥'

इति **भैरवयामले** वामकेश्वरमहातन्त्रे बहुरूपाष्टकविद्यायां कथितम् । 'देव्या मन्दिरमुत्तमम्' इत्यस्यार्थः—देवीमन्दिरं त्रयश्चत्वारिंशत् त्रिकोणात्मकं श्रीचक्रमुच्यते । अत उक्तं 'शिवाकारे मञ्चे' इति । त्रिकोणात्मकश्रीचक्रस्य बैन्दवस्थानं प्रत्यङ्गत्वात्, बैन्दवस्थानस्य प्रधानत्वात्, प्रधाने गुणस्यान्तर्भावात् तदन्तर्भाव उक्त इति रहस्यम् । 'भृतकाः' इत्यस्यार्थः—भृतकाः भृत्याः द्रुहिणहरिरुद्रेश्वराः । एतच्च 'गतास्ते मञ्चत्वं द्रुहिण' इत्यादिश्लोकव्याख्यानावसरे वक्ष्यते । 'शिवार्कमण्डलं भित्वा' इत्यस्यार्थः—शिवा नाम शक्तिः कुण्डलिनी अर्कमण्डलं हृत्कमलोपरि स्थितं भित्त्वा भिन्नं कृत्वा अवयुत्य आच्छाद्येत्यर्थः । अर्कमण्डलोपरि स्थितं ब्रह्मद्वारं पिधाय सहस्रकमलान्तस्स्थितमिन्दुमण्डलं दशति द्रावयति । अत एव कुलयोषित् कुण्डलिनीशक्तिः, कुलं कुलमार्गं सुषुम्नामार्गं, त्यक्त्वा तत्रैवेन्दुमण्डले आस्थाय, परं वर्षणं उत्कृष्टवर्षणं, द्विसप्ततिसहस्रनाडीषु प्रवर्षणं, कृत्वेति शेषः । सा कुण्डलिनी पुनः स्वस्थानमेत्य स्वाधिष्ठानं प्राप्य स्वपितीति तात्पर्यम् । शिवादीनां मञ्चत्वोपधानत्वपतद्ग्रहत्वावस्थापन्नत्वं (९२ श्लोके) कामपरूपत्वाद्देवानां अत्यन्तासन्नसेवार्थं घटते । इममेवार्थं संक्षेपेणोक्तवान् सदाशिवः—

सुधाब्धौ नन्दनोद्याने रत्नमण्डपमध्यगाम् ।
बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् ॥ १ ॥
पाशाङ्कुशशरांश्चापं धारयन्तीं शिवां श्रियम् ।
ध्यात्वा च हृद्गतं चक्रं व्रतस्थः परमेश्वरीम् ॥ २ ॥
पूर्वोक्तध्यानयोगेन चिन्तयन् जपमाचरेत् ॥ ३ ॥ इति ॥

अनेन 'क्वणत्काञ्चीदामा' इति 'सुधासिन्धोर्मध्ये' इति च श्लोकद्वयमेकीकृत्य व्याख्यातमित्यवगन्तव्यम् ॥ ८ ॥

## * सरला *

**सुधासिन्धोः** अमृतसमुद्र के मध्य में, **सुरविटपिवाटीपरिवृते मणिद्वीपे** कल्पपृक्षों की

वाटिका से घिरे हुये मणिद्वीप में, **नीपोपवनवति चिन्तामणिगृहे** कदम्ब के उपवनों से युक्त चिन्तामणि निर्मित गृह में, **शिवाकारे मञ्चे** शक्तिरूपात्मक त्रिकोण युक्त खट्वा के ऊपर, **परमशिवपर्यङ्कनिलयां** परमशिव ही पयङ्र्क अर्थात् शय्या का स्थान है जिस भगवती का, **भजन्ति** उनकी सेवा करते हैं, **त्वां** आपकी, **धन्या** आपकी प्रसन्नता प्राप्त कर कृतार्थ रहने वाले, **कतिचन** विरले भक्त ही, **चिदानन्दलहरीं** चिद्ज्ञान तदाकार आनन्द अर्थात् निरतिशयसुख, उसकी लहरी, उसके स्वरूप की सर्वथा कृतार्थ भाग्यवान् भक्त ही सेवा करते हैं।

**पदयोजना का अर्थ**—हे भगवति! सुधासिन्धु के मध्य में कल्पवृक्षों की वाटिका से घिरे हुये मणिद्वीप में, कदम्ब वृक्ष के उपवन से युक्त चिन्तामणि निर्मित गृह में शिवाकार त्रिकोणात्मक खट्वा के ऊपर परमशिव स्वरूप शय्या पर विराजमान आप जैसी ज्ञानानन्द रूप लहरी स्वरूपा जननी की विरले भक्त ही आपकी कृपा प्राप्त करने वाले होते हैं। अतएव सर्वथा कृतार्थ भाग्यवान् भक्त ही सेवा करते हैं।

यहाँ यह विषय समझ लेना चाहिए कि भगवत्पाद शङ्कराचार्य समय मत के ज्ञान से परिपूर्ण थे। अत: वे 'समय' स्वरूपा भगवती की स्तुति करते है। समयाचार अन्त:करण में की जाने वाली पूजा पद्धति को कहते हैं। 'कुलाचार' बाह्य पूजा पद्धति को कहते हैं। इस विषय का प्रतिपादन आगे कहे जाने वाले 'तवाधारे मूले' (द्र० श्लोक० ४१) इस श्लोक की व्याख्या में अच्छी प्रकार से करेंगे। श्री चक्र का दूसरा नाम 'वियच्चक्र' भी है। इसे वियच्चक्र इसलिये कहते हैं कि यह वियत्पूज्य है। वियत्पूज्य चक्र दो प्रकार का है—एक दहराकाश में रहने वाला एवं दूसरा बाह्य आकाश में रहने वाला। बाह्याकाशज वियच्चक्र उसे कहते हैं जो बाह्याकाश पीठादि पर भूर्जपत्र, शुद्ध पट, सुवर्ण निर्मित पट्ट अथवा रजत निर्मित पट्ट पर लिख कर पूजा किया जावे। यही कौलपूजा है ऐसा वृद्ध विद्वज्जन कहते हैं। यह बात आगे स्पष्ट करेंगे। जब हृदयाकाश में स्थापित श्रीचक्र का पूजन किया जावे तब उसे 'दहराकाशज वियच्चक्र' कहते हैं। यही समया पूजन है—ऐसा समय मतवादी आचार्य कहते हैं। यह बात भी आगे चलकर स्पष्ट करेंगे। वहाँ नव योनियो में अध: स्थित चार शिवात्मक योनि के ऊपर स्थित रहने वाली ऊर्ध्वमुखी शक्त्यात्मक पाँच योनियों के अध:प्रदेश में स्थित बैन्दव स्थान का नाम सुधा-सिन्धु है। जैसा कि भैरवयामलतन्त्र में कहा गया है—

'बैन्दव स्थान' का नाम सुधा-सिन्धु है। पाँच योनियाँ कल्पवृक्ष हैं। वही कदम्ब वृक्षों की पङ्क्ति है। उसके मध्य में मणिमय मण्डप हैं। वही चिन्तामणि निर्मित देवी का सर्वोत्तम मन्दिर है। जहाँ त्रिकोणात्मकखट्वा पर महेशात्मक अतिरम्य उपबर्हण स्वरूप सदाशिव शय्या के रूप में स्थित हैं। जहाँ ब्रह्मदेव, विष्णु, रुद्र और ईश्वर—ये चार 'भृतक' चार पाये के रूप में स्थित हैं। वही महात्रिपुरेश्वरी भगवती ईश्वरी महेशानी शिवा सूर्यमण्डल का भेदन कर सहस्रार कमल में जाकर चन्द्रमण्डल को द्रवित कर उससे उत्पन्न हुये अमृत रस को पीकर परमानन्द से परिपूर्ण हो जाती हैं। इस प्रकार कुल योषित् (सुषुम्ना) मार्ग त्याग कर सर्वत्र उस अमृत की वर्षा करती है ॥ १-५ ॥

इस विषय का प्रतिपादन **वामकेश्वर महातन्त्र** के **भैरवयामल** में **बहुरूपाष्टकविद्या** के प्रसङ्ग में कहा गया है। द्वितीय श्लोक के 'देव्या मन्दिरमुत्तमम्' का अर्थ इस प्रकार हैं—४३ कोणात्मक श्रीचक्र को 'देवीमन्दिर' कहा जाता है इसलिए कहा गया है—'शिवाकारे

मञ्चे' इति । यह त्रिकोणात्मक श्रीचक्र बिन्दुस्थान का अङ्ग है । अत: इसमें श्रीचक्र में बिन्दु स्थान ही प्रधान है । प्रधान बिन्दु में श्री चक्र का अन्तर्भाव माना गया है—यही इसका रहस्य है । 'भृतका:' शब्द का अर्थ इस प्रकार है—ब्रह्मा, विष्णु, रुद्र और ईश्वर—ये चार भगवती के भृत्य कहे गये हैं । यह बात आगे चलकर 'गतास्ते मञ्चत्वं' (द्र० श्लो० ९२) इस श्लोक की व्याख्या के अवसर पर कहेंगे । 'शिवार्कमण्डलं भित्त्वा' शब्द का अर्थ इस प्रकार है—शिवा 'शक्ति' को कहते हैं । वही कुण्डलिनी भी कही जाती हैं जो हृदय कमल के ऊपर स्थित सूर्यमण्डल का भेदन कर उसे आच्छादित कर अवस्थित रहती है, अर्थात् सूर्य मण्डल पर स्थित ब्रह्मद्वार को बन्द कर सहस्राकारकमलान्त:स्थित चन्द्रमण्डल को द्रवीभूत करती है । इसीलिये कुलयोषित् अर्थात् कुण्डलिनी शक्ति कुल (कुलमार्ग) सुषुम्ना मार्ग को छोड़कर चन्द्रमण्डल में प्रविष्ट हो कर उत्कृष्ट सुधा वर्षा से शरीर की ७२ हजार नाड़ियों को सींचती हुई पुन: अपने स्थान स्वाधिष्ठानचक्र में आकर सो जाती है । यही 'शिवार्कमण्डलं भित्त्वा' का तात्पर्यार्थ है । शिवादिकों का मञ्चत्व का उपधानत्व ग्रहत्वावस्था के समान है । देवता कामरूप होते ही हैं । इसीलिये ग्रहरूप शरीर से उनके द्वारा भगवती की आसन्नत्वा-वस्था युक्तियुक्त है । इसी बात को सदाशिव ने भी कहा है—

सुधासमुद्र के नन्दनोद्यान में रत्नमण्डप के मध्य में नवीन उदीयमान सूर्य के समान देदीप्यमान कान्ति वाली चार बाहुओं और तीन नेत्रों से संयुक्त पाश, अङ्कुश, बाण तथा धनुष् धारण की हुई शिवास्वरूपा महाश्री का हृदय में ध्यान कर साधक नियमादि से संयुक्त हो जप का अभ्यास करें ॥ १-३ ॥

इससे यह बात स्पष्ट होती है कि 'क्वणत्काञ्चीदामां से भगवती का स्वरूप कहा गया है और 'सुधासिन्धोर्मध्ये' आदि से भगवती का स्थान कहा गया है । अत: इन दोनों श्लोकों की एक में मिलाकर व्याख्या करनी चाहिए ॥ ८ ॥

**श्रीविद्यारहस्यार्थ**—मणिद्वीप के चारों ओर अमृत का समुद्र है । यह समुद्र वायु-सङ्घटन-योग से बहुत प्रकार से दिव्य तरङ्ग वाला है । रत्नमयी एवं दिव्य प्रकाशयुक्त रेती उस समुद्र के किनारे फैली हुई है । उस मणिद्वीप में चार द्वार हैं । वह स्थान अनेक सिद्ध पुरुषों के निवासस्थानों से आवृत है । सहस्त्रों दर्शनातुरों के विमानों की भीड़ वहाँ लगी रहती है । वहाँ के वृक्ष दिव्य मणियों के दिव्य वृक्ष से दीखते हैं । वहाँ बड़ी सुन्दर वाटिका है । वसन्त इस वाटिका का माली है । यहाँ के सब वृक्ष निरन्तर नव फूल-फल-पल्लव से युक्त रहते हैं । वाटिका आनन्दमय दिव्य सुगन्ध से भरी हुई है । पद्ममणि (पन्ना) के समान हरित भूमि में अनेक सुन्दर रसमय अमृतवारि के झरने प्रस्फुरित होकर मधुर झंकार करते हुए धीरे-धीरे बहते हैं । ऐसे बहुत से झरने श्री मणिद्वीप की प्राकृतिक शोभा को बढ़ाते हुए द्रष्टाओं में महाशान्ति उत्पन्न करते हैं । इन झरनों के जलपान से उन दर्शकों का ब्रह्मानन्द-पीयूष गुण-सहित जागता है । शुक एवं मैना आदि पक्षी तत्त्वविज्ञान-चर्चामय मधुर स्वर से मीठी वाणी बोलते हैं । यह उत्तम वन सुगन्धमय नीरोगकर पवन से भरपूर हितानन्दकर है । इस मणिद्वीप के मध्य में कल्पवृक्ष का आराम है । कल्पवृक्ष की डालियाँ सुवर्णमय कान्ति वाली हैं । यह महादिव्य द्वीप दशावरण वाले श्री चक्र के आकार का है । यथा—

अमृतसागर = भूपुर—आधारचक्र में ध्यान
लोह दुर्ग = वृत्तत्रय—स्वाधिष्ठान चक्र में ध्यान

कांस्यदुर्ग = षोडशदल पद्म—मणिपूर चक्र में ध्यान
ताम्रदुर्ग = अष्टदल—अनाहत चक्र में ध्यान
सीसक (प्लेटिनम) दुर्ग = चतुर्दशार—विशुद्ध चक्र में ध्यान
रौप्य दुर्ग = बहिर्दशार—आज्ञाचक्र के अधोभाग में ध्यान
स्वर्णदुर्ग = अन्तर्दशार—आज्ञाचक्र के अधोभाग में ध्यान

सुरविटपवाटी (कल्पवृक्ष वन) = अष्टार—आज्ञाचक्र के ऊर्ध्वभाग में चिन्तामणिगृह = त्रिकोण (मूलयोनि)—सहस्रार के बहिर्भाग में श्री महामाया महाशक्ति-स्थान = बिन्दु—सहस्रार के अन्तर्भाग में ध्यान करे।

**बन्दीविमोक्षण प्रयोग**

**भावार्थ**—श्रीकल्पवृक्ष वन के वृक्षों की सुवर्णमय शाखाओं पर रङ्ग-बिरङ्गे रत्न-समान दिव्य पत्र-पुष्प-फलादि लगे हैं। कल्पवृक्ष की इस महासुगन्धित रम्य वाटिका के मध्य में चिन्तामणि की ईटों से प्रस्तुत महादिव्य महल कोटि बालादित्यों के प्रकाश से प्रकाशमान है। उसके मध्य में शिवाकार-पञ्चस्थ परमशिव-पर्यङ्कासन पर विश्वसुन्दरी पराशक्ति विराजमान है।

हे विश्व का पालन करने वाली माँ! हे चिदानन्दा महाविद्या! हे दिव्यास्तित्व की चिदानन्दमयी दिव्य लहर, हे चिद्स्पन्दकारिणी महागतिशक्ति, क्वचिल्लब्ध वे महापुरुष धन्य हैं, जो सहस्रार के ज्योतिर्मय सुधासिन्धु में पूर्णकामत्व-रूप कल्पवृक्ष-वाटी से घिरे हुए मणिद्वीप में प्रशान्त एकाग्रता की नीरवता के कदम्ब-पवन में कामना-रहित चिन्तामणिगृह में शिवाकार-मञ्च पर परमशिव-पर्यङ्कासनस्था आप श्री भगवती का ध्यान तथा स्मरण करते हैं।

'परमशिवपर्यङ्कनिलयां' शिव-शक्ति की एकात्मता का भाव है—शिवो बिन्दुः शक्तिर्नादः। इस श्लोक में 'क्लीं' बीजाविर्भाव कहा है ॥ ८ ॥

**ध्यान—सु = स् + उ। श्लोकस्थ वर्णबीज सु का ध्यान—**

**स्—** करीषभूषिताङ्गीं च साट्टहासां दिगम्बराम्।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम् ॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम्।
सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम् ॥
एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत्।
सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम्।
कोटिविद्युल्लताकारं कुण्डलीमयसंयुतम् ॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा।
रजसत्वतमोयुक्तं त्रिबिन्दुसहितं सदा ॥

**उ—** पीतवर्णां त्रिनयनां पीताम्बरधरां पराम् ॥
द्विभुजां जटिलां भीमां सर्वसिद्धिप्रदायिनीम्।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
उकारं परमेशानि अधःकुण्डलिनी स्वयम्।

पीतचम्पकसङ्काशं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम् ॥

**प्रयोगविधान**—बीजाक्षर—'सुं' (स् + उ); जप—१०००; जप-स्थान—मूलाधार चक्र; होम—रक्तपुष्प, बिल्व, तिल, यव तथा घृत से १०० या १०; मार्जन—१०; तर्पण—१०, श्लोकपाठसंख्या—१०; श्लोकपाठ-आहुति—१ ॥ ८ ॥

**महीं मूलाधारे कमपि मणिपूरे हुतवहं**
**स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।**
**मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं**
**सहस्रारे पद्मे सह रहसि पत्या विहरसे ॥ ९ ॥**

**लक्ष्मीधरा**—**महीं** पृथिवीतत्त्वं, **मूलाधारे** मूले गुदस्थाने सर्वाधारभूतं चक्रं मूलाधारभूतमिति, तस्मिन् मूलाधारे ।

**सर्वाधारा मही यस्मात् मूलाधारतया स्थिता ।**
**तदभावे तु देहस्य पातः स्यादुद्गमोऽपि वा** ॥ इति रुद्ररहस्ये ।

पृथिवीतत्त्वात्मकस्य मूलाधारस्याभावे देह ऊर्ध्वं वा गच्छेत्, अधो वा पतेदित्यर्थः । **कं** उदकतत्त्वम् । **अपि**शब्दः स्वाधिष्ठानोक्तवह्निं समुच्चिनोति । **मणिपूरे** मणिपूरचक्रे, यत्र स्थिता भगवती मणिभिः तत्प्रदेशं पूरयति, स देशो मणिपूरः । समयिनां आन्तरपूजावसरे तृतीयकमले नानाविधमणिगणखचितभूषणार्पणं देव्याः कर्तव्यमिति रहस्यम् । **हुतवहं** अग्नितत्त्वम्, **स्थितं** प्रतिष्ठितं, **स्वाधिष्ठाने** स्वाधिष्ठाननामके चक्रे, कुण्डलिन्याः भगवत्याः स्वयमधिष्ठाय ग्रन्थिं कृत्वा अवस्थानं स्वाधिष्ठानम् । यथोक्तं **योगदीपिकायाम्**—

**रुद्रग्रन्थिरयं शक्तेः स्वाधिष्ठानाग्रसीमनि** ॥ इति ॥

यद्यपि आधारचक्रस्योपरि स्वाधिष्ठानं वर्णनीयं, तथापि आकाशादितत्त्वोत्पत्तिक्रममवलम्ब्य व्युत्क्रमेण मणिपूरचक्रवर्णनं कृतमित्यनुसन्धेयम् । एतच्च 'तवाज्ञाचक्रस्थम्' (३६ श्लोक) इत्यादिश्लोकषट्कव्याख्यानावसरे सम्यगुपवर्णितम् (पृ० १५०) । **हृदि** हृदयाकाशे अनाहतनामनि चक्रे, अनाहतनादस्थानत्वान् अनाहतनामास्य । **मरुतं** मरुत्तत्त्वम्, **आकाशं** आकाशतत्त्वम्, **उपरि** पूर्वोक्तानामुपरि विशुद्धिचक्रे, शुद्धस्फटिकसङ्काशत्वात् विशुद्धिनामास्य । **मनः** मनस्तत्त्वम्, **अपि**शब्दः उक्तसमुच्चयार्थः **भ्रूमध्ये** भ्रुवोरन्तराले आज्ञाचक्रे, अत्र आङ् ईषदर्थः, ज्ञा ज्ञानम्, ईषद् ज्ञानं यत्र जायते साधकानां भगवतीविषयम् । ब्रह्मग्रन्थिभेदनातिव्यग्रतया भगवत्या आज्ञाचक्रे क्षणमात्रावस्थानात् साधकानां तडिल्लेखारूपेण अवभासनात् आज्ञाचक्रनामास्य । स्थितमिति लिङ्गव्यत्ययेन सर्वत्रानुषज्यते । **सकलं** सर्वम्, **अपिः** समुच्चये, **भित्त्वा** (हित्वा) **कुलपथं** सुषुम्नामार्गम्, **सहस्रारे** सहस्रदले, **पद्मे** कमले, **सह** मिलित्वा, **रहसि** एकान्ते, **पत्या** सदाशिवेन, **विहरसे** क्रीडसे ॥

**अत्रेत्थं पदयोजना**—हे भगवति! मूलाधारे महीं, कं मणिपूरे हुतवहमपि, स्वाधिष्ठाने हुतवहमेव, हृदि मरुतं, आकाशमुपरि, मनोऽपि भ्रूमध्ये आकाशमपि, स्थितमिति लिङ्गव्यत्ययेन सर्वत्रानुषज्यते । सकलं कुलपथमपि भित्त्वा सहस्रारे पद्मे रहसि पत्या सह विहरसे ॥

**अत्रेदमनुसन्धेयम्**—मूलाधारस्वाधिष्ठानमणिपूर-अनाहतविशुद्ध-आज्ञात्मकानि षट्

चक्राणि । एतानि पृथिव्यग्निजलपवनाकाशमनस्तत्त्वात्मकानि । तानि तत्त्वानि तेषु चक्रेषु तन्मात्रतयाऽवस्थितानि । तन्मात्रास्तु गन्धरूपरसस्पर्शशब्दात्मकाः । आज्ञाचक्रस्थितेन मनस्तत्त्वेन एकादशेन्द्रियगणः संगृहीतः । एवमेकविंशतितत्त्वानि प्रतिपादितानि । पत्या सह रहसि सहस्रपत्रे विहरसे इत्यनेन तत्त्वचतुष्टयं सूचितम् । तच्च मायाशुद्धविद्यामहेश्वरसदाशिवात्मकं तत्त्वचतुष्टयम् । एवं मिलित्वा पञ्चविंशतितत्त्वानि मायापर्यन्तानि मायया युक्तत्वात् प्राकृतानि । माया महेश्वरेण संयुक्ता सती तस्य जीवभावमापादयति । स जीवः प्राकृत एव । शुद्धविद्या तु सदाशिवेन युक्ता सती सादाख्या कलेति व्यवह्रियते । अतो भगवती चतुर्विंशतितत्त्वान्यतिक्रान्ता सदाशिवेन पञ्चविंशेन सार्धं विहरमाणा षड्विंशतत्त्वात्मतामापन्ना परमात्मेति गीयते । एतदुक्तं भवति—सादाख्या कला पञ्चविंशेन सदाशिवेन मिलिता षड्विंशा भवति, मेलनस्य तत्त्वान्तरत्वात् । न चोभयोर्मेलनमुभयात्मकम् । तस्य तादात्म्यरूपत्वात् तत्त्वान्तरमेवेति रहस्यम् । यत्तु श्रुतिवाक्यं 'पञ्चविंश आत्मा भवति' (तै. ब्रा. १.२.६) इति तत्तु सदाशिवतत्त्वप्रतिपादनपरम्, न मेलनपरमिति ध्येयम् ॥

ननु बैन्दवस्थानं श्रीचक्रस्य मध्यस्थितं, शिवचक्राणां चतुर्णामुपरि शक्तिचक्राणां पञ्चानामधस्तादवस्थितत्वात्, सहस्रारपद्मस्य तु शिरस्थितत्वात् सर्वेषामुपरि वर्तमानत्वात् तस्य बैन्दस्थानत्वं नोपपद्यत इति चेत्—

निशम्यतां **भागवतमतरहस्यम्**—

चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
शिवशक्तिमयं ज्ञेयं श्रीचक्रं शिवयोर्वपुः ॥

इत्यादौ शक्तिचक्राणि त्रिकोणाष्टकोणदशारद्वितयचतुर्दशकोणात्मकानि पञ्च चक्राणि । शिवचक्राणि तु अष्टदलषोडशदलमेखलात्रितयभूपुरत्रयात्मकानीति । अतः शक्तिचक्राणां बाह्यतः शिवचक्राणि । शिवस्य शक्तिबाह्यत्वायोगात् तानि शिवचक्राणि बिन्दुरूपेणाकृष्य शक्तिचक्रान्तरे स्थापितानि । अत एव बिन्दुः शिवचक्रचतुष्टयात्मकः शक्तिचक्रेषु पञ्चसु व्यश्नुवानः समाप्त इति शिवशक्त्योरैक्यमिति केचित् ।

अन्ये तु—बिन्दुत्रिकोणयोरैक्यं, अष्टकोणाष्टदलाम्बुजयोः, दशारयुग्मषोडशदलाम्बुजयोः, चतुर्दशारभूपुरयोरक्यैम्, अनेन प्रकारेण शिवशक्त्योरैक्यमित्याहुः । अत्र बिन्दुशब्देन शिवचक्रचतुष्टयप्रतिनिधिभूतो वर्तुलाकारो लक्ष्यते, न तु चतुष्कोणमध्यवर्ती बिन्दुः । स तु सहस्रकमलान्तर्गतः आधारस्वाधिष्ठान दशदलप्रकृतिभूतः शिवशक्तिमेलनाविष्टतनुः सादाख्यं षड्विंशं तत्त्वम् । तेन सह नादबिन्दुकलानामैक्यं नास्ति, तस्य नादबिन्दुकलातीतत्वात् । एतच्च पुरस्तात्प्रपञ्चयिष्यते । अत एव सहस्रकमलान्तर्गतचन्द्रमण्डलमध्यवर्ती सुधासिन्धुरेव भगवत्या विहरणस्थानमिति 'सहस्रारे पद्मे सह रहसि पत्या विहरसे ।' इति 'सुधासिन्धोर्मध्ये' इति च श्लोकद्वयस्यैक एवार्थ इति रहस्यम् । इममेवार्थं **भैरवयामले** चन्द्रज्ञानविद्यायां शिव आह पार्वतीम्—

चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ॥ १ ॥
त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च ॥ २ ॥

बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम् ।
चतुरश्रं च चत्वारि शिवचक्राण्यनुक्रमात् ॥ ३ ॥
त्रिकोणे बैन्दवं श्लिष्टं अष्टारेऽष्टदलाम्बुजम् ।
दशारयोः षोडशारं भूगृहं भुवनाश्रके ॥ ४ ॥
शैवानामपि शाक्तानां चक्राणां च परस्परम् ।
अविनाभावसम्बन्धं यो जानाति स चक्रवित् ॥ ५ ॥
त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
मनुकोणं चतुष्कोणं कोणचक्राणि षट् क्रमात् ॥ ६ ॥
मूलाधारं तथा स्वाधिष्ठानं च मणिपूरकम् ।
अनाहतं विशुद्ध्याख्यमाज्ञाचक्रं विदुर्बुधाः ॥ ७ ॥
तत्राधारस्वरूपाणि कोणचक्राणि पार्वति ।
त्रिकोणरूपिणी शक्तिः बिन्दुरूपशिवः स्मृतः ॥ ८ ॥
अविनाभावसम्बन्धः तस्माद्बिन्दुत्रिकोणयोः ॥ ९ ॥ इति ॥

इतः पूर्वम्—

अधोमुखं चतुष्कोणं शिवचक्रात्मकं विदुः ॥

इत्यनुसारेण 'अधोमुखानि चत्वारि त्रिकोणानि शिवात्मकानि' इत्युक्तिः 'शिवचक्राणि बाह्यानि तद्रूपेणावस्थितानि' इत्येवंपरेति ध्येयम् ।

यद्वा—कौलमतानुसारेण अधोमुखानि चत्वारि त्रिकोणानि शिवात्मकानि ऊर्ध्वमुखानि पञ्च त्रिकोणानि शक्त्यात्मकानि । कौलमते संहारक्रमेण लेखने नवत्रिकोणात्मकं श्रीचक्रम् । एतत्सर्वं 'चतुर्भिः श्रीकण्ठैः' (११ श्लोक) इत्यादिश्लोकव्याख्यानावसरे (पृ० ३९) वक्तव्यमपि 'सहस्रारे पद्मे सह रहसि पत्या विहरसे' इत्यत्रावश्यं वक्तव्यत्वात् उभयोपयोगितया अत्रैव किञ्चित्कथितम् । विस्तरस्तु तत्रैवावधार्यः ॥ ९ ॥

### * सरला *

**महीम्** पृथ्वी तत्त्व को, **मूलाधारे** मूल में अर्थात् गुदस्थान में । यह मूलाधार ही सभी चक्रों का आधार है, उसी मूलाधार में । जैसा कि रुद्ररहस्य में कहा है—

'यतः पृथ्वी सब का आधार है जो मूलाधार रूप से स्थित है । यदि वह न हो तो शरीर निश्चित रूप से नहीं रह सकता, अर्थात् रहने पर भी ऊपर की ओर उड़कर चला जाय ।'

यह बात रुद्र रहस्य में कही गई है । पृथ्वी तत्त्वात्मक मूलाधार के अभाव में शरीर ऊपर जा सकता है अथवा विनष्ट भी हो सकता हैं । **कम्** जलतत्त्व । **अपि** शब्द स्वाधिष्ठान स्थित वह्नि तत्त्व को भी कहता है । **मणिपूरे** मणिपूर चक्र में जहाँ स्थित हुई भगवती मणियों से उस प्रदेश को परिपूर्ण करती हैं । इसीलिये उसे 'मणिपूर' भी कहते हैं । इसीलिये समयमत वालों को आन्तर पूजा के अवसर पर देवी को तृतीय कमल में अनेक प्रकार की मणियों से जटित अनेक आभूषण समर्पित करना चाहिए । **हुतवहं** अग्नितत्त्व । **स्थितं** प्रतिष्ठित है । **स्वाधिष्ठाने** स्वाधिष्ठान नामक चक्र में, जहाँ 'स्वयं अधिष्ठित होकर ग्रन्थि बनाकर रहने वाली भगवती का अधिष्ठान है, जैसा कि योगदीपिका में कहा गया है—

'स्वाधिष्ठान के आगे वाली सीमा पर शक्ति की रुद्रग्रन्थि है ।'

इस श्लोक में यद्यपि आधार चक्र के बाद स्वाधिष्ठान चक्र का वर्णन करना चाहिए था, तथापि जैसे आकाशादि तत्त्वों की उत्पत्ति के समय व्युत्क्रम से वर्णन किया गया है, उसी प्रकार यहाँ भी व्युत्क्रम से मणिपूरचक्र का वर्णन है—ऐसा समझना चाहिए। 'तवाज्ञाचक्रस्थम्' (द्र० ३६-४१) आदि छः श्लोक के व्याख्यान के समय इन सब विचारों का उत्तम प्रकार से वर्णन किया गया है। **हृदि** हृदयाकाश में, अनाहतचक्र मे अनाहत नाद होते रहने के कारण इस स्थान का नाम 'अनाहत' है। **मरुतम्** मरुततत्त्व, **आकाश** आकाशतत्त्व के, **उपरि** पूर्वोक्त चक्रों के ऊपर विशुद्धि चक्र में। यह चक्र शुद्ध स्फटिक चक्र के समान है इसलिये इसे 'विशुद्धचक्र' भी कहते हैं। **मनः** मनतत्त्व, **अपि** शब्द उक्त सभी तत्त्वों के संग्रहार्थ कहा गया है। **भ्रूमध्ये** दोनों भ्रुवों के अन्तराल में जहाँ आज्ञाचक्र है। यहाँ आ का 'ईषत्' अर्थ है। ज्ञा का ज्ञान अर्थ है। जहाँ पर साधकों को भगवती विषयक 'ईषद् ज्ञान' प्राप्त हो जाता है, इसीलिये उसे 'आज्ञाचक्र' भी कहते हैं। ब्रह्मग्रन्थि के भेदन के लिये व्यग्र हुई भगवती इस आज्ञाचक्र में क्षणमात्र रुकती है। तब साधकों को क्षणिक देदीप्यमान बिजली के समान भगवती का आभास हो जाता है। इसलिये इस चक्र का नाम आज्ञा चक्र है। **'स्थितम्'** इस पद की लिङ्गव्यत्यय से सर्वत्र योजना कर लेनी चाहिए। **सकलं** सब, **अपि** समुच्चयार्थक है। **भित्त्वा** त्याग कर, **कुलपथं** सुषुम्ना मार्ग को, **सहस्रारे** सहस्रदल, **पद्मे** कमल में, **सह** मिलकर, **रहसि** एकान्त में, **पत्या** पति सदाशिव के साथ, **विहरसे** क्रीडा करती हो।

**पदयोजना का अर्थ**—हे भगवति ! आप मूलाधार में पृथ्वीतत्त्व को, मणिपूर में जलतत्त्व को, स्वाधिष्ठान मे अग्नितत्त्व को, हृदय में स्थित अनाहत में मरुत्तत्त्व को, ऊपर के विशुद्धिचक्र में आकाश तत्त्व को तथा भ्रूचक्र (= आज्ञाचक्र) में मनस्तत्त्व को इस प्रकार सारे चक्रों का भेदन कर सुषुम्ना मार्ग को भी छोड़कर सहस्रारपद्म में सर्वथा एकान्त में अपने पति सदाशिव के साथ विहार करती हो।

यहाँ यह समझ लेना चाहिए कि मूलाधार, स्वाधिष्ठान, मणिपूर, अनाहत, विशुद्धि तथा आज्ञाचक्र—ये ६ चक्र हैं जो क्रमशः पृथ्वी, अग्नि, जल, पवन, आकाश तथा मन तत्त्वात्मक हैं। वे सभी तत्त्व उन उन चक्रों में तन्मात्रा रूप से स्थित हैं। गन्ध, रूप, रस, स्पर्श और शब्द ये तन्मात्राएँ हैं। आज्ञाचक्र में स्थित मनस्तत्त्व तथा ११ इन्द्रियगणों को संगृहीत कर २१ तत्त्वों का प्रतिपादन इस श्लोक में किया गया है। पति के साथ एकान्त में सहस्र पत्र में भगवती विहार करती हैं। इससे ४ तत्त्व सूचित किया गया है। वे चार तत्त्व इस प्रकार हैं—१. माया, २. शुद्धविद्या, ३. महेश्वर और ४. सदाशिव। इस प्रकार कुल मिलाकर २५ तत्त्वों का प्रतिपादन है। माया पर्यन्त तत्त्व माया से युक्त होने के कारण प्राकृत हैं। वही माया जब महेश्वर से युक्त हो जाती है तो जीवभाव प्राप्त कर लेती है। वह जीव भी प्राकृत ही है। 'शुद्धविद्या' जब महेश्वर से युक्त हो जाती है, तब 'सादा' नामक कला कही जाती है। इसके बाद इन २४ तत्त्वों का अतिक्रमण कर जब भगवती २५वें तत्त्व वाले सदाशिव से युक्त हो विहार करने लगती है तो २६वें तत्त्व के रूप में होकर परमात्मा नामक तत्त्व के रूप में वह प्रगट हो जाती हैं—इसका तात्पर्य यह हुआ कि सादाख्या कला २५ तत्त्व वाले सदाशिव से संयुक्त होकर २६वाँ तत्त्व बन जाती है। क्योंकि उनके मिल जाने पर विलक्षण एक अन्य तत्त्व बन जाता है। यदि कहा जाय कि उभय का मेल होने से वह तत्त्व तो उभयात्मक ही हुआ, तो यह बात नहीं है। दोनों अभिन्न होने के कारण तत्त्वान्तर

ही कहे जायँगें। यहाँ यही रहस्य है फिर जो श्रुतियों में कहा गया है कि '२५वाँ तत्त्व आत्मा होता है'—उसे सदाशिवात्मक तत्त्व प्रतिपादन कर समझना चाहिए। उससे मिले हुये इस २६वें तत्त्व का कोई सम्बन्ध नहीं।

यहाँ यह शङ्का होती है कि पूर्व में कहा गया है कि 'बैन्दवस्थान' श्रीचक्र के मध्य में हैं। यह मध्यभाग चार शिव चक्रों के ऊपर तथा ५ शक्ति चक्रों के अध:भाग को कहा जाता हैं। किन्तु यहाँ वही वैन्दवस्थान सहस्रार पद्म के शिर पर (ऊपरी भाग में) स्थित होने के कारण सबसे ऊपर बताया गया है। अत: पूर्वापर विरोध होने के कारण वैन्दवस्थान की स्थिति ठीक नहीं बैठती।

इस विषय में भागवतमतरहस्य में कहा है—

चार शिवचक्रों से और पाँच शक्ति चक्रों का बना हुआ शिव और शक्ति का शरीर स्वरूप शिवशक्तिमय 'श्रीचक्र' कहा जाता है।

इस स्थल में शक्तिचक्र त्रिकोण, अष्टकोण, दो दशार और चतुर्दश कोणात्मक पाँच चक्रों का होता हैं और शिवचक्र अष्टदल, षोडशदल, मेखलात्रितय भूपुरत्रयात्मक होता है। इस प्रकार शक्तिचक्र के बाहर ही शिवचक्र की स्थिति बनती है। किन्तु शिव शक्ति से बाहर नहीं रह सकते। इसलिये उन शिवचक्रों को बिन्दुरूप से खींच कर यहाँ शक्तिचक्र के भीतर स्थापित किया जाता है। इसलिये वह बिन्दु भी शिवचक्र चतुष्टयात्मक है जो पञ्च योन्यात्मक शक्तिचक्र में व्याप्त होकर समाप्त भी हो जाता है। इस प्रकार शिवशक्ति एकात्मक हैं। इसलिये वैन्दव के भिन्न-भिन्न स्थान कहने पर कोई अन्तर नहीं है—ऐसा भी किसी विद्वान् का कहना हैं।

अन्य विद्वज्जन बिन्दु और त्रिकोण की एकता, अष्टकोण और अष्टदल की एकता, दशारयुग्म तथा षोडशदलाम्बुज की एकता तथा चतुर्दशार और भूपुर की एकता बताते हैं। इस प्रकार से शिव-शक्ति की एकता ही कही गई है। इस पक्ष में बिन्दुशब्द से शिवचक्र चतुष्टय का प्रतिनिधिभूत गोलकों को ही लक्ष्य बना कर कहा गया है। यह चतुष्कोण-मध्यवर्ती बिन्दु नहीं है। किन्तु वह बिन्दु सहस्र कमलान्तर्गत आधार स्वाधिष्ठान दल का प्रकृतिभूत शिवशक्ति मेल से आविष्टतनु है, जिसका नाम 'सादा' है और जो २६वें तत्त्व के नाम से भी कहा जाता है। वह बिन्दु है। उस तत्त्व के साथ नाद, बिन्दु एवं कला की एकता नहीं है क्योंकि वह तत्त्व नाद, बिन्दु एवं कला से सर्वथा परे है। यह बात आगे चल कर विस्तारपूर्वक कहेंगे। इसलिये सहस्रमण्डलान्तर्गत चन्द्रमण्डल मध्यवर्ती सुधा-सिन्धु ही भगवती के विहरण का स्थान है। इसलिये 'सहस्रारे पद्मे सह रहसि पत्या विहरसे' और 'सुधासिन्धोर्मध्ये' इन दोनों श्लोकों का एक ही अर्थ है यही रहस्य है। इसी विषय का प्रतिपादन भैरवयामल में चन्द्रज्ञान विद्या के प्रसङ्ग में भगवान् शिव पार्वती से करते हैं—

चार शिवचक्रों से और पाँच शक्तिचक्रों से—इस प्रकार कुल नवचक्रों से शिव-शक्त्यात्मक शरीर वाला श्री चक्र बनता है। १. त्रिकोण, २. अष्टकोण, ३-४. दो दशकोण और ५. चतुर्दशार—ये पाँच 'शक्तिचक्र' हैं। बिन्दु, अष्टदल पद्म, षोडशपत्रपद्म और चार चतुरश्र—ये क्रमश: 'शिवचक्र' हैं। त्रिकोण में बिन्दु श्लिष्ट है। अष्टार में अष्टदलपद्म श्लिष्ट है। दो दशार में षोडशार श्लिष्ट है और भुवनाश्र में भूगृह श्लिष्ट है। शैव तथा

शाक्तचक्रों के परस्पर अविनाभाव सम्बन्ध को जो साधक जानता है वास्तव में वही 'श्रीचक्र' का विद्वान् है । १. त्रिकोण, २. अष्टकोण, ३-४. दो दशकोण, ५. चतुर्दश कोण और ६. चतुष्कोण—ये छः कोण हैं । मूलाधार, स्वाधिष्ठान, मणिपूर, अनाहत, विशुद्धि तथा आज्ञा—ये छः चक्र विद्वानों ने कहे हैं । उसमें, हे पार्वति ! कोणचक्र आधारस्वरूप है, जिसमें त्रिकोणरूपा शक्ति और बिन्दुस्वरूप सदाशिव कहे गये हैं । इन बिन्दु और त्रिकोण का परस्पर अविनाभाव सम्बन्ध है अर्थात् त्रिकोण के बिना बिन्दु की स्थिति नहीं और बिन्दु के बिना त्रिकोण की स्थिति नहीं है ।

इसके पहले के श्लोक में कहा गया है कि चतुष्कोण अधोमुख है जो शिवचक्रात्मक है । इसके अनुसार अधोमुख वाले चार त्रिकोण शिवात्मक तथा ऊर्ध्वमुख वाले पञ्चकोण शक्त्यात्मक हैं । इस कथन का तात्पर्य यह है कि शिवचक्र बाहर से ही पृथक् रूपेण स्थित है ऐसा समझना चाहिए ।

अथवा कौलों के मतानुसार अधोमुख वाले चार त्रिकोण शिवात्मक हैं और ऊर्ध्वमुख वाले पाँच त्रिकोण शक्त्यात्मक हैं । कौलमत में संहार क्रम से लेखन में इस प्रकार नवकोणात्मक श्री चक्र का विधान है । यह सब आगे **'चतुर्भिः श्रीकण्ठैः'** (द्र० श्लो ११) इत्यादि श्लोक के व्याख्यान के अवसर पर कहने की आवश्यकता होने पर भी **'सहस्रारपद्मे सह रहसि पत्या विहरसे'** (द्र० २८) यहाँ विशेषरूप से वक्तव्य होने से उपयोगी होने के कारण यहीं पर कुछ कहेंगे । अतः इसका विस्तार वहीं समझ लेना चाहिए ॥ ९ ॥

**श्रीविद्यारहस्यार्थ**—हे भगवति ! आपकी परम शक्ति चित्स्पन्दभाव में विश्वसृष्टि की कल्पना कर षट्चक्र वेधभाव में सूक्ष्म तत्त्वों के वेध-द्वारा स्थूल पञ्चतत्त्वों में पञ्चीकरण करती है । यथा—

मूलाधार में भूतत्त्व पीतवर्ण, स्वाधिष्ठान में जलतत्त्व श्वेतवर्ण, मणिपूर में अग्नितत्त्व रक्तवर्ण (मणिरत्नवर्ण), अनाहत-हृच्चक्र में अग्नि-वायु-मिश्रित तत्त्व गुलाबी वर्ण, कण्ठचक्र (विशुद्धि) में वायुतत्त्व धूम्रवर्ण, आज्ञाचक्र में आकाशतत्त्व इन्द्रधनुषवर्ण है ।

इस प्रकार कुलपथ का भेदन कर पराशक्तिरूपा गुप्त रहस्यमयी भगवती सहस्रार पद्म में अपने पति के साथ (चिदानन्द रूप में) गुप्त विहार करती हैं । सहस्रारपद्म दल से श्रीचक्र का भाव है—मूलाधारस्थ चर्तुदले भूपुरमये शक्तिरूपायाः कुण्डलिन्याः स्थानवत् ।

तत्त्वबीज इस प्रकार हैं—हं आकाशबीज, यं वायुबीज, रं अग्निबीज, वं वरुणबीज, लं भूबीज, मं मनोबीज, षं बुद्धिबीज, सं शक्तिबीज, हं चिद्बीज—शिवबीज—प्राणबीज (शंस्वराश्च—जीव बीजादि) है ।

कुलपथ भेद से पृथ्वी से मनपर्यन्त २१ तत्त्वों का भेदन हो जाता है । २१ तत्त्व = १. पृथ्वी, २. अप्, ३. अग्नि, ४. वायु, ५. आकाश, ६. गन्ध, ७. रस, ८. रूप, ९. स्पर्श, १०. शब्द, ११. नासिका, १२. जिह्वा, १३. चक्षु, १४. त्वक्, १५. श्रोत्र, १६. वाक्, १७. पाणि, १८. पाद, १९. पायु, २०. उपस्थ एवं २१ मन हैं ।

मन से परे निम्नलिखित तत्त्व हैं—२२. बुद्धि, २३. अहङ्कार, २४. प्रकृति, २५. पुरुष (चित्), २६. कला, २७. अविद्या, २८. विद्या, २९. राग, ३०. नियति, ३१. माया, ३२ शिव एवं ३३ शक्ति ।

कोई-कोई आचार्य १५ तत्त्व पृथक् बताते हैं। यथा—

**सप्तधातु**—१. त्वक्, २. असृज, ३. मांस, ४. मेद, ५. अस्थि, ६. मज्जा और ७. शुक्र।

**पञ्चप्राण**—१. प्राण, २. अपान, ३. व्यान, ४. उदान और ५. समान।

**गुणत्रय**—१. सत्व, २. रज और ३. तम।

तत्त्वबीजों का चक्रन्यास इस प्रकार कहा गया है—

| श्रीचक्राङ्ग | तृत्त्व | चक्र | तत्वबीज |
|---|---|---|---|
| त्रिकोण | आकाश | आज्ञा | हं |
| अष्टकोण | वायु | विशुद्धि | यं |
| दशारद्वय | अग्नि+वायु | ह्यत् | यरं = य्ं |
| चतुर्दशार | अग्नि | नाभि | रं |
| अष्टदलपद्म | जल | स्वाधिष्ठान | वं |
| षोडशदलपद्म | भू | मूलाधार | लं |

**पञ्चमहाभूतजय यन्त्र**



**ध्यान—'म'—श्लोकस्थ वर्णबीज 'म' का ध्यान—**

'म'— कृष्णां दशभुजां भीमां पीतलोहितलोचनाम्।
कृष्णाम्बरधरां नित्यां धर्मकामार्थमोक्षदाम्॥
एवं ध्यात्वा मकारं तु तन्मन्त्रं दशधा जपेत्।
मकारं शृणु चार्वङ्गि स्वयं परमकुण्डली॥
तरुणादित्यसङ्काशं चतुर्वर्गप्रदायकम्।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं तथा॥

**बीजाक्षर**—'म'; जप—१०००; जप-स्थान—मूलाधार चक्र; होम—रक्तपुष्प, बिल्व, तिल, यव एवं घृत से १०० या १०; मार्जन—१०; तर्पण—१०, श्लोकपाठ-संख्या—१०; श्लोकपाठ-आहुति—१॥ ९॥

**सुधाधारासारैश्चरणयुगलान्तर्विगलितैः**
**प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः।**
**अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं**
**स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि॥ १०॥**

**लक्ष्मीधरा—सुधाया** अमृतस्य **धाराणामासारैः** सम्पातैः। अत्रासारशब्द एव धारासम्पातवचन इति धाराशब्दसाहचर्यात् आसारशब्दः सम्पातमात्रवचन इति न पौनरुक्त्यम्। यद्वा—**सुधाया** आधारभूता **आसारा** धारासम्पाताः, तैः **चरणयुगलान्तर्विगलितैः** चरणयुगलस्य पादारविन्दद्वितयस्य अन्तर्विगलितैः मध्यप्रदेशात् स्रवद्भिः, **प्रपञ्चं** द्विसप्ततिसहस्रसङ्ख्याकनाडीमार्गं, **सिञ्चन्ती** सेक्त्री, **पुनरपि** सेचनानन्तरमपि, **रसाम्नायमहसः** चन्द्रसकाशात्, रसाम्नायमहश्शब्दो यामलेषु कलानिधौ प्रसिद्धः, रसस्य सुधाया आम्नायो गुणानामाधिक्यमिति यावत्, तदात्मकं महः कान्तिर्यस्य सः रसाम्नायमहा इति व्युत्पत्तेः। **अवाप्य** प्राप्य, **स्वां** स्वकीयां, **भूमिं** आधारचक्रं, **भुजगनिभं** सर्पसदृशं, **अध्युष्टवलयं**

अधिष्ठितकुण्डलनाविशेषं, **स्वं** निजं **आत्मानं कृत्वा** धृत्वा स्वस्वरूपमवलम्ब्य उषित्वा, **स्वपिषि** निद्रासि—**कुलकुण्डे** कुः पृथिवीतत्त्वं लीयते यत्र तत्कुलं आधारचक्रम् । लक्षणया सुषुम्नामार्गः कुलमित्युच्यते । अत एव कौलाः कुलपूजकाः आधारसेवका इति कौलत्वं तेषामिति रहस्यम् । एतदुत्तरत्र प्रस्फोर्यते । कुलमार्गस्य सुषुम्नाया मूले यत्कुण्डं कमलकन्दाकारं आधारकन्दं तस्मिन् **कुहरिणि**, कमलकन्दमध्यस्थितछिद्रतुल्यं छिद्रं यस्य कुण्डस्य तत्तथोक्तम् । आधारकन्दमध्यस्थितसुषिरमध्ये बिसतन्तुनिभा तत्र कुण्डलिनी शक्तिः वर्तत इति तात्पर्यम् ।

**अत्रेत्थं पदयोजना**—हे भगवति! चरणयुगलान्तर्विगलितैः सुधाधारासारैः प्रपञ्चं सिञ्चन्ती रसाम्नायमहसः सकाशात् स्वां भूमिं पुनरप्यवाप्य भुजगनिभमध्युष्टवलयं स्वमात्मानं कृत्वा कुहरिणि कुलकुण्डे स्वपिषि ।

**अत्रेदमनुसन्धेयम्**—शिरस्थितं चन्द्रमण्डलं सर्वयोगशास्त्रसिद्धम् । तत्तु समयिनां मते श्रीचक्रमेव । चन्द्रमण्डलस्य षोडशकलात्मकत्वात्, श्रीविद्यायाः प्रतिपदादिषोडशदिनेषु कलावृद्धिक्षययोः वक्ष्यमाणत्वात्, चन्द्रमण्डलमेतदेव । बाह्यस्थितमपि चन्द्रमण्डलं श्रीचक्रमेवेति **सुभगोदयव्याख्याने** निदर्शितम् । तत्तु महारहस्यम् । अतश्च शिरस्स्थितसहस्रदलकमलान्तर्गतश्रीचक्रात्मकशशिबिम्बमध्यस्थिताया भगवत्याश्चरणकमलनिर्णेजनजलैः सुधामयैः साधकस्य सकलशरीरं संप्लाव्य पुनः भुजङ्गरूपेण आधारकुण्डं प्रविश्य सुषुम्नामवष्टभ्य सा भगवती स्वपितीति । यथोक्तं **वामकेश्वरमहातन्त्रे**—

> **भुजङ्गाकाररूपेण मूलाधारं समाश्रिता ।**
> **शक्तिः कुण्डलिनी नामबिसतन्तुनिभाऽऽशुभा ॥ १ ॥**

आशुभा क्षणप्रभा विद्युन्निभेत्यर्थः ।

> **मूलकन्दं फणाग्रेण दंष्ट्वा कमलकन्दवत् ।**
> **मुखेन पुच्छं संगृह्य ब्रह्मरन्ध्रं समाश्रिता ॥ २ ॥**
> **पद्मासनगतः स्वस्थो गुदमाकुञ्च्य साधकः ।**
> **वायुमूर्ध्वगतिं कुर्वन् कुम्भकाविष्टमानसः ॥ ३ ॥**
> **वाय्वाघातवशादग्निः स्वाधिष्ठानगतो ज्वलन् ।**
> **ज्वलनाघातपवनाघातैरुन्निद्रितोऽहिराट् ॥ ४ ॥**
> **रुद्रग्रन्थिं ततो भित्त्वा विष्णुग्रन्थिं भिनत्त्यतः ।**
> **ब्रह्मग्रन्थिं च भित्त्वैव कमलानि भिनत्ति षट् ॥ ५ ॥**
> **सहस्रकमले शक्तिः शिवेन सह मोदते ।**
> **सा चावस्था परा ज्ञेया सैव निर्वृतिकारणम् ॥ ६ ॥** इति ॥

श्रुतिरपि भगवत्याः चरणाम्बुजसुधाधारासारैः प्रपञ्चसेचनं प्रतिपादयति । तथा हि—

> **लोकस्य द्वारमर्चिमत्पवित्रम् ।**
> **ज्योतिष्मद्भ्राजमानं महस्वत् ।**
> **अमृतस्य धारा बहुधा दोहमानम् ।**
> **चरणं नो लोके सुधितान् दधातु** ॥ (तै.ब्रा. ३.१.३३)

**अस्यार्थः**—लोकस्य स्वनिवासस्थानस्य सायुज्यस्य वा सार्ष्ट्यादेर्वा ब्रह्मलोकादेर्वा द्वारं, तत्रापकमित्यर्थः । अर्चिमत् अर्चींषि मयूखाः अस्य सन्तीति अर्चिमत्, अर्चिष्मदित्यर्थः । छान्दसः सकारलोपः । मयूखाः किरणाः । पवित्रं स्वयमतिशुद्धम्, अन्यशुद्धिहेतुश्च । 'ज्योतिष्मद्भ्राजमानं महस्वत्' इत्याम्रेडनं अर्चिष्मत् स्तुत्यर्थम् । यद्वा—

त्रिखण्डं मातृकाचक्रं सोमसूर्यानलात्मकम् ।

इति वक्ष्यते । 'अर्चिष्मत्' इत्यनेन आग्नेयान्यर्चींष्यष्टोत्तरशतं कथ्यन्ते । 'ज्योतिष्मत्' इत्यनेन ऐन्दवानि षट्त्रिंशदुत्तरशतं ज्योतींषि निर्दिश्यन्ते । 'महस्वत्' इत्यनेन भानवीयानि षोडशोत्तरशतं महांसि किरणाः संगृह्यन्ते ! एतच्च 'क्षितौ षट्पञ्चाशत्' (१४ श्लोक) इतिश्लोक व्याख्यानावसरे निपुणतरमुपपादयिष्यामः । अमृतस्य धाराः सुधाप्रवाहान् बहुधा बहुप्रकारेण द्विसप्ततिसहस्रनाडीमार्गेषु दोहमानं किरत् चन्द्रमण्डलगतसुधाधाराप्रवाहान् स्वनिर्णेजनपवित्रितान् वर्षेदित्यर्थः । तच्चरणं, चरणशब्दो नपुंसकः, 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । नः अस्मान् साधकान् लोके प्रपञ्चे सुधितान् तृप्तान्, यद्वा—सञ्जातबुद्धिप्रकाशान् सुधियः. कृत्वा दधातु पुष्णातु ।

नन्वयं मन्त्रः अपाघास्विष्टिषु याज्यात्वेनाम्नातः । मन्त्राणां समवेतार्थप्रकाशनशीलत्वात्, 'चरणाय स्वाहा' इति चतुर्थ्यर्थोपहितशब्दस्यैव देवतात्वात्, एतद्व्याख्यानं न सङ्गच्छत इति चेत्—

उच्यते—अत्राहुः **भगवत्पादाः**—

सिद्धमन्त्रं परित्यज्य भिक्षामटति दुर्मतिः ॥ इति ।

**अयमाशयः**—वेदस्य सकर्तृकत्वासिद्धेः फलदानसमर्थत्वेन सर्वविद्वदभिमतं वृद्धव्यवहारावसितशक्तिकं 'लोकस्य द्वारम्' इत्यादिविशेषणविशिष्टत्वार्हं भगवत्याश्चरणमेव 'चरणाय स्वाहा' इत्यत्र चरणशब्देनाभिधीयत इति ॥ १० ॥

## * सरला *

**सुधाधारासारैः** अमृत धारा के गिरने से; यहाँ आसार शब्द धारा शब्द के साहचर्य से धारा सम्पात का वाचक है इसलिये आसार शब्द केवल सम्पात मात्र का बोधक है । इसलिये पुनरुक्ति नहीं है, अथवा सुधा के आधारभूत आसार अर्थात् धारासम्पात उनसे, **चरणयुगलान्तर्विगलितैः** दोनों पादारबिन्द के मध्य से स्रवीभूत होते हुये, **प्रपञ्चं** ७२ हजार संख्या वाले नाडी मार्गो को, **सिञ्चन्ती** सींचने वाली, **पुनरपि** सिञ्चन करने के अनन्तर भी, **रसाम्नायमहसः** चन्द्रमण्डल से (रसाम्नाये शब्द यामल ग्रन्थों में कलानिधि चन्द्रमा के अर्थ में प्रसिद्ध हैं) अमृत के गुणों की अधिकता रूप कान्ति है जिसकी, **अवाप्य** प्राप्त कर, **स्वां** अपनी, **भूमिं** आधारचक्र, **भुजगनिभं** सर्प के सदृश, **अध्युष्टवलयं** कुण्डली के रूप में सिकुड़ कर, **स्वं** अपने को, **आत्मानं कृत्वा** अपना स्वरूप धारण कर पुनः वही निवास कर **स्वपिषि** सोती हो, **कुलकुण्डे** पृथ्वीतत्त्व जहाँ लीन होता हैं वह कुण्ड अर्थात् आधारचक्र । लक्षणा वृत्ति से इसका अर्थ हुआ सुषुम्ना मार्ग । वही कुल शब्द से व्यवहृत होता है । इसलिये कौल शब्द का अर्थ हुआ कुलपूजक जो आधारमार्ग के सेवक हैं । इसी कारण वे 'कौल' कहे जाते हैं यही कौल का रहस्य है । यह बात आगे स्पष्ट करेंगे । सुषुम्ना नाड़ी के मूल में कमल कन्द के आकार का एक कुण्ड है जिसे 'आधारकन्द' भी कहा जाता है । उस

आधार कुण्ड में कमल के कन्द के मध्य में स्थित छिद्र के समान एक छिद्र है उसी में विसतन्तु के समान स्वरूप वाली कुण्डलिनी शक्ति का निवास है, यही इस श्लोक का तात्पर्य है।

**पदयोजना का अर्थ**—हे भगवति ! आप अपने दोनों चरणों के मध्य से स्रवीभूत होती हुयी सुधाधारा के सम्पात से शरीर की ७२ हजार नाड़ियों का सिञ्चन करती हो। इसके बाद चन्द्रमण्डल से उतर कर अपनी भूमि आधार चक्र में पुनः लौटकर सर्प के समान साढ़े तीन हाथ के कुण्डल (गोलाकार गेडुरा) के स्वरूप में अपने को स्थित कर छिद्र वाले उस कुल कुण्ड (आधारचक्र) में सो जाती हो।

यहाँ यह समझ लेना चाहिए कि शिरः स्थित चन्द्रमण्डल सभी योगशास्त्र में प्रसिद्ध है। समयी मतों के अनुसार वही श्रीचक्र है। चन्द्रमण्डल १६ कलाओं वाला है। श्री विद्या में भी प्रतिपदादि १६ दिनों में कलाओं की वृद्धि और क्षय का वर्णन आगे करेंगे। अतः श्रीविद्या में रहने वाला चन्द्रमा भी षोडश कलात्मक है। बाहर में रहने वाला चन्द्रमण्डल भी श्रीचक्र ही है। यह बात सुभगोदय टीका के व्याख्यान में सिद्ध की गई है जो महारहस्य से परिपूर्ण हैं। इसलिये शिर स्थित सहस्रदल कमलान्तर्गत श्रीचक्रात्मक चन्द्रबिम्ब के मध्य में स्थित रहने वाली भगवती अपने चरण कमलों के सुधामय निर्णेजन जल से भक्त के सारे शरीर को आप्लावित कर अपने उसी सर्प रूप से आधारकुण्ड में प्रविष्ट हो सुषुम्ना का आश्रय लेकर पुनः वहीं सो जाती है। जैसा कि वामकेश्वर तन्त्र में कहा गया है—

विस तन्तु के समान स्वच्छ बिजली के समान चमकीली कुण्डलिनी नाम की एक शक्ति हैं जो सर्पाकार रूप में मूलाधार में निवास करती है। वही मूलकन्द को अपने फणाग्र भाग से कमल कन्द के समान खोलकर, पुनः अपने मुख में पूँछ को दबाकर ब्रह्मरन्ध्र में चली जाती है। साधक स्वस्थ हो पद्मासन लगा कर गुदा भाग को सिकोड़ कर वायु को ऊपर उठाते हुये कुम्भक प्राणायाम करे, तब वायु के आघात से स्वाधिष्ठान चक्र में रहने वाली अग्नि प्रदीप्त हो जाती है। इस प्रकार अपने तथा वायु के धक्के से सोता हुआ सर्प अपनी निद्रा त्याग देता है। वह पहले 'रुद्रग्रन्थि' का, तदनन्तर 'विष्णुग्रन्थि' का भेदन करता हैं, फिर 'ब्रह्मग्रन्थि' का भेदन कर षट्चक्रों का भी भेदन करता है। तदनन्तर सहस्र कमल में जा कर शिव के साथ प्रसन्नतापूर्वक निवास करता है—यही परावस्था समझना चाहिए, जो सभी प्रकार के सुखों का कारण है।

वेद (तै०ब्रा० ३.१.३२) भी भगवती के चरणाम्बुज से निकली हुई अमृतधारा द्वारा प्रपञ्च (= शरीर) के सिञ्चन का प्रतिपादन करते हैं। जैसा कि—**लोकस्य** अपने निवास स्थान के, अथवा सायुज्य के सार्ष्टियुक्ति के, अथवा ब्रह्मलोक के, **द्वारं** उसे प्राप्त कराने वाले, **अर्चिमत्** 'अर्चीषि अस्य सन्तीति', अर्चिमत् छान्दस सकार का लोप है। कहना चाहिए था 'अर्चिष्मत्'। अर्चि मयूख या किरणों को कहते हैं, किरणों वाला। **पवित्र** स्वयमति शुद्ध तथा दूसरे को भी शुद्ध करने वाला **ज्योतिष्मद् भ्राजमानं महस्वत्** ये उसी अर्थ के वाचक हैं। ये शब्द बारम्बार के लिये तथा 'अर्चिष्मत्' शब्द स्तुति के लिये कहा गया है, अथवा मातृका चक्र ५० वर्णों वाला है जो तीन खण्डो में प्रविभक्त है—(१) आग्नेय (२) ऐन्दव (३) सौर, यह बात आगे कहेंगे। 'अर्चिष्मत्' शब्द से अग्नि में रहने वाले १०८ किरणों का निर्देश है। ज्योतिष्मत् शब्द से चन्द्रमण्डल के १३६ किरणों का

निर्देश है। 'महस्वत्' इस शब्द से सूर्य में रहने वाले ११६ महः अर्थात् किरणों का निर्देश है। यह प्रसङ्ग 'क्षितौ पञ्चाशत्' (द्र० श्लो० १४) की व्याख्या के समय अच्छी तरह उपपादन करेंगे। **अमृतस्य धाराः** सुधा प्रवाहों को, **बहुधा** बहुत प्रकार से, बहत्तर हजार नाडी मार्गों में, **दोहमानम्** दुहा जाने वाला, फैलने वाला, चन्द्रमण्डल में रहने वाले अमृत प्रवाहों को, **चरणं** अपने चरण के निर्णेजन जल से पवित्र करती हुई वर्षा करती हो। यहाँ चरण शब्द का प्रयोग नपुंसकलिङ्ग में हुआ है। अमरकोश में कहा भी है—'पदङ्घ्रिश्चरणोऽस्त्रियाम्' अर्थात् चरण शब्द स्त्री लिंग को छोड़कर शेष पुल्लिङ्ग और नपुंसक लिङ्ग में प्रयुक्त होता है। **नः** हम साधकों को, **लोके** प्रपञ्चात्मक जगत् में **सुधितान्** तृप्त कर, अथवा बुद्धि का प्रकाश कर बुद्धिमान, **दधातु** धारण करें, अथवा परिपुष्ट करें।

यह शङ्का होती है कि 'चरणाय स्वाहा' यह मन्त्र अपाघा वाली इष्टि में प्रयुक्त किया गया है। मन्त्रों का स्वभाव है कि वे अपने में रहने वाले अर्थ के ही प्रकाशक होते हैं। यहाँ चतुर्थी विभक्ति से उपहित चरण शब्द देवता का वाचक है। भगवती के चरण का वाचक नहीं है। अतः उपर्युक्त व्याख्यान की संगति ठीक नहीं बैठती। इस विषय में भगवत्पाद शङ्कराचार्य कहते हैं—

'क्या कोई मूर्ख सिद्ध अन्न को छोड़कर भिक्षाटन के लिये दौड़ता है।

इसका आशय यह है कि वेद का कोई कर्त्ता सिद्ध नहीं होता। फिर भी वह सभी फल देने में समर्थ है इस बात को सभी विद्वान् मानते हैं। यहाँ पर वृद्धव्यवहार से पूर्णशक्तिमान् 'सारे संसार के द्वारभूत' इत्यादि विशेषण विशिष्ट भगवती के चरण के लिये ही 'चरणाय स्वाहा' इस मन्त्र में 'चरण' शब्द का प्रयोग किया गया है॥ १०॥

**श्रीविद्यारहस्यार्थ**—हे विश्वजननि! कुलकुण्ड (= सुषुम्ना मार्ग) की अन्तर्गुहा में जब आप साढ़े तीन वलयात्मिका महा विश्व-कुण्डलिनीरूप में शयन करती हैं तथा निजानन्द भाव में एकाग्र होकर स्वात्मानन्द के रसाम्नाय-स्वाद में मग्न हो जाती हैं, तब भी आपके श्रीचरण सुधा की तीव्र वर्षा से प्रपञ्च को सींचते रहते हैं अर्थात् विश्राम-काल में भी आप विश्व का कल्याण करती हैं।

**शरीरशुद्धिकर यन्त्र**

हे भगवति! विश्राम-काल में भी विश्व के त्रिनाड़ी-चक्र में आपका युक्त संचार रहता है, जैसे जीव-देह के निद्राकाल में देह नाड़ियों में रक्त संचार होता रहता है।

**ध्यान—'सु' = स् + उ। श्लोकस्थ वर्णबीज सु का ध्यान—**

**स्**— करीषभूषिताङ्गीं च साट्टहासां दिगम्बराम्।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम्॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम्।
सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम्॥
एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत्।
सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम्।

कोटिविद्युल्लताकारं कुण्डलीमयसंयुतम् ॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा ।
रजसत्वतमोयुक्तं त्रिबिन्दुसहितं सदा ॥

उ— पीतवर्णां त्रिनयनां पीताम्बरधरां पराम् ॥
द्विभुजां जटिलां भीमां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
उकारं परमेशानि अधःकुण्डलिनी स्वयम् ।
पीतचम्पकसङ्काशं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम् ॥

**पूजन-यन्त्र**—षट्कोग में 'ह्रीं', 'क्लीं', 'ह्रीं' लिखे ॥ १० ॥

पूर्वश्लोके इन्दुमण्डलात्मकं श्रीचक्रमित्युक्तम् । तदेव श्रीचक्रमुपदिशति—

**चतुर्भिश्श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि**
**प्रभिन्नाभिः शम्भोर्नवभिरपि मूलप्रकृतिभिः ।**
**चतुश्चत्वारिंशद्वसुदलकलाश्रत्रिवलय-**
**त्रिरेखाभिः सार्धं तव शरणकोणाः परिणताः ॥ ११ ॥**

**लक्ष्मीधरा—चतुर्भिः** चतुस्सङ्ख्यासङ्ख्येयैः, **श्रीकण्ठैः**—शृणाति हिनस्तीति श्रीः, विषं कण्ठे यस्यासौ श्रीकण्ठः हरः, ते कोणा अपि श्रीकण्ठाः, तादात्म्यात् तद्व्यपदेशः, अत एव बहुवचनसिद्धिः । श्रीकण्ठात्मकैरित्यर्थः । **शिवयुवतिभिः** शक्तिभिः, पूर्ववद्-बहुवचनसिद्धिः । शक्त्यात्मकैरित्यर्थः । **पञ्चभिः** । अपिशब्दो भेदे, **प्रभिन्नाभिः** प्रकर्षेण भिन्नाभिः। प्रकर्षस्तु शिवशक्तिचक्रमध्ये बैन्दवस्थानस्य विद्यमानत्वात्, एतच्च समयमतेन सृष्टिक्रमेण पञ्चचक्रलेखने ज्ञेयम् । कौलमतेन संहारक्रमेण नवयोनिचक्रलेखने ऊर्ध्वाधोमुखतया अव-स्थितेः प्रभिन्नत्वं ज्ञेयम् । तेनोभयं पृथक्पृथक् स्थितमित्यर्थः । **शम्भोः** इति पञ्चमी, शम्भु-शब्देन चत्वारः श्रीकण्ठाः उच्यन्ते **नवभिः** नवसङ्ख्यैः, अपिशब्दो वक्ष्यमाणबाहुल्यं समुच्चिनोति । **मूलप्रकृतिभिः** प्रपञ्चस्य मूलकारणैः, अत एव तेषां योनिशब्देन व्यवहारः । नव योनयो नवधात्वात्मकाः । तथा चोक्तं **कामिकायाम्**—

त्वगसृङ्मांसमेदोस्थिधातवः शक्तिमूलकाः ।
मज्जाशुक्लप्राणजीवधातवः शिवमूलकाः ॥ १ ॥
नवधातुरयं देहो नवयोनिसमुद्भवः ।
दशमी योनिरेकैव परा शक्तिस्तदीश्वरी ॥ २ ॥ इति ॥

दशमी योनिः बैन्दवस्थानम्, तदीश्वरी तस्य देहस्येत्यर्थः ।

एवं पिण्डाण्डमुत्पन्नं तद्वद्ब्रह्माण्डमुद्बभौ ।
पञ्च भूतानि शाक्तानि मायादीनि शिवस्य तु ॥ ३ ॥
माया च शुद्धविद्या च महेश्वरसदाशिवौ ।
पञ्चविंशतितत्त्वानि तत्रैवान्तर्भवन्ति ते ॥ ४ ॥

एकादशेन्द्रियाणि शब्दादितन्मात्राः तच्छब्देन परामृश्यन्ते ।

शिवशक्त्यात्मकं विद्धि जगदेतच्चराचरम् ।

चरं पिण्डाण्डं, अचरं ब्रह्माण्डमित्यर्थः ।

केचित्तु एकपञ्चाशत्तत्वान्याहुः । तथाहि—

पञ्च भूतानि तन्मात्रपञ्चकं चेन्द्रियाणि च ।
ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च ॥ १ ॥
त्वगादिधातवस्सप्त पञ्च प्राणादिवायवः ।
मनश्चाहङ्कृतिः ख्यातिर्गुणाः प्रकृतिपूरुषौ ॥ २ ॥
रागो विद्या कला चैव नियतिः काल एव च ।
माया च शुद्धविद्या च महेश्वरसदाशिवौ ॥ ३ ॥
शक्तिश्च शिवतत्त्वं च तत्त्वानि क्रमशो विदुः ॥ ४ ॥ इति ॥

एतान्येकपञ्चाशत्तत्वानि **वायवीयसंहितादिशैवपुराणेषु** सर्वेषु प्रतिपादितानि ।

**अस्यार्थः**—पञ्चभूतानि पृथिव्यप्तेजोवाय्वाकाशात्मकानि कार्यकारणरूपेणावस्थितानि । गन्धादितन्मात्रपञ्चकं पृथिव्यादीनां कारणभूतम् । ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मकानि । कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थात्मकानि । धातवः त्वगसृङ्मांसमेदोस्थिमज्जाशुक्लानि । वायवः प्राणापानव्यानोदानसमानाः । मनः मननात्मिका शक्तिः । अहङ्कृतिः अहङ्कारजनिका शक्तिः । ख्यातिः ज्ञानम् । गुणाः सत्वरजस्तमांसि । प्रकृतिः मूलप्रकृतिः । पुरुषो जीवः । रागः इच्छा । विद्या शास्त्रजनितविकल्पज्ञानम् । कलाः षष्ट्युत्तरत्रिशतसङ्ख्याकाः । नियतिः नियामिका शक्तिः । कालः संहरणशक्तिः । माया ऐन्द्रजालिकादिज्ञानम् । शुद्धविद्या मोचकज्ञानम् । महेश्वरः रजोगुणाविष्टः सृष्टिकर्ता । सदाशिवः सृष्टिस्थितिकर्ता । शक्तिः महेश्वरसदाशिवयोः रक्षणसर्जनशक्तिः । चकारात् कालात्मिका संहारिणीशक्तिश्च । शिवतत्त्वं शुद्धबुद्धमुक्तस्वरूपम् । एतेषु सर्वेषु तत्त्वेषु कतिचन तत्त्वानि कुत्रचिदन्तर्भवन्ति । त्वगादिसप्तधातवः भूतेष्वन्तर्भवन्ति। प्राणादिवायवः वायावन्तर्भवन्ति । अतो भूतेष्वेव तेषामन्तर्भावः। अहङ्कारस्य मनस्यन्तर्भावः । ख्यातेर्विद्यायामन्तर्भावः । गुणानां प्रकृतावन्तर्भावः । प्रकृतेस्तु शक्तावन्तर्भावः । पुरुषस्य महेश्वरेऽन्तर्भावः । कलायाः शुद्धविद्यायामन्तर्भावः । नियतेस्तु शक्तावेवान्तर्भावः । कालस्य महेश्वरे सदाशिवे चान्तर्भावः । शक्तेस्तु शुद्धविद्यायामन्तर्भावः । शिवतत्त्वस्य सदाशिवतत्त्वेऽन्तर्भावः । इति तत्त्वानि पञ्चविंशतिरेव । पञ्च भूतानि तन्मात्रपञ्चकं पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनस्तत्त्वं मायाविशुद्धविद्यामहेश्वरसदाशिवात्मकानि चत्वारि । एतानि पञ्चविंशतितत्त्वानि सर्वसम्मतानि । श्रुत्यनुगृहीतत्वात् । तथा च श्रुतिः 'पञ्चविंश आत्मा भवति' (तै.ब्रा. १.२.६) इति । अतश्च षट्त्रिंशत्तत्वानीत्यादितत्त्वविकल्पः श्रुत्यनुसारेण पञ्चविंशतितत्त्वपर इत्यनुसन्धेयम् । अतश्च सर्वतत्वातीतं शिवशक्तिसम्पुटम् । तस्मादेव जगदुत्पत्तिः । तदुक्तं **सुभगोदये**—

परोऽपि शक्तिरहितः शक्तः कर्तुं न किञ्चन ।
शक्तः स्यात्परमेशानि शक्त्या युक्तो भवेद्यदि ॥ इति ॥

अत्र बहु वक्तव्यमस्ति । तत्तु सुभगोदयव्याख्यानावसरे निपुणतरमुपपादितमस्माभिरिति अलमतिविस्तरेण । प्रकृतमनुसरामः ॥

**चतुश्चत्वारिंशत्** एतत्संख्याभिः, **वसुदलकलाश्रत्रिवलयत्रिरेखाभिः**, वसवोऽष्टौ,

तेन वसुशब्देन अष्टसंख्या लक्ष्यते । वसुदलं अष्टदलं, कलाश्रं—कलाः षोडश, तेन कलाशब्देन षोडशसंख्या लक्ष्यते । अश्रशब्देन दलं लक्ष्यते । अतः कलाश्रं षोडशदलमित्यर्थः । त्रिवलयं त्रयाणां वलयानां समाहारः त्रिवलयं, त्रिमेखलमित्यर्थः । त्रिरेखाः प्राकारवलयाकाररेखाः, भूपुरत्रयमित्यर्थः । एतच्च भूपुरत्रयं चतुर्दिक्षु द्वारयुक्तम् । तथा चोक्तम् ।

बिन्दुत्रिकोणवसुकोणदशारयुग्म-
मन्वश्रनागदलसंयुतषोडशारम् ।
वृत्तत्रिभूपुरयुतं परितश्चतुर्द्वाः
श्रीचक्रमेतदुदितं परदेवतायाः ॥ इति ।

श्रुतिरपि— **सतद्वाऽट्टारंगमं ता सँहार्यं नगरं तव ।**
**(ताभिः सार्धं तव शरणकोणाः)** ॥ इति । (तै.आ. १.३१)

**अस्यार्थः**—सतद्वा, चतुर्द्वारमित्यर्थः । छान्दसोऽवर्णलोपश्च । अट्टारगमं अट्टारैः प्राकारवलयैः त्रिभिः अगमं दुर्गमम् । ता तानीमानि भूतानि । भगवति! तव नगरं पुरं श्रीचक्रात्मकं संहार्यं संहारकमित्यर्थः । पृथिव्यादिमहेश्वरान्तानि तत्त्वानि तत्रैव लीयन्त इति तात्पर्यम् ॥

केचिदेवं व्याचक्षते—संहार्यं संहारक्रमेण लेखनीयमिति । तत्र,

कौलमत एव संहारक्रमेण चक्रस्य लेखनीयत्वादिति । प्रकृतमनुसरामः—

ताभिः **सार्धं** सह, **तव** भवत्याः, **शरणकोणाः** शरणं गृहं बैन्दवं मन्दिरं, तच्च कोणाश्चेति द्वन्द्वसमासः । ततः कोणाश्चतुश्चत्वारिंशदित्यर्थः ॥

ननु बिन्दुत्रिकोणेत्यादिक्रमेण त्रिकोणबिन्दुभ्यां योगे षट्चत्वारिंशत्कोणाः बिन्दुपरित्यागे पञ्चचत्वारिंशत्कोणा इति चेत्—

सत्यं, प्रस्तारवशात् त्रिकोणस्याधस्थितं कोणद्वयमष्टकोणे अन्तर्गतम् । ततश्च कोणाः त्रिचत्वारिंशदेवेति ॥

शरणेन सार्धं कोणा इति द्वन्द्वसमासगत्या व्याख्यानम् । यद्वा, त्रयश्चत्वारिंशदिति पाठान्तरम् । तत्र स्पष्ट एवार्थः । **परिणताः** परिणामं प्राप्ताः ।

**अयमर्थः**—त्रिकोणाष्टकोणदशकोणयुगलचतुर्दशकोणात्मकानि शक्तिचक्राणि । अष्टदलषोडशदलमेखलात्रयभूपुरत्रयात्मकानि चत्वारि शिवचक्राणि । त्रिकोणे वसुदलं वसुकोणे षोडशदलं दशारयुग्मे मेखलात्रितयं भुवनाश्रके भूगृहं अन्तर्भूतमिति परिणतमित्युच्यते । एतच्च पूर्वमेव प्रतिपादितम् ॥

**अत्रेत्थं पदयोजना**—हे भगवति ! चतुर्भिः श्रीकण्ठैः शम्भोः सकाशात्प्रभिन्नाभिः पञ्चभिः शिवयुवतिभिः नवभिरपि मूलप्रकृतिभिः तव शरणकोणाः वसुदलकलाश्रत्रिवलयत्रिरेखाभिः सार्धं परिणताः सन्तः चतुश्चत्वारिंशदिति ।

**अत्रेदमनुसन्धेयम्**—अस्मिन् चक्रे अष्टाविंशतिमर्मस्थानानि । सन्धयस्तु चतुर्विंशतिः । ननु मर्माणि चतुर्विंशतिरेव, कथमष्टाविंशतिः ?

द्विरेखासङ्गमस्थानं सन्धिरित्यभिधीयते ।

त्रिरेखासङ्गमस्थानं मर्म मर्मविदो विदुः ।। इति ।।

उच्यते—अष्टदलषोडशदलमेखलात्रयभूपुरत्रयाणां शिवचक्राणां त्रिरेखासङ्गमस्थानत्वाभावेऽपि वाचनिकी मर्मसंज्ञा । यथोक्तं चन्द्रज्ञानविद्यायाम्—

मन्वश्रद्विदशाराष्टकोणवृत्तचतुष्टयम् ।
अष्टाविंशतिमर्माणि चतुर्विंशतिसन्धयः ।। इति ।।

**अस्यार्थः**—चतुर्दशकोणे दशारयुग्मे अष्टकोणे च त्रिरेखासङ्गमस्थानगणनायां चतुर्विंशतिमर्मस्थानानि वृत्तचतुष्टयेन शिवचक्रात्मकेन सार्धं अष्टाविंशतिरिति ।

एतत्सर्वं चक्रलेखनाऽपरिज्ञाने ज्ञातुं दुश्शकमिति चक्रलेखनप्रकारो निरूप्यते । स च द्विप्रकारः, सृष्टिक्रमेण संहारक्रमेण चेति । संहारक्रमेण लेखनं कौलमार्ग एव । तथापि नवयोनिपरिज्ञानार्थं स प्रकारो निरूप्यते—

संहारक्रमेण तावत्—वृत्तमालिख्य, वृत्तमध्ये नव रेखाः लिखित्वा, पश्चिमरेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य, स्वापेक्षया षष्ठ्या रेखया योजयेत् । एवं प्राग्रेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य, स्वापेक्षया सप्तम्या रेखया योजयेत् । पश्चिमद्वितीयरेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य स्वापेक्षया अष्टम्या योजयेत् । प्राग्द्वितीयरेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य स्वापेक्षया अष्टम्या योजयेत् । ततः प्राक्पश्चिमतृतीयरेखाप्रान्ताभ्यां षट्कोणमालिखेत् । षट्कोणमध्यस्थितह्रस्वरेखात्रितये पश्चिमरेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य स्वापेक्षया पञ्चम्या योजयेत् । एवं प्राग्रेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य स्वापेक्षया पञ्चम्या योजयेत् । मध्यस्थितातिह्रस्वरेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य स्वापेक्षया तृतीयरेखया योजयेत् । एवं चतुर्विंशतिमर्माणि चतुर्विंशतिसन्धयः, नवयोनिचक्रम् । एतत् कौलमतरहस्यम् ।

सृष्टिक्रमस्तु समयमार्गः । स च निरूप्यते—आदौ त्रिकोणमालिख्य, मध्ये बिन्दुं निक्षिप्य, बिन्दोरुपरि त्रिकोणं भित्वा त्रिकोणान्तरं प्रागग्रं विलिख्य, प्रथमत्रिकोणाग्रात् त्रिकोणान्तरं पश्चिमाभिमुखं विलिखेत् । एवं अष्टकोणचक्रमुत्पन्नम् । एतस्मादेव दशारमुत्पादयेत् । तद्यथा—अष्टकोणप्राक्पश्चिमरेखाप्रान्ताभ्यां षट्कोणमुत्पाद्य विदिग्गतमर्मस्थानेभ्यः चतुर्भ्यः चतुरस्त्रिकोणानुत्पाद्य अष्टकोणगतयोनेरुपरि दक्षिणोत्तरायतरेखा ईशानाग्निकोणत्रिकोणेषु योजयेत्, एवं पश्चिमतो योजयेत्, दशारं भवति । एतस्मादेव दशारात् पुनः दशारान्तरं उक्तरीत्या उत्पादयेत् । एतस्मादेव दशाराच्चतुर्दशारमुत्पादयेत् । तद्यथा—प्रथमदशारपूर्वपश्चिमरेखाप्रान्ताभ्यां षट्कोणमुत्पादयेत् । षट्कोणगतमर्मस्थानेभ्यः चतुर्भ्यः त्रिकोणचतुष्कमुत्पादयेत् । ततः उपरिस्थितमर्मचतुष्टयात् दशारन्यायेन त्रिकोणचतुष्कमुत्पाद्य प्राक्पश्चिमरेखा मेलयेत् । एवं त्रयश्चत्वारिंशत्कोणाः, चतुर्विंशतिसन्धयः, चतुर्विंशतिमर्माणि इति । एतत् समयमतरहस्यम् । अस्मिन् चक्रे त्रिकोणमूर्ध्वमुखं लेखनीयम् । कौलचक्रे त्रिकोणमध्यगतो बिन्दुः । समयचक्रे चतुष्कोण मध्यगतो बिन्दुः । कौलचक्रे कोणसंख्या नास्ति, नवत्रिकोणात्मकत्वात् । नवानां त्रिकोणानां मेलने मर्मसन्धय एवोत्पद्यन्त इति महद्रहस्यम् ।।

उभयचक्रसाधारणमत ऊर्ध्वमष्टदलपद्मं, ततः षोडशदलपद्मं, ततः मेखलात्रितयम्, ततश्चतुर्द्वारयुक्तं भूपुरत्रितयम्, इति श्रीचक्रोद्धारो विज्ञातव्यः ।

अत्र मेरुप्रस्तारकैलासप्रस्तारभूप्रस्ताराः त्रयः सम्भवन्ति । **मेरुप्रस्तारो** नाम—नित्याषोडशतादात्म्यम् । **कैलासप्रस्तारो** नाम—मातृकातादात्म्यम् । **भूप्रस्तारो** नाम—वशिन्यादितादात्म्यम् । एतत्सर्वं **'चतुष्षष्ट्या तन्त्रैः'** (३१ श्लोक) इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः ॥

अत्र **रुद्रयामले** विशेष उक्तः—

**पृश्नयो नाम मुनयः सर्वे चक्रसमाश्रयाः ।**
**सेवमानाश्चक्रविद्यां देवगन्धर्वपूजिताम् ॥**
**अग्नीषोमात्मकं चक्रमग्नीषोममयं जगत् ।**
**अग्नावन्तर्बभौ भानुः अग्नीषोममयं स्मृतम् ॥**
**त्रिखण्डं मातृकाचक्रं सोमसूर्यानलात्मकम् ।**
**त्रिकोणं बैन्दवं सौम्यमष्टकोणं च मिश्रकम् ॥**
**चक्रं चन्द्रमयं चैव दशारद्वितयं तथा ।**
**चतुर्दशारं वह्नेस्तु चतुश्चक्रं च भानुमत् ॥**
**एतत्प्रासादादिन्द्राद्या वसवोष्टौ मरुद्गणाः ।**
**ये ये समृद्धा लोकेऽस्मिन् त्रिपुराचक्रसेवकाः ॥**
**पुरत्रयं च चक्रस्य सोमसूर्यानलात्मकम् ।**
**महालक्ष्म्याः पुरं चक्रं तत्रैवास्ते सदाशिवः ॥** इति ॥

इममेवार्थं श्रुतिरप्याह **तैत्तिरीयके अरुणोपनिषत्** 'इमा नुकं भुवना सीषधेम' इत्यारभ्य 'ऋषिभिरदात् पृश्निभिः' इत्यन्ता । अरुणोपनिषन्नाम—अरुणायाः भगवत्याः प्रतिपादिका उपनिषत् । 'भद्रं कर्णेभिः' इत्यारभ्य 'तपस्वी पुण्यो भवति' (तै.आ. प्रथम प्रश्नः इत्यन्ता) अरुणोपनिषत् अरुणामेव प्रतिपादयति । इममर्थं दृष्टवान् अरुणकेतुः ऋषिः । श्रुत्यर्थस्तावत्—**इमा नुकं भुवना सीषधेम ॥**

**अस्यार्थः**—पृश्नयो नाम मुनयः परस्परं सङ्गिरन्ते । इमां चक्रविद्याम् । नुकं वितर्के । भुवना भुवनानि । सीषधेम अवगच्छाम । चक्रविद्यामुपाश्रित्यैव भुवनान्यवतिष्ठन्त इति वितर्कयाम इत्यर्थः । यद्वा—इमां चक्रविद्यां भुवना भुवनात्मतया सीषधेम नुकं, नु पृच्छायाम् । 'नु पृच्छायां वितर्के च' इत्यमरः ॥

**इन्द्रश्च विश्वे च देवाः ॥**

अस्य वाक्यस्यार्थः स्पष्ट एव । चक्रविद्यामुपाश्रित्यैव आसत इति शेषः ॥

**यज्ञं च नस्तन्वं च प्रजां च । आदित्यैरिन्द्रः सह सीषधातु ॥**

**अस्यार्थः**—यज्ञमग्निष्टोमादिकं नः अस्माकं तन्वं तनूं शरीरार्धं पत्नीमिति यावत् । प्रजां सन्तानम् । चकारात्सर्वास्सम्पदः । आदित्यैः मरुद्गणैः, सह इन्द्रः चक्रविद्योपासनात् प्राप्तपरमैश्वर्यः । इन्द्रश्चक्रविद्यामस्माकं उपदिश्य सीषधातु सम्पा(दयतु)दितवान् । प्राप्तकाले लोट् ॥

**आदित्यैरिन्द्रः सगणो मरुद्भिः । अस्माकं भूत्वविता तनूनाम् ॥**

**मन्त्रद्वयस्यार्थः**—तनूनां पुत्रमित्रकलत्रादीनां अविता रक्षकः भूतु भवतीत्यर्थः । इन्द्र

एवास्माकं योगक्षेमसम्पादक इति भावः ॥

**आप्लवस्व प्रप्लवस्व ॥**

पृश्नयश्चक्रविद्यां प्रस्तुवन्ति । आपादमस्तकं प्लवनं अमृतनिष्यन्दसेचनं कुरु । प्रकर्षेण प्लवनं द्विसप्ततिसहस्रनाडीमार्गेषु आसेचनं कुरु ॥

**आण्डीभव ज मा मुहुः ॥**

आण्डी—पिण्डाण्डं ब्रह्माण्डं च, च्विप्रत्ययान्तः । भव पिण्डाण्डरूपेणास्मदीयेन ब्रह्माण्डरूपेण बाह्येन भवदीयेन प्राप्नुहि, भवत्सायुज्यं देहीत्यर्थः । ज अवगच्छ । मुहुर्मामवगच्छ, अनुगृहाणेत्यर्थः । 'अज गतौ' इति धातोः अकारलोपश्छान्दसः ॥

**सुखादीं दुःखनिधनाम् ॥**

**अस्यार्थः**—सुखमत्ति अदयतीति सुखादि सुखसम्पादकः इन्दुः चन्द्रः, बैन्दवस्थानगतः । खनिधनां—खं बैन्दवस्थानमेव नितरां धनं यस्यास्सा ताम् । यद्वा—सुखादीं सुखप्रथमां सुखात्मिकाम् । दुःखस्य निधनं नाशो तत्रेति दुःखनिधनां, अविज्ञातदुःखगन्धामित्यर्थः। यद्वा—सुखादीं शोभनेन खेन इन्द्रियेण मनसा आदीं आद्यां, मनोवेद्यामित्यर्थः । दुःखनिधनां दुःखानां दुष्टेन्द्रियाणां चक्षुरादीनां अगोचरामिति ॥

**प्रतिमुञ्चस्व स्वां पुरम् ॥**

स्वां भागवतीं पुरं देहं रेफान्तःशब्दः, प्रतिमुञ्चस्व अधितिष्ठ ॥

**मरीचयः स्वायंभुवाः ॥**

**अस्यार्थः**—स्वयं भगवत्याः सकाशात् भवा उत्पन्नाः मरीचयो मयूखाः । सर्वाणि भुवनानि आवृत्य वर्तन्त इति वाक्यशेषः । सूर्यचन्द्राग्नीनां प्रकाशकत्वं स्वायंभुवमरीचिप्रसादादेवेति उत्तरत्र वक्ष्यते ॥

**ये शरीराण्यकल्पयन् ॥**

**अस्यार्थः**—ये मयूखाः षष्ट्युत्तरत्रिशतसङ्ख्याकाः शरीराणि कालात्मकानि षष्ट्युत्तरत्रिशतसङ्ख्याकानि दिनानि, तान्येव संवत्सरः, 'संवत्सरो वै प्रजापतिः' (तै.ब्रा. १.६.२) इति श्रुतेः ॥

**ते ते देहं कल्पयन्तु ॥**

ते मरीचयः, ते तव भगवत्याः, देहं कल्पयन्तु देहमाश्रयन्तु । देहशब्देन देहावयवचरणमुच्यते । भववच्चरणोत्पन्ना इत्यर्थः ॥

**मा च ते ख्या स्म तीरिषत् ॥**

ते तव ख्या ख्यतिः ज्ञानं मा च तीरिषत् अस्मान् न जहातु, भवद्विषयज्ञानं अस्माकं सदा सिद्ध्यत्वित्यर्थः ॥

इतः परं पृश्नयश्चक्रविद्यानुष्ठाने त्वरमाणाः परस्परं सङ्गिरन्ते—

**उत्तिष्ठत मा स्वप्त । अग्निमिच्छध्वं भारताः ।**
**राज्ञः सोमस्य तृप्तासः । सूर्येण सयुजोषसः ॥**

**ऋचोऽयमर्थः**—हे भारताः भायां भारूपायां ज्योतीरूपायां चक्रविद्यायामिति यावत्, रताः उपासनारताः । यद्वा—भारत्याः सरस्वत्याः श्रीविद्यायाः उपासकाः । सामान्यविहित-प्रत्ययस्य विशेषवाचित्वात् भारता इति । उत्तिष्ठत उपासनोपक्रमं कुरुत । मा स्वप्त अप्रमत्ता भवत । अग्निमिच्छध्वं स्वाधिष्ठानगताग्निं प्रज्वलयत । राज्ञश्चन्द्रस्य । उमया सहितः सोमः । चन्द्रमण्डलान्तर्गतवैन्दवस्थानगतत्वात् देव्याः, चन्द्रस्य सोमशब्दवाच्यत्वसिद्धिः । तस्य चन्द्रस्य निष्यन्दैः तृप्तासः तृप्ताः । सूर्येण अनाहतचक्रविशुद्धिचक्रयोर्मध्ये स्थितेन सूर्येण, सयुजा अग्निचन्द्रयोर्मध्यवर्तिना इत्यर्थः । यद्वा—सूर्येण सयुजा राज्ञा तृप्तास इत्यन्वयः । कीदृशाः ?—उषसः प्लुष्टमायामयक्लेशाः । यद्वा—उषसः उषःकाले ध्यानरताः, तस्मिन् काल एव भगवतीनिदिध्यासनादेर्विहितत्वात् ॥

इतःपरं पूजासामग्रीमुपदिशन्ति पृश्नयः—

**युवा सुवासाः ॥**

युवा दृढाङ्गः स्वस्थः । सुवासाः शुभ्रवस्त्रः । इदं शुभ्राभरणशुभ्र—माल्या-दीनामुपलक्षकम् । एवंविधः सन् पूजयेदिति शेषः ॥

श्रीचक्रस्य स्वरूपं तावदाहुः—

**अष्टाचक्रा नवद्वारा ॥**

अष्टकोण—दशकोणद्वितय—चतुर्दशकोण—अष्टपत्र—षोडशपत्र—त्रिवलय—त्रिरेखात्मकानि अष्टौ चक्राणि यस्याः सा अष्टाचक्रा । अत एव नवद्वारा नवसङ्ख्याकानि द्वाराणि त्रिकोणरूपाणि यस्याः सा नवद्वारा ॥

**देवानां पूरयोध्या ॥**

देवानामिन्द्रादीनां पूज्यत्वेन सम्बन्धिनी पूः श्रीविद्यानगरम् । यद्वा—दीव्यन्तीति देवाः पञ्चविंशतितत्त्वानि तेषां पूरधिष्ठानम् । यद्वा—सूर्यचन्द्राग्नीनां पूः, सोमसूर्यानलात्मकत्वात् श्रीचक्रस्य । तस्य पुरत्रयसमष्टिरूपत्वात् पूरित्येकवचनसिद्धिरिति ध्येयम् । अयोध्या असाध्या, मन्दभाग्यानामिति शेषः ॥

**तस्यां हिरण्मयः कोशः । स्वर्गो लोको ज्योतिषाऽऽवृतः ॥**

**अस्यार्थः**—तस्यां पुरि श्रीचक्रमध्ये हिरण्मयः कोशः, सहस्रदलकमलकोश इत्यर्थः, बैन्दवस्थाने सहस्रदलकमलकोशस्य विद्यमानत्वात् । तस्य कोशस्य ज्योतिषा स्वर्गो लोकः आवृतः । ज्योतिर्लोकः स्वर्गलोक इत्यर्थः ॥

अथ पृश्नयः चक्रविद्योपासनायाः फलमाहुः—

**यो वै तां, ब्रह्मणो वेद । अमृतेनावृतां पुरीम् ।**
**तस्मै ब्रह्म च ब्रह्मा च । आयुः कीर्तिं प्रजां ददुः ॥**

**अयमर्थः**—ब्रह्मणः ब्रह्मस्वरूपायाः भगवत्याः तां पूर्वोक्तां अमृतेन आवृतां चन्द्रमण्डलगलत्पीयूषधारावृतां पुरीं श्रीचक्ररूपां त्रिपुरायाः पुरं यो वेद ज्ञानपूर्वकमर्चनं करोति तस्मै विदुषे अर्चकाय, ब्रह्म च ब्रह्मस्वरूपा भगवती, ब्रह्मा च ब्रह्मरूपो भगवान् । चकारद्वयं उभयोर्मेलनं समुच्चिनोति, मिलितयोरेव बैन्दवस्थाने सहस्रारे सुधासिन्धुमध्ये मणिद्वीपे

चिन्तामणिगृहे निवासात् । एतौ उभौ आयुः जीवितं कीर्तिं यशः, प्रजां सन्तानं, ददुः दद्यातां इत्यर्थः । 'व्यत्ययो बहुलम्' इति वचनव्यत्ययः ॥

शिवशक्त्योः तत्रैव निवासमाहुः—

**विभ्राजमानाँ हरिणीम् । यशसा सम्परीवृताम् ।**

**परँ हिरण्मयीं ब्रह्मा । विवेशापराजिता ॥**

**ऋचोऽयमर्थः**—विभ्राजमानां अनन्तकोटिसंख्याककिरणैरिति शेषः, प्रकाशमानाम् । हरिणीं हिरण्यवर्णां, 'हिरण्यवर्णां हरिणीं' (श्रीसूक्ते) इति श्रुतेः । यशसा कीर्त्या सम्यक्परिवृताम्, ये ये लोके कीर्तिमन्तस्ते सर्वे भगवतीप्रसादसमासादितकीर्तिमन्त इत्यर्थः । तां बैन्दवीं पुरं चिन्तामणिगृहं, ब्रह्मा सदाशिवः, 'ब्रह्मा शिवो मे अस्तु सदाशिवोम्' (तै.उ. ४.२९) इति श्रुतेः पुल्लिङ्गब्रह्मशब्दसदाशिवशब्दयोः एक एवार्थः प्रतीतः । विवेश अपराजिता सादाख्या चन्द्रकला विवेश । वाक्यद्वयेन उभयोः प्रवेशभेदप्रतिपादनं 'बैन्दवे चिन्तामणिगृहे सदाशिवः सर्वदा सन्निहितः; अपराजिता कुण्डलिनीशक्तिः षट्चक्राणि भित्वा भूयो भूयः प्रविशति' इतीममर्थं ज्ञापयितुम् ॥

शिवशक्त्योः तस्मिन् चक्रे अवस्थितिप्रकारमाहुः—

**पराङेत्यज्यामयी । पराङेत्यनाशकी ॥**

**अस्यार्थः**—पराङ् अधोमुखी चक्ररूपिणी शिवशक्त्योर्मध्ये शक्तिः अज्यामयी ज्यानिरहिता नाशरहिता नित्या दुःखरहिता आनन्दमयी इत्यर्थः । एति वर्तते । यद्वा— अज्या-मयी, ज्या भूमिः तेन पञ्चभूतानि लक्ष्यन्ते, तन्मयी, न भवतीत्यज्यामयी, मनस्तत्त्वादिमयी, शिवचक्रात्मकचतुर्योन्यात्मिकेति यावत्, शिवयोनीनां बैन्दवस्थानादधः अवाङ्मुखतया अवस्थानात् । अनाशकी नाशरहिता शक्तिचक्रात्मकपञ्चयोन्यात्मिका । पराङ् अधोमुखी एति, शक्तियोनीनामपि शिवयोन्यपेक्षया अवाङ्मुखत्वात् । एवं शिवयोनि-शक्तियोन्योः परस्परमवाङ्मुखत्वं चक्रलेखनक्रमादवगम्यते ।

विदुषः फलमाहुः—

**इह चामुत्र चान्वेति । विद्वान् दैवासुरानुभयान् ॥**

दीव्यन्तीति देवाः एकादशेन्द्रियाणि । असुराः असवः प्राणाः प्राणादिपञ्चवायवः तान् रान्ति आददत इति पञ्च तन्मात्रा उच्यन्ते । उभयान् उभयत्र देवासुरेषु अन्वितान् मायाशुद्ध-विद्यामहेश्वरसदाशिवान् । यो विद्वान् पञ्चविंशतितत्त्वजातं विदित्वा शिवशक्तिसम्पुटात्मकं पञ्चविंशतितत्त्वविलक्षणं षड्विंशतत्त्वं यस्तु वेत्ति स विद्वान् इह च इह लोके, पूजा तारतम्य-वशात्, अमुत्र च परलोके, सार्ष्टिसालोक्यसामीप्यसारूप्यसायुज्यात्मिकया पञ्चविधया मुक्त्या अन्वेति युज्यते । साष्टर्यादिस्वरूपं सप्रपञ्चं पुरस्तात् (४९ श्लोकव्याख्याने) प्रपञ्च्यते ।

अथ देवासुरोभयज्ञानोपायमाहुः—

**यत्कुमारी मन्द्रयते यद्योषिद्यत्पतिव्रता ।**

**अरिष्टं यत्किञ्च क्रियते । अग्निस्तदनुवेधति ॥**

**अयमर्थः**—कुण्डलिनीशक्तेरवस्थात्रयं विद्यते । यस्मिन् चक्रे कुमारी कौमारावस्था-

मापन्ना प्रथमं सुप्तोत्थिता मन्द्रयते मन्द्रस्वरं करोति, कुण्डलिन्याः सर्पात्मकत्वात् । सर्पो हि सुप्तोत्थाने मन्द्रस्वरं करोति, तद्वदित्यर्थः । यद्योषित् यस्मिन् चक्रे कुलयोषित् विष्णुग्रन्थि-पर्यन्तं गत्वा, रातीति शेषः ।

**कुलयोषित् कुलं त्यक्त्वा राति विष्णोः प्रभेदने ।**

इति **सनत्कुमारवचनात्** । यत् यस्मिन् चक्रे पतिव्रता पत्या सदाशिवेन सार्धं सहस्र-दलकमले विहरमाणा । रिष्टं शुभाभावं 'रिष्टं क्षेमे शुभाभावे' इत्यभिधानात्, तदन्यदरिष्टं शुभं, अमृतास्वादमित्यर्थः, यत्किञ्चित्क्रियते तत् स्वाधिष्ठानगतोऽग्निः अनुवेधति सहायं करोति । अतश्च अभ्यासवशात् वायुना अग्निं प्रज्वाल्य अग्निशिखानुविद्धविलीनचन्द्रमण्डलगल-त्पीयूषधारानुभवे पञ्चविंशतितत्त्वातीता परमेश्वरी इति ज्ञातुं सुशकमित्युपदेशः ।

चक्रविद्योपासनं वर्णिनां आश्रमिणां ज्ञानिनामज्ञानिनां च फलदायकमित्यभिसन्धा-याहुः—

**अश्रृतासश्शृतासश्च यज्वानो येऽप्ययज्वनः स्वर्यन्तो नापेक्षन्ते ॥**

**अयमर्थः**—अशृतासः = अपक्वाः, अक्षपितान्तःकरणकल्मषा इत्यर्थः । शृतासश्च पक्वाश्च—'आज्जसेरसुक्' इत्यसुगागमः, क्षपितान्तःकरणकल्मषा इत्यर्थः । यज्वानः यजन-शीलाः त्रैवर्णिकाः आश्रमिणश्च । अयज्वनः यागरहिताः शूद्रादयः । 'तस्माच्छूद्रो यज्ञेऽनव-क्लृप्तः' (तै.सं. ७.१.१) इति श्रुतिः त्रैवर्णिकैकनियताधिकारयज्ञशब्दवाच्याग्निष्टोमादिपरा । चक्रविद्योपासने शूद्राणामपि अधिकारचोदनात्, निषादस्थपतिवत् वैदिके कर्मण्यधिकारसिद्धेः न काचित् क्षतिः ! यन्तः, इण् गतौ, चक्रविद्यामवगच्छन्तः स्वः स्वर्गं नापेक्षन्ते ।

चक्रविद्योपासनाव्यतिरेकेण देवतान्तरोपासनायामनिष्टमाहुः—

**इन्द्रमग्निं च ये विदुः । सिकता इव संयन्ति ।**
**रश्मिभिः समुदीरिताः । अस्माल्लोकादमुष्माच्च ॥**

**अयमर्थः**—सुरासुरमुख्यवन्दितचरणारविन्दयाः सर्वभूतान्तर्यामिन्याः सर्वव्यापिन्याः जगदुत्पत्तिस्थितिलयहेतोश्चक्रविद्याया अन्यत्वेन ये इन्द्रमग्निं, चकारात् यमादिलोकपालान् पृथिव्यादिसदाशिवान्ततत्त्वानि च, उपास्यत्वेन ये विदुः ते सिकता इव बालुकाकणा इव संयन्ति, परस्परं विरलाः भ्रष्टा भवेयुरित्यर्थः । किञ्च—रश्मिभिः यमपाशैः उत्तरप्रबन्धे 'अपेत वीत' इत्यादौ प्रतिपादितैः, समुदीरिताः संयता बद्धा भवेयुः इत्यर्थः । किञ्च—अस्माल्लोकात् अमुष्माल्लोकाच्च भ्रष्टा भवेयुरिति शेषः । अत एव श्रुत्यन्तरम्—

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ॥ (ई.उ. ९)**

**अयमर्थः**—अविद्यां विद्याविरुद्धां ज्ञानमार्गविरुद्धां इन्द्रादिसेवां 'वाचं धेनुमुपासीत' (बृ. उ. ७.८.१) इत्येवमध्यारोपितसेवां च ये कुर्वते ते अविद्वांसः अन्धं तमः प्रविशन्ति, अन्धतामिस्रं प्रविशन्तीत्यर्थः । चकारः प्रकरणसमाप्तिद्योतकः ॥

**ऋषिभिरदात् पृश्निभिः ॥**

पृश्निनामभिः ऋषिभिः एतत्सर्वमदात्, अदायि । कर्मणि लुङ् छान्दसः कर्मणि प्रत्ययलोपः, कर्तृप्रत्ययव्यत्ययश्च । ऋषिभिः पृश्निभिरेवमुक्तमित्यर्थः । यद्वा—पृश्निभिः ऋषिभिः सहितः ऋषिसङ्घः एवमदात्, वाचमिति शेषः, उक्तवानित्यर्थः ॥ ११ ॥

## * सरला *

पूर्व श्लोक (द्र० १०) में इन्द्रमण्डलात्मक श्रीचक्र का निर्देश किया गया है, उस श्रीचक्र का स्वरूप इस आगे के श्लोक में बता रहे हैं—

**चतुर्भिः** चार संख्या वाला संख्येय, **श्रीकण्ठैः** जो हिंसा करे वह श्री, अर्थात् विष है कण्ठ में जिसके, अतः वे कोण भी श्रीकण्ठ हैं, अर्थात् हर, इसलिये उनके कोणों को भी यहाँ अभेद सम्बन्ध से 'श्रीकण्ठ' शब्द से कहा गया है। इसलिये बहुवचन का प्रयोग है। 'श्रीकण्ठात्मक' इसका अर्थ है पाँच कोणों से **शिवयुवतिभिः** शक्तियों से युक्त, पहले की भाँति बहुवचन प्रयोग है अर्थात् शक्त्यात्मकों से, **पञ्चभिः । अपि** यहाँ अपि शब्द भेदार्थक है। **प्रभिन्नाभिः** अत्यन्त भिन्नता से युक्त। वैन्दव स्थान शिवशक्तिचक्र के मध्य में स्थित हैं यही उसकी प्रकृष्टता है। इस प्रक्रिया को समय मत के अनुसार 'सृष्टिक्रम' से श्रीचक्र के लिखने में समझनी चाहिए। कौलमतानुसार संहार क्रम से उक्त नवयोनिचक्रलेखन में शक्ति चक्र ऊर्ध्वमुख तथा शिवचक्र अधोमुख रहता है। इसलिये भी अत्यन्त भिन्नता है। इसलिये दोनों ही पृथक्-पृथक् रूप से स्थित हैं। **शम्भोः** यहाँ पञ्चमी विभक्ति है। शम्भु शब्द से चार श्रीकण्ठ कोण विवक्षित हैं। **नवभिः** नवसंख्या से युक्त, **अपि** शब्द आगे कहे जाने का बाहुल्य सूचित करता है। **मूलप्रकृतिभिः** प्रपञ्च के मूल कारणभूत हैं। इसीलिये उनका योनि शब्द से व्यवहार होता है। ये नवयोनियाँ शरीर में रहने वाली नव धातुयें ही है जैसा कि कामिकागम में कहा गया है—

१. त्वक्, २. असृक्, ३. मांस, ४. मेद, ५. अस्थि—ये ५ धातुयें शक्तिमूलक हैं। ६. मज्जा, ७. शुक्ल, ८. प्राण और ९. जीव—ये ४ धातुयें शिवमूलक हैं ॥ १ ॥ यह शरीर इन्हीं नव धातुओं से बना है जो नवो योनियों से उत्पन्न है। एक और दसवीं योनि भी है जो उस देह की ईश्वरी परा शक्ति है ॥ २ ॥

दसवीं योनि 'बैन्दव स्थान' हैं। तदीश्वरी अर्थात् देह की 'ईश्वरी' वही है।

इन्हीं से पिण्डाण्ड एवं ब्रह्माण्ड उत्पन्न होकर भासित हो रहा है। पञ्च महाभूत शक्ति तत्त्व है और माया, शुद्ध विद्या, महेश्वर और सदाशिव—ये शिवात्मक तत्त्व हैं इन्हीं शिवशक्त्यात्मक नौ तत्त्वों में २५ तत्त्वों का अन्तर्भाव हो जाता है।

११ इन्द्रियाँ और ५ तन्मात्राएँ यही 'तद् ब्रह्माण्डमुद्गभौ' में तद् शब्द से विवक्षित है।

यह चराचरात्मक जगत् शिवशक्त्यात्मक ही समझना चाहिए ॥ ३ ॥

चर पिण्डाण्ड को तथा अचर ब्रह्माण्ड को कहा गया है।

कुछ विद्वान् ५१ तत्त्व मानते हैं—

पञ्चमहाभूत, पञ्च तन्मात्राएँ, ५ ज्ञानेन्द्रियाँ, ५ कर्मेन्द्रियाँ, त्वगादि ७ धातुएँ, ५ प्राणादि वायु, मन, अहङ्कार, ख्याति, ३ गुण, प्रकृति, पुरुष, राग, विद्या, कला, नियति, काल, माया, शुद्ध विद्या, महेश्वर, सदाशिव, शक्ति और शिवतत्त्व—ये इक्यावन तत्त्व होते हैं ॥ १-४ ॥

इन्हीं ५१ तत्त्वों का प्रतिपादन वायवीय संहितादि शैवपुराणों में किया गया है।

इसका अर्थ इस प्रकार है—पञ्चमहाभूत—पृथ्वी, जल, तेज, वायु, आकाश जो कार्य कारण रूप से अवस्थित हैं। गन्धादि ५ तन्मात्राएँ पृथ्व्यादि तत्त्वों के कारण रूप से स्थित हैं। **ज्ञानेन्द्रियाँ**—श्रोत्र, त्वक्, चक्षु, जिह्वा और घ्राण। **कर्मेन्द्रियाँ**—वाक्, पाणि, पाद, पायू और उपस्थ। **धातु**—त्वग्, असृग्, मांस, मेद, अस्थि, मज्जा और शुक्र। **वायु**—प्राण, अपान, व्यान, समान और उदान। **मन**—मननात्मिका शक्ति। **अहङ्कृति**—अहङ्कारजनिका शक्ति। **ख्याति**—ज्ञान। **गुण**—सत्त्व, रज और तम। **प्रकृति**—मूलप्रकृति। **पुरुष**—जीव। **राग**—इच्छा। **विद्या**—शास्त्रजनितविकल्प का ज्ञान। **कला**—३६० संख्या वाली। **नियति**—सबको नियन्त्रित करने वाली शक्ति। **काल**—सबका संहारकर्त्ता। **माया**—ऐन्द्रजालिक विज्ञान। **शुद्धविद्या**—मोक्ष विषयक ज्ञान। **महेश्वर**—रजोगुण विशिष्ट सृष्टिकर्त्ता। **सदाशिव**—सृष्टि का पालन करने वाले। **शक्ति**—महेश्वर सदाशिव में रहने वाली रक्षण तथा सर्जन की शक्ति। चकार से कालात्मिका भी, अर्थात् संहारिणीशक्ति भी लेना चाहिए। **शिवतत्त्व**—शुद्ध बुद्ध मुक्त स्वरूप। इन सभी तत्त्वों में कुछ तत्त्व ऐसे भी है जिनका किन्हीं किन्हीं तत्त्वों में अन्तर्भाव सम्भव है, जैसे त्वगादि सात धातु का अन्तर्भाव पञ्चभूतों में, प्राणादि वायुओं का अन्तर्भाव वायु में, अहङ्कार का अन्तर्भाव मन में, ख्याति का विद्या में, गुणों का अन्तर्भाव प्रकृति में और प्रकृति का अन्तर्भाव शक्ति में, पुरुष का अन्तर्भाव महेश्वर में, कला का अन्तर्भाव शुद्ध विद्या में, नियति का भी अन्तर्भाव शक्ति मे, काल का महेश्वर और सदाशिव में, शक्ति का शुद्धविद्या में तथा शिवतत्त्व का अन्तर्भाव सदाशिव तत्त्व में हो जाता हैं। अतः केवल २५ तत्त्व ही हैं, जो इस प्रकार हैं—

पञ्चभूत, पञ्चतन्मात्राएं, ५ ज्ञानेन्द्रियाँ, ५ कर्मेन्द्रियाँ, मन, माया, विशुद्धविद्या, महेश्वर एवं सदाशिव—ये चार। यही २५ तत्त्व सर्वसम्मत हैं। क्योंकि श्रुतियों में भी इन्हीं २५ तत्त्वों का प्रतिपादन है, जैसा कि तैत्तिरीय ब्राह्मण पञ्चविंश आत्मा होती है (तै.ब्रा. १.२.६) इसलिये ३६ तत्त्व का विकल्प श्रुति के अनुसार २५ तत्त्व परक ही है, ऐसा समझना चाहिए। इसलिये शिवशक्ति का सम्पुट सर्वतत्त्वातीत है। उसी से जगत् की उत्पत्ति होती है। जैसा कि सुभगोदय स्तुति में कहा हैं—

चाहे परब्रह्म ही क्यों न हों, किन्तु शक्ति रहित होने पर वह कुछ भी करने में असमर्थ हैं। हे परमेशानि! वह कुछ करने में तभी समर्थ हो सकते हैं जब शक्ति से संयुक्त हो।

यहाँ इस विषय में जो बहुत कहना है वह सुभगोदय के व्याख्या काल में अच्छी तरह हमने उपपादन कर दिया है। बहुत विस्तार से क्या लाभ? अब प्रकृतविषय में कहा रहा हूँ।

**चत्वारिंशत्** इतने संख्याओं से **वसुदलकलाश्रत्रिवलयत्रिरेखाभिः** वसु ८, वसु शब्द से ८ संख्या विवक्षित है। वसुदल = आठ दल, कला १६, इस कला शब्द से १६ संख्या लक्षित है, 'अश्र' शब्द से दल लक्षित हैं। अतः कलाश्र का अर्थ १६ दल हुआ। त्रिवलय = तीन वलयों का समाहार अर्थात् तीन मेखला युक्त त्रिरेखा प्राकार, त्रिवलयाकार रेखा, इसका अर्थ तीन भूपुर हुआ। यह तीन भूपुर चारों दिशाओं में द्वार युक्त होता है। जैसा कि कहा गया है—

बिन्दु, उसके बाद त्रिकोण, फिर अष्टकोण, दो दशार, फिर १४ दल, फिर नागदल

फिर १६ अरे, पुनः तीन वृत्त, फिर तीन भूपुर जिसमें ४ द्वार हों, यही परदेवता भगवती का 'श्रीचक्र' कहा जाता है ।

तैत्तिरीय आरण्यक (१.३१) श्रुति में भी कहा है—

तीन भूपुरों से युक्त हे भगवति ! आपका श्रीचक्रात्मक यह चराचर जगत् रूप नगर संहारात्मक है ।

**सतद्वा** चार द्वारों वाला । यह प्रयोग छान्दस है । इसमें अवर्ण का लोप है । **अट्टारगमं** अट्टारैः तीन प्राकार वलयों से दुर्गम, **तां** इस प्रकार की भूतात्मक, हे भगवति !, **तव नगरं संहार्यं** आपका श्रीचक्रात्मक नगर संहारात्मक है । उपर्युक्त पृथिव्यादि महेश्वरान्त २५ तत्त्व उसी में लीन हो जाते हैं—इसका यही तात्पर्य है ।

कुछ विद्वान् कहते हैं कि इसका अर्थ 'संहार क्रम' से लिखना चाहिए । ऐसा अर्थ ठीक नही है । क्योंकि कौलों के मत से ही 'संहार क्रम' से लिखने का विधान है ।

प्रकृत का अनुसरण करते हैं—उनके **सार्धं** साथ, **तव** आपके, **शरणकोणाः** शरण गृह वैन्दव मन्दिर को वे और कोण यहाँ द्वन्द्व समास है । इससे ४४ कोण का निर्देश है ।

यहाँ यह कहना कि 'बिन्दु और त्रिकोण को मिला देने पर ४६ कोण तथा बिन्दु के परित्याग कर देने पर ४५ कोण कहना चाहिए' यह बात सत्य है । किन्तु प्रस्तारवश त्रिकोण के नीचे वाले दो कोण अष्टकोण के अन्तर्गत आ जाते हैं इसलिये ४३ कोण ही हैं ।

इसलिये शरण के साथ कोण इस प्रकार समास कर व्याख्या करना उचित है, अथवा चतुश्चात्वारिंशत् के स्थान पर त्रिचत्वारिंशत् यह पाठान्तर है । **परिणताः**—परिणाम को प्राप्त होते हैं ।

इसका अर्थ यह है—त्रिकोण, अष्टकोण, दो दशकोण, चतुर्दश कोणों वाले 'शक्त्यात्मक चक्र' हैं । अष्टदल, षोडशदल, तीन मेखलाएँ और तीन भूपुर—ये चार 'शिवात्मक चक्र' हैं । त्रिकोण में अष्टदल, वसुकोण में १६ दल, दशारयुग्म में तीन मेखलाएँ और भुवनाश्रक में भूगृह का अन्तर्भाव है । इसलिये परिणतं कहा गया है, यह बात पहले भी कह चुके हैं ।

**पदयोजना का अर्थ**—हे भगवति ! चार श्रीकण्ठात्मक कोणों से और उन श्रीकण्ठ कोणों से भिन्न ४ शक्त्यात्मक कोणों से—इस प्रकार कुल नवमूलप्रकृतियों से आपके श्री चक्र रूप गृह के ८ दल, १६ कलाओं, तीन वृत्तों और तीन भूपुरों वाली रेखाओं से युक्त परिणत होने पर ४४ कोण बन जाते हैं ।

यहाँ यह भी समझ लेना चाहिए इस चक्र में २८ मर्मस्थान भी हैं, और २४ सन्धियाँ भी हैं ।

यहाँ शङ्का होती है कि मर्मस्थान भी २४ ही हैं २८ कैसे?

दो रेखा का सन्धि स्थान 'सन्धि' कहा जाता है और तीन रेखा का सङ्गम स्थान 'मर्म' कहा जाता है ऐसा मर्मवेत्ताओं का कहना है ।

इस पर ऐसा कहना चाहिए कि शिवचक्र के १. अष्टदल, २. षोडशदल, ३.

मेखलात्रितय और ४. तीन भूपुर—इन चार स्थानों को तीन रेखा से संयुक्त न होने पर भी वाचनिकी मर्मसंज्ञा है । जैसा कि चन्द्रज्ञान विज्ञान में कहा गया है—

चौदह कोण, दो दशार, अष्टकोण, और तीन रेखा वाले सन्धिस्थान—इनको मिलाकर बीस मर्म स्थान तथा शिवात्मक चार वृत्तों को एक साथ मिला देने पर अट्ठाइस मर्म स्थान बन जाते हैं ।

यह सब चक्र लेखन ज्ञान के अभाव में जानना बड़ा दुष्कर है । अतः सर्वप्रथम चक्रलेखन का प्रकार निरूपण करता हूँ । यह चक्रलेखन दो प्रकार का है—एक सृष्टिक्रम दूसरा संहारक्रम । संहारक्रम से लिखने का विधान कौल मार्ग का है । फिर भी नवयोनि के परिज्ञान के लिये उसका निरूपण करता हूँ ।

**संहारक्रम** में प्रथम वृत्त लिखकर वृत्त के मध्य में ९ रेखा लिखकर, सबसे पश्चिम की रेखा से त्रिकोण बना कर, अपनी अपेक्षा षष्ठ रेखा में मिला देवे । इसी प्रकार पूर्व रेखा से त्रिकोण बना कर, अपनी अपेक्षा सातवीं रेखा से युक्त करे । पश्चिम की दोनों रेखाओं के प्रान्तभाग से त्रिकोण बना कर, स्वापेक्षया अष्टमरेखा से युक्त करे । पूर्व की दोनों रेखाओं के प्रान्तभाग से त्रिकोण बनाकर, आठवीं रेखा से युक्त करे । इसके बाद पूर्व और पश्चिम की तृतीय रेखा के दोनों प्रान्त भाग से त्रिकोण बनाते हुये षट्कोण की रचना करें । षट्कोण के मध्य में स्थित तीन छोटी रेखाओं में पश्चिम की दो प्रान्त रेखा से त्रिकोण बनाकर अपनी अपेक्षा पाँचवीं रेखा से युक्त करे । इसी पूर्व की तीसरी दोनों रेखा के प्रान्त भाग से त्रिकोण बनाकर, स्वापेक्षया पाँचवीं रेखा से युक्त करे । मध्य में रहने वाली अत्यन्त छोटी रेखा के दोनों प्रान्त भागों से त्रिकोण बनाकर, तीसरी रेखा से युक्त करे । इस प्रकार २४ मर्म स्थान एवं २४ सन्धियाँ तथा नवयोनि चक्र के बनाने का विधान कहा गया है । यही कौलमत का रहस्य है ।

**सृष्टिक्रम** ही **समय मार्ग** है । अब सृष्टि क्रम से श्रीचक्र के निर्माण का निरूपण करता हूँ—पहले त्रिकोण लिखकर, उसमें बिन्दु स्थापित कर, बिन्दु के ऊपर त्रिकोण का भेदन करते हुये एक और त्रिकोण बनावे । जिसका अग्र भाग पूर्व की ओर हो । फिर पहले त्रिकोण से एक और त्रिकोण पश्चिमाभिमुख बनावे । ऐसा करने से अष्टकोणचक्र बन जायगा । इसी से पुनः दशार उत्पन्न करें । उसकी विधि इस प्रकार है—अष्टकोण के पूर्व और पश्चिम की रेखा के प्रान्त भाग से षट्कोण बना कर, कोनों के मर्मस्थान से चार त्रिकोण बनाकर, अष्टकोण में होने वाली योनि के ऊपर दक्षिण और उत्तरीय रेखा ईशान और अग्निकोण के त्रिकोण में मिला देवें । इसी प्रकार से पश्चिम में भी मिला देवे । ऐसा करने से दशार हो जायगा । इसी दशार से पुनः उक्त रीति से दशार बनावे । इसी दूसरे दशार से पुनः चतुर्दशार बनावे । उसकी विधि इस प्रकार है—पहले दशार की पूर्व पश्चिम रेखा के प्रान्तभाग से षट्कोण बनावे और षट्कोणगत चार मर्म स्थानों (अर्थात् तीन रेखाओं से मिले हुये) से चार त्रिकोण बनावे । इसके बाद ऊपर रहने वाले मर्म स्थानों से दशार न्याय से चार त्रिकोण बनाकर, पूर्व और पश्चिम की रेखा को मिला देवे । ऐसा करने से ४३ कोण, २४ सन्धियाँ और २८ मर्म बन जाएँगे । यही समय मत का रहस्य है ।

इस मत में त्रिकोण ऊर्ध्वमुख लिखे जाते हैं । कौलचक्र में त्रिकोणमध्य में बिन्दु रहता

है। समयमत में चतुष्कोणमध्यगत बिन्दु रहता है। कौलचक्र में कोणों की संख्या नहीं है क्योंकि वह केवल नव त्रिकोणों से ही बनता है, नवों त्रिकोणों के मिलाने से केवल मर्म सन्धियाँ ही बन सकती है। यह बहुत बड़ा रहस्य है।

ऊर्ध्व में अष्टदल, उसके बाद १६ दलात्मक पद्म, उसके बाद तीन मेखलाएँ, तदनन्तर चार द्वारों से युक्त तीन भूपुर सब दोनों मत में समान हैं। उभय मत में इस प्रकार श्री चक्र को समझना चाहिए।

इस चक्र में मेरु प्रस्तार कैलास प्रस्तार और भूप्रस्तार ये तीन प्रस्तार होते हैं। मेरुप्रस्तार का अर्थ नित्याषोडश से तादात्म्य है। कैलास प्रस्तार में ५० मातृका वर्णों से तादात्म्य एवं वाशिन्यादि से तादात्म्य है। यह सब आगे चलकर 'चतुःषष्ट्या तन्त्रैः' (द्र० श्लो ३१) इस श्लोक की व्याख्या के समय भली प्रकार से उपपादन करेंगे।

इस विषय में **रुद्रयामल** में विशेष कहा है—

पृश्नि नामक सभी मुनि गन्धर्वपूजित श्री चक्र की सेवा करते हुये श्री चक्र का आश्रय लेते हैं। यह चक्र अग्नीषोमात्मक है। यह जगत् भी अग्निषोमात्मक है। मातृका चक्र भी सोम, सूर्य और अनिलात्मक भेद से तीन खण्डों वाला है। त्रिकोण और बिन्दु सम्मिलित अष्टकोण—ये सौम्य चन्द्रमय चक्र है। दो दशार तथा चतुर्दशार अग्निमय चक्र हैं और शेष चार चक्र सूर्यात्मक हैं। इस चक्र की पूजा के प्रभाव से इन्द्रादि देवगण, अष्ट वसु, मरुद्गण तथा इस लोक में जो जो भी समृद्ध हैं वे सभी त्रिपुराचक्र की सेवा के प्रभाव का फल हैं। चक्र का तीन पुर सोम, सूर्य, अनिलात्मक है। यह चक्र महालक्ष्मी का पुर है। वहीं सदाशिव का निवास भी है।

इसी विषय का प्रतिपादन वेद की तैत्तिरीय श्रुति के अरुणोपनिषद् में 'इमा नुकं भुवना सीषधेम' से लेकर 'ऋषिभिरदात् पृश्निभिः' पर्यन्त वाक्यों से कहा गया है—अरुणा भगवती के प्रतिपादक होने के कारण इस उपनिषत् का नाम अरुणोपनिषद् है। यह उपनिषद 'भद्रं कर्णेभिः' (तै.आ. १.२७) से आरम्भ होकर 'तपस्वी पुण्यो भवति' (तै.आ. १ प्रश्न) यहाँ तक है जो केवल अरुण देवी का ही प्रतिपादन करती है। इस मन्त्र के द्रष्टा अरुणकेतु नामक ऋषि हैं। अब श्रुत्यर्थ कहते है—

पृश्नि नाम के मुनि परस्पर प्रतिज्ञात रूप में कहते है—इस चक्रविद्या को, इस 'नुकं' यह वितर्क अर्थ में प्रयुक्त है। भुवना अर्थात् तीनों लोकों को, सीषधेम = जानता हूँ। चक्रविद्या का आश्रय लेकर ही सारे भुवन स्थित हैं। हम लोग ऐसा समझते हैं। अथवा, पृच्छा एवं वितर्क पक्ष में अर्थ करने पर—'क्या सारे भुवन इस चक्रविद्या में स्थित है?' नु शब्द पृच्छा और वितर्क अर्थ में प्रयुक्त होता है—यह अमरकोष है।

इन्द्रश्च आदि इस वाक्य का अर्थ स्पष्ट है। इन्द्र और विश्वेदेव चक्रविद्या का आश्रय लेकर आज तक वर्त्तमान हैं।

**यज्ञं चेति** का अर्थ है—**यज्ञं** अग्निष्टोमादि, **नः** हम लोगों के, **तन्वं** तनू अर्थात् शरीरार्धरूप पत्नी को, **प्रजां** सन्तानों को, चकार से सारी सम्पत्तियाँ अर्थ है। **आदित्यैः** मरुद् गणों के साथ इन्द्र अर्थात् जिन इन्द्र ने चक्रविद्या की उपासना से परमैश्वर्य प्राप्त किया वही इन्द्र हम लोगों को चक्र विद्या का उपदेश कर यज्ञ, पत्नी एवं पुत्रादि सम्पादन करें।

**आदित्यैरिति** । दोनों मन्त्रों का संक्षेप में इस प्रकार अर्थ है—इन्द्र मरुद्गणों के साथ हम लोगों के पुत्र मित्र कलत्रादि की रक्षा करें और हमारे योग क्षेम का सम्पादन भी करें ।

**आप्लवस्येति** । पृश्नि ऋषिगण चक्रविद्या की स्तुति करते हुये कहते हैं—**आप्लवस्व** आपादतल एवं मस्तक तक हम लोगों को अमृत की धारा से आसिक्त कीजिए। प्रप्लवस्व अर्थात् प्रकृष्टरूप से आप्लावित कीजिए अर्थात् हमारी बहत्तर हजार नाड़ियों को विशेष रूप से आसिक्त कीजिए ।

**आण्डीभवमिति** । आण्डी शब्द च्वि प्रत्ययान्त है । इसका अर्थ है पिण्डाण्ड और ब्रह्माण्ड । अण्डाण्ड का अर्थ हम लोगों से है ; ब्रह्माण्ड का अर्थ बाह्य जगत् से है अर्थात् आप सायुज्य प्रदान करें । 'ज' अर्थात् समझो, हम लोगों पर कृपा कीजिए । ज शब्द अज् धातु से बना है । यहाँ अकार का लोप छान्दस है ।

**सुखादींदुरिति**—इसका अर्थ इस प्रकार है—जो सुख पूर्वक भोजन करता है अथवा जो सुखपूर्वक भोजन कराता है वह सुखादि है, इन्दुः वैन्दवस्थान गत चन्द्रमा को कहा गया है । **खनिधनां** 'ख' वैन्दव स्थान ही 'नि' अत्यन्त 'धनं' धन है जिसका । अथवा सुखादीं सुखप्रथमा या सुखात्मिका । **दुःखनिधनां** दुःख नाश हो जहाँ पर, वह है दुःखनिधना । दुःख के गन्ध का जहाँ लेश भी नहीं है, अथवा **सुखादीं** उत्तम इन्द्रियों से और मन से, **आदीं** आद्या अर्थात् मनोवेद्य **दुखनिधनं** दुष्टेन्द्रियों अर्थात् चक्षुरादिकों से अगोचर ।

**हिन्दी अर्थ**—वैन्दव स्थान चन्द्रमा स्वयं सुखी है और सबको सुख देने वाला है । भगवती का वह बिन्दु परम धन है, अथवा वह भगवती सर्वथा सुखात्मिका है । वहाँ दुःख का सर्वथा अभाव है । दुःख कैसा होता है? यह बात वह जानती तक नहीं, अथवा वह श्रेष्ठ इन्द्रियों से युक्त मन के द्वारा जानी जाती है । दुष्टेन्द्रियों से तो वह सर्वथा अगोचर है ही ।

**प्रतिमुञ्चस्वेति** । भगवती के अपने शरीर में निवास कीजिए ।

**मरीचयः** । समस्त प्रकाश करने वाली किरणें उन भगवती से ही उत्पन्न हुई हैं जो समस्त भुवनों को आवृत कर स्थित हैं, सूर्य और चन्द्रमा में रजो प्रकाश करने की शक्ति है, वह भगवती के किरणों के प्रसाद का फल है । इसे आगे कहेंगे ।

**ये** इति । भगवती की किरणें ही ३६० दिनात्मक काल वाली हैं । वहीं ३६० दिनात्मक काल संवत्सर है जो प्रजापति भी कहा जाता है ।

**ते** इति । हे साधक जनों ! वे किरणें भगवती की हैं, अत: भगवती के देह (= चरण) का आश्रय लो । हम लोग भगवती के चरणों से ही उत्पन्न हैं ।

**माचेति** । हे भगवति ! आपका ज्ञान हमें न छोड़े । हमे आपका स्मरण होता रहे ।

अब इसके बाद पृश्नि मुनिगण चक्रविद्या की उपासना के लिये अत्यन्त उत्सुक हो आपस में कहते हैं । **उत्तिष्ठत इति**—इस ऋचा का अर्थ इस प्रकार है—**भारता:** हे श्री विद्या की उपासना में लगे रहने वालों, अथवा सरस्वती स्वरूपा श्री विद्या के उपासकों, **उत्तिष्ठत** उपासना का उपक्रम कीजिए, **मा स्वप्त** प्रमाद मत कीजिए, **अग्निमिच्छध्वं** स्वाधिष्ठान चक्रस्थित अग्नि को प्रज्वलित कीजिए । वैन्दव स्थान गत सदाशिव सहित चन्द्रमण्डलान्तर्गत भगवती की उपासना कर तृप्त हो जाओ अथवा अनाहत एवं विशुद्धि

चक्र के मध्य में स्थित सूर्य के सहित राजा चन्द्रमा की उपासना कर सुखी हो जाओ । क्योंकि आप लोग मायामयक्लेश से जल रहे हो, अथवा प्रातःकाल में भगवती का ध्यान कर परमामृत से तृप्त हो जाओ । शास्त्रों में भगवती का ध्यान प्रातःकाल में ही विहित है ।

अब इसके बाद पूजा की सामग्री का उपदेश करते हैं ।

**युवा इति** । **युवा** दृढाङ्ग स्वस्थ सुपुष्ट **सुवासाः** शुभ्र वस्त्र धारण किये हुये, यह शुभ्र आभरण शुभ्र माल्य आदि का भी उपलक्षण है । इस प्रकार बनकर भगवती की पूजा करनी चाहिए ।

अब श्री चक्र का स्वरूप कहते हैं—**अष्टचक्रेति** १. अष्टकोण, २-३. दशकोण, ४. चतुर्दशकोण, अष्टपत्र, षोडशपत्र, तीन वलय और तीन रेखाएँ ये ८ चक्र हैं—जिस पुरी के, वह पुरी **अष्टचक्रा** है । अत एव **नवद्वारा** नवसंख्या वाले द्वार त्रिकोण रूप से जिसमें हैं वह पुरी नवद्वारा है ।

**देवानामिति**—इन्द्रादि देवताओं के पूजा से सम्बन्धित होने के कारण वह **पूः** श्रीविद्याचक्र देवानां पूः है अथवा देव पच्चीसतत्त्वों का अधिष्ठान है इसलिये वह देवानां पूः है, अथवा वह श्रीचक्र सोमसूर्यानलात्मक होने से सोम, सूर्य और अग्नि की पुरी है । तीनों पुरों की समष्टि होने से 'पूः' एकवचनान्त कहा गया है ऐसा समझना चाहिए । **अयोध्या** मन्द भाग्य वालों से दुष्प्राप्य होने के कारण वह अयोध्या है ।

**तस्याः इति** । उस श्रीचक्र के बैन्दव स्थान में सहस्र दलकमलात्मक कोश है । इसलिये उसे हिरण्मय कोश कहते हैं । उस कोश की ज्योति से समस्त स्वर्गलोक भास्वत है । इसलिये स्वर्ग लोक ज्योतिर्लोक ही है ।

अब इसके बाद पृश्निगण चक्रविद्या की उपासना का फल कहते हैं—

**यो वै** इति । जो चन्द्रमण्डलगत पीयूषधारा से आवृत ब्रह्मस्वरूपा भगवती के उस श्रीचक्र स्वरूपा त्रिपुरा की भली प्रकार से ज्ञानपूर्वक अर्चना करता है उस विद्वान् अर्चक को सुधा-सिन्धु के मध्य में स्थित मणिद्वीप के चिन्तामणि गृह में निवास करने वाले ब्रह्मस्वरूपा भगवती तथा ब्रह्मस्वरूप परमात्मा सदाशिव दोनों आयु, सुखमय जीवन, कीर्त्ति, सन्तान एवं सम्पत्ति आदि प्रदान करते हैं ।

शिवशक्ति का निवास स्थान वह 'श्रीचक्र' ही है अब इस बात को कहते हैं—

**विभ्राजमानेति** । **विभ्राजमानां** अनेक करोड़ संख्यक किरणों से प्रकाशित रहने वाली **हरिणीं** हिरण्यवर्णा, 'हिरण्यवर्णां हरिणीं' इस श्रुति के अनुसार; यश से चारों ओर से घिरी हुई । संसार में जितने भी यशस्वी हैं, वे सभी भगवती की कृपा से ही कीर्त्तिमान हुये हैं । उस वैन्दवपुर के चिन्तामणि नामक गृह में सदाशिव ब्रह्मस्वरूप में निवास करते है । अपराजिता सादाख्या कला (शुद्धविद्या सहित सदाशिव) भी वही निवास करती है । उपर्युक्त दो वाक्यों से अपराजिता एवं सदाशिव दोनों का चिन्तामणि गृह में प्रवेश (भिन्न रूप से) प्रतिपादन किया गया है क्योंकि 'सदाशिव बिन्दुस्वरूप चिन्तामणिगृह में सर्वदा सन्निहित हैं और अपराजिता भगवती कुण्डलिनी षट्चक्रों का भेदन कर बारम्बार वहाँ प्रवेश करती हैं' इसी बात को समझाने के लिये ही (भेद से) प्रतिपादन किया गया है ।

अब उस चक्र में शिव-शक्ति के निवास का प्रकार कहते है—**पराङ्** इत्यादि।

**पराङ्मुखी** अधोमुखी चक्ररूपिणी शिवशक्ति के मध्य में रहने वाली शक्ति, **अज्यामयी** ज्या से रहित, नाश से रहित, नित्या दुःखरहिता आनन्दमयी, **एति** रहती है, अथवा ज्या अर्थात् भूमि अर्थात् पञ्चभूत में जो निवास न करे वह अज्यामयी, मनस्तत्त्वात्मिका, शिवचक्रात्मक अर्थात् चार योनियों वाली है। क्योंकि चार शिवयोनियों का निवास बिन्दु स्थान से नीचे अधोमुख रूप से स्थित हैं। **अनाशकी** नाश रहित पञ्चयोन्यात्मिका शक्तिचक्र। वह भी अधोमुखी रूप से स्थित है। शक्तियोनियाँ भी शिव योनि की अपेक्षा अवाङ्मुख हैं। इससे शिवयोनि तथा शक्तियोनि दोनों की परस्पर अवाङ्मुखता सिद्ध की गई है। यह बात चक्र लेखन क्रम से ज्ञात होगी।

अब इस चक्रविद्या के जानने का फल कहते हैं—

**इहेति**। 'दीव्यन्तीति देवाः' जो क्रीडा करे अर्थात् एकादशेन्द्रिय, जो पञ्चप्राणों को ग्रहण करे। वह असुर अर्थात् पञ्च-तन्मात्राएँ, उन दोनों एकादशेन्द्रिय और पञ्चतन्मात्राओं में रहने वाले माया शुद्धविद्या महेश्वर तथा सदाशिव से युक्त २५ तत्त्वों को जान लेने के बाद जो शिवशक्त्यात्मक सम्पुट स्वरूप २६ वें तत्त्वों को भी जान लेता है। वह इस भूलोक में पूजा तो प्राप्त करता ही है, परलोक में भी सार्ष्टि, सालोक्य, सामीप्य, सारूप्य और सायुज्यात्मक पाँच प्रकार की मुक्तियों से युक्त हो जाता है। साष्ट्यादि का स्वरूप आगे (९९ श्लोक में) चलकर विस्तारपूर्वक वर्णन करेंगे।

अब देव एवं असुर उभय के ज्ञान का प्रकार कहते हैं।

**यदिति**। इसका इस प्रकार अर्थ है—कुण्डलिनी शक्ति की तीन अवस्था है (१) जिस चक्र में कुमारावस्थापन्न कुमारी सोने के पश्चात् उठ जाने पर सर्वप्रथम मन्द स्वर करती है क्योंकि कुण्डलिनी सर्पाकार है; साँप भी सो कर उठने के बाद मन्द स्वर करता है। यह प्रथम अवस्था है। (२) जिस चक्र में कुलयोषित् (कुण्डलिनी शक्ति) विष्णु ग्रन्थिपर्यन्त जाकर शिव का वरण करती है, सन्निधान प्राप्त करती है।

कुण्डलिनी रूपा कुलयोषित् सुषुम्ना नाड़ी का त्याग कर 'विष्णुग्रन्थि' का भेदन कर सदाशिव के पास पहुँच जाती है।

ऐसा सनत्कुमारसंहिता का वचन है। यहाँ तक कुण्डलिनी की दो अवस्था हुई। (३) जिस चक्र में पतिव्रता अपने पति सदाशिव के साथ सहस्रदल कमल में बिहार करती हुई **अरिष्ट** अर्थात् कल्याणकारी अमृत का आस्वादन करती हैं और जो करती है उसे **'अग्निस्तदनुवेधति'** स्वाधिष्ठानगत वह्नि को प्रज्वलित कर अग्निशिखानुविद्ध विलीनचन्द्रमण्डल से झरती हुई पीयूषधारा का अनुभव कर लेने के बाद २५ तत्त्वों से परे २६वीं तत्त्व वाली परमेश्वरी जानी जा सकती है—इससे यही उपदेश निकलता है।

चक्रविद्या की उपासना सवर्णों को, आश्रमियों को, ज्ञानियों को तथा अज्ञानियों को फल देने वाली है, ऐसा विचार कर ग्रन्थकार कहते हैं—

**अश्रृतेति**। इसका अर्थ इस प्रकार है—**अश्रृतासः** जिन्होंने अपने अन्तःकरण के पाप को नष्ट नहीं किया है अर्थात् जो अपरिपक्व विचार वाले हैं। **श्रृतासः** अपने अन्तःकरण के

पापों को सर्वथा नष्ट कर जो परिपक्व विचार वाले हैं । **यज्वानः** यज्ञ करने वाले त्रैवर्णिक एवं आश्रमी **अयज्वनः** जिनका यज्ञ में अधिकार नहीं है शूद्र आदि अज्ञानीजन । क्योंकि **'तस्माच्छूद्रो यज्ञे प्रवनवक्लृप्तः'** (तै.सं. ७.१.१) इस श्रुति के अनुसार शूद्र का यज्ञ में अधिकार नहीं है । अग्निष्टोमादि यज्ञों में त्रैवर्णिकों का एक मात्र अधिकार है । किन्तु यहाँ 'चक्रविद्या' की उपासना में शूद्रादिकों के अधिकार का विधान कहा गया है । जैसे 'निषादस्य पतिं याजयेत्' इस श्रुति में निषादस्थपति को वैदिक कार्य में अधिकारी बताया गया है । इसमें कोई क्षति नहीं है । यन्तः इण् गतौ से बना है अर्थात् चक्रविद्या की उपासना करने वाले स्वः अर्थात् स्वर्ग की अपेक्षा नहीं रखते ।

चक्रविद्या को छोड़कर अन्य देवता की उपासना अनिष्टकारक है । अब इस बात को कहते हैं—

**इन्द्रमिति** । इसका अर्थ इस प्रकार है—सुरासुरों में मुख्य इन्द्रादिकों द्वारा जिसकी चरण वन्दना की जाती है और जो सभी प्राणियों के अन्तःकरण की बात जानती हैं । अतः सर्वव्यापिनी हैं और जगत् की उत्पत्ति, स्थिति और लय में हेतुभूता है, ऐसी 'चक्रविद्या' से अन्य इन्द्र अग्नियमादि लोकपालों की तथा पृथिव्यादि सदाशिवान्त तत्त्वों की जो लोग उपासना करते हैं, वे बालू के भीत की तरह परस्पर कण-कण अलग हो कर नष्ट हो जाते हैं । इतना ही नहीं किन्तु रश्मिभिः अर्थात् यमराज के पाशों से, उत्तर प्रबन्ध में 'अपेत वीत' इस श्रुति में प्रतिपादित, समुदीरिताः अर्थात् सम्मत हो जाते हैं, बाँध लिये जाते हैं । इस प्रकार इस लोक और परलोक दोनों से भ्रष्ट हो जाते हैं । इस विषय में एक दूसरी भी श्रुति है—

**अन्धःतमः** इति । इसका अर्थ इस प्रकार है—अविद्या अर्थात् विद्या से विरुद्ध, या ज्ञानमार्ग से विरुद्ध इन्द्रादि देवगणों की सेवा, 'वाचं धेनुमुपासीत' (बृ०उ० ७.८.१) इस श्रुति में वर्णित आरोपित सेवा जो (अविद्वान्) करते हैं, वे अन्धतामिस्र नामक नरक में गिर जाते हैं । चकार का अर्थ यहाँ तक प्रकरण की समाप्ति का द्योतक है ।

**ऋषिरिति** । पृश्नि नामक ऋषियों ने इस विद्या को कहा है । यहाँ 'अदात्' का अर्थ 'अदायि' है । यहाँ कर्म में लुङ्लकार का प्रयोग छान्दस् है । किन्तु कर्म-प्रत्यय का लोप कर कर्त्ता में प्रयोग कर व्यत्यय किया गया है, अर्थात् पृश्नि नामक ऋषियों ने कहा, अथवा पृश्नियों के साथ ऋषि संघ ने इस वाणी का उपदेश किया है—यह अर्थ समझना चाहिए ॥ ११ ॥

**श्रीविद्यारहस्यार्थ**—श्रीचक्र के मध्य नव त्रिकोणों में चार शिवात्मक हैं तथा पाँच शक्त्यात्मक हैं । ये सब शम्भु (विन्दु) से पृथक् हैं । फिर अष्टदल पद्म तथा षोडशदल पद्म हैं, पश्चात् त्रिवृत्त तथा तीन भूपुर हैं । सभी त्रिकोणों की संख्या ४३ है ।

इस स्तवन (सौन्दर्यलहरी) के प्रत्येक श्लोक के प्रारम्भ शताक्षरी महामन्त्र के जो १०१ बीजाक्षर हैं, उनकी जपाराधना के साथ प्रत्येक बीजमन्त्र का एक एक पूजन-यन्त्र निर्दिष्ट है । उनमें से प्रत्येक यन्त्र श्री महायन्त्र का एक-एक भाग है । यथा—मध्य के ४३ त्रिकोण + २४ (८ + १६) पद्मदल + १५ त्रिवृत्त (धनुराकार यन्त्र) + १९ त्रिभूपुर (चतुष्कोण यन्त्र) = १०१ कुल यन्त्र ।

४३ त्रिकोण अपने पूज्य देवता के श्रीयन्त्र में हैं ।

२४ पद्मदल के देवताओं की पूजन-विधि भी श्रीयन्त्र में कही गई है।

१५ (१) सूक्ष्म-पञ्च ज्ञानेन्द्रियाँ, (२) सूक्ष्म-पञ्च कर्मेन्द्रियाँ, (३) सूक्ष्म-पञ्च तन्मात्राएँ मिलकर पन्द्रह हैं।

१९ (१) पञ्च प्रेतासन सतत ब्रह्माण्ड के १. ब्रह्मा, २. विष्णु, ३. रुद्र, ४. इन्द्र और ५. श्री कालपुरुष भगवान् ईशान । (२) दश दिक्पाल—१. महेन्द्र, २. महाग्नि, ३. महायम, ४. महानिर्ऋत, ५. महावरुणदैवत्, ६. महावायुदैवत्, ७. महासोम, ८. ईशान (मदनभैरव, आनन्दभैरव), ९. श्री धूम्राशक्ति (ऊर्ध्व में) और १०. श्री महानन्तशक्ति (अधर में)। (३) १. मन, २. बुद्धि, ३. चित्त, ४. अहङ्कार।

**ध्यान—श्लोकस्थ वर्णबीज 'च'कार का ध्यान** इस प्रकार है—

**बन्ध्यात्व निवृत्यर्थ प्रयोग**

तुषारकुन्दपुष्पाभां नानालङ्कारभूषिताम्।
सदा षोडशवर्षीयां वराभयकरां पराम्॥
शुक्लवस्त्रावृतकटीं शुक्लवस्त्रोत्तरीयिणीम्।
वरदां शोभनां रम्यामष्टबाहुसमन्विताम्॥
एवं ध्यात्वा चकारं तु तन्मन्त्रं दशधा जपेत्।
चवर्णं शृणु सुश्रोणि चतुर्वर्गफलप्रदम्॥
कुण्डलीसहितं धूम्रं महाचण्डार्चितं पुरा।
सततः कुण्डलीयुक्तं पञ्चदेवमयं सदा॥
सर्वसृष्टिप्रदं वर्णं पञ्चप्राणात्मकं प्रिये।

**बीजाक्षर**—'च'। जपादि पूर्ववत्; पूजन-यन्त्र—षट्कोण के मध्य 'श्रीं' लिखे ॥ ११ ॥

**त्वदीयं सौन्दर्यं तुहिनगिरिकन्ये तुलयितुं**
**कवीन्द्राः कल्पन्ते कथमपि विरिञ्चिप्रभृतयः।**
**यदालोकौत्सुक्यादमरललना यान्ति मनसा**
**तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम्॥ १२ ॥**

**लक्ष्मीधरा—त्वदीयं** तव सम्बन्धि त्वद्देहगतमित्यर्थः। **सौन्दर्यं** लावण्यम्। **तुहिन-गिरिकन्ये** तुहिनप्रधानो गिरिः हिमाद्रिः तस्य कन्या पुत्री, तस्याः सम्बुद्धिः। **तुलयितुं** तुलया समीकर्तुम्। **कवीन्द्राः** विद्वच्छ्रेष्ठाः **कल्पन्ते** शक्नुवन्ति, **कथमपि** कथंचिदपि, न कल्पन्त इत्यर्थः। **विरिञ्चिप्रभृतयः** विरिञ्चिः ब्रह्मा प्रभृतिर्येषां ते हरीन्द्रादयः। **यत्** यस्मात्कारणात् **आलोकौत्सुक्यात्** आलोके भवत्सौन्दर्यालोके यदौत्सुक्यं तस्मात्, ल्यब्लोपे पञ्चमी, औत्सुक्यमवलम्ब्य। यद्वा—निमित्तपञ्चमी। **अमरललनाः** देवयोषितः **यान्तिः** प्राप्नुवन्ति, **मनसा** अन्तःकरणेन, **तपोभिः** तपस्याभिः कृच्छ्रचान्द्रायणादिभिः **दुष्प्रापां** प्राप्तुमशक्यां, **अपिर्विरोधे गिरिशसायुज्यपदवीम्।**

**अत्रेत्थं पदयोजना**—हे तुहिनगिरिकन्ये! त्वदीयं सौन्दर्यं तुलयितुं विरिञ्चिप्रभृतयः कवीन्द्राः कथमपि कल्पन्ते। यद्यस्मात्कारणात् अमरललनाः आलोकौत्सुक्यात् तपोभिः दुष्प्रापामपि गिरिशसायुज्यपदवीं मनसा यान्ति।

**अयमर्थः**—वाणीपतिवाचस्पतिप्रभृतीनामपि त्वत्सौन्दर्यं सदृशान्तरं परिकल्प्य वर्णयितुमशक्यम्, त्वत्सदृशसुन्दरवस्त्वन्तराभावात् । उर्वशीतिलोत्तमादीनामप्सरसां त्वत्सौन्दर्यलेशतुलायामपि तत्कोटिप्रवेशो दूरत एवापास्तः । यतश्चाप्सरसः त्वत्सौन्दर्यदर्शने पुम्भावं प्रार्थयमानाः पुरुषान्तरदुरधिगमे त्वत्सौन्दर्यवस्तुनि सदाशिवैकगम्ये दुर्लभसदाशिवसायुज्यमनोरथा वर्तन्त इति । स्वयमेवाप्सरसः स्वसौन्दर्ये जुगुप्सितवत्य इति भावः ।

अत्र अनन्वयालङ्कारो ध्वन्यते, लोके क्वापि तुल्यवस्तुनोऽसद्भावात् स्वस्य स्वयमेव तुल्यमिति प्रतीतेः ॥ १२ ॥

### * सरला *

**त्वदीयमिति । त्वदीयं** आप से सम्बन्ध रखने वाले अर्थात् आपके विग्रह में रहने वाले **सौन्दर्यं** लावण्य को, **तुहिनगिरिकन्ये** तुहिनप्रधान गिरि हिमाद्रि, उसकी कन्या पुत्री, उसके सम्बोधन में यह रूप है । **तुलयितुं** तुला पर आरोपित कर समता करने के लिए, **कवीन्द्रा** श्रेष्ठ विद्वानों के समूह, **कल्पन्ते** समर्थ होते हैं, **कथमपि** किसी प्रकार समर्थ नहीं हो सकते, **विरञ्चिप्रभृतयः** ब्रह्मा विष्णु महेश एवं इन्द्रादि, **यत्** जिस कारण से, **आलोकौत्सुक्यात्** आप की सुन्दरता के अवलोकन में जो उत्सुकता होती है, उस कारण से, औत्सुक्यात् में ल्यब् लोप में पञ्चमी अर्थात् औत्सुक्य का सहारा लेकर, अथवा निमित्त में पञ्चमी है, उत्सुकता के निमित्त से **अमरललनाः** देवपत्नियाँ, **यान्ति** प्राप्त करती हैं, **मनसा** अन्तःकरण से **तपोभिः** कृच्छ्रचान्द्रायणादि तपस्याओं से, **दुष्प्रापां** सर्वथा दुर्लभ **अपि** भी, विरोधार्थक है, **गिरीश सायुज्यपदवीम्** भगवान् शङ्कर की सायुज्य पदवी को मन से प्राप्त कर लेती है ।

**पदयोजना का अर्थ**—हे गिरिराजकन्ये ! आपकी सुन्दरता की तुलना करने में ब्रह्मा, विष्णु एवं इन्द्रादि कवीन्द्र भला किस प्रकार समर्थ हो सकते हैं? अर्थात् कभी नहीं । क्योंकि अमरललनायें उर्वशी आदि अप्सराएँ आपके सौन्दर्य के अवलोकन की उत्सुकता से, कृच्छ्र चान्द्रायणादि तपस्या से भी न प्राप्त होने वाले सर्वथा दुर्लभ, शिव सायुज्य पदवी को मन से ही प्राप्त कर लेती हैं ।

इसका भाव यह है कि हे भगवति ! वाणीपति वाचस्पति प्रभृति महाकवियों द्वारा भी आपके सौन्दर्य की सदृशता की परिकल्पना करके वर्णन करना सम्भव नहीं है, क्योंकि आपके लावण्य के समान अन्य कोई वस्तु है ही नहीं । उर्वशी एवं तिलोत्तमादि अप्सराओं का सौन्दर्य तो आपके सौन्दर्य के लेश मात्र भी न होने से उसका आपके तत्कोटि सौन्दर्य तुला में प्रवेश करना तो बहुत दूर की बात है । इसलिये वे त्याज्य हैं । वे आपके सौन्दर्य के दर्शन के लिये पुरुषत्व की प्रार्थना करती हैं । क्योंकि अन्य पुरुषों के द्वारा सर्वथा दुरधिगम्य मात्र सदाशिव के द्वारा दर्शनीय ही आपका सौन्दर्य है । अतः सदाशिव रूप में उसे देखने के लिये दुर्लभ सदाशिव में वे अपने सायुज्य की प्रार्थना करती रहती हैं तथा स्वयं ही वे अपने सौन्दर्य से घृणा करती हैं ।

यहाँ अनन्वयालङ्कार है क्योंकि लोक में कहीं भी आपके सौन्दर्य के समान वस्तु न होने से आपके रूप के सदृश आपका ही रूप है, अन्य कोई नहीं ॥ १२ ॥

**भावार्थ**—हे तुहिनगिरिकन्ये ! आपके सौन्दर्य की तुलना की परिकल्पना कुछ-कुछ ब्रह्मा आदि कवीन्द्र भी किया करते हैं । आपके सौन्दर्य को देखकर स्वर्ग की उर्वशी आदि

**कवित्वशक्तिप्राप्ति प्रयोग**

| सौः |
|---|
| सौः |

अप्सराएँ भी ध्यानस्थ हो जाती हैं और विभिन्न प्रकार की तपश्चर्या से भी कठिनाई से प्राप्त होने वाली शिवसायुज्य पदवी को सहज में ही प्राप्त कर लेती हैं ।

**विमर्श**—बहिर्याग का फल अन्तर्याग है । अतः साधक को देवी के सौन्दर्य में ध्यानस्थ होकर अन्तर्याग के द्वारा शिवसायुज्य पदवी को प्राप्त कर लेना चाहिए । वस्तुतः सहस्रार में शिव-शक्ति के ऐक्य होने पर परमपद की प्राप्ति कही गई है ॥ १२ ॥

**ध्यान**—त्व = त् + व ।

**श्लोकस्थ वर्ण बीज 'त' का ध्यान**—

चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम् ।
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम् ॥
नानाऽलङ्कारभूषां तां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा तकारं तु मन्त्ररूपं सदा यजेत् ॥
तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा ॥
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम् ॥

**श्लोकस्थ 'व' बीज का ध्यान** इस प्रकार है—

कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम् ।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम् ॥
साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम् ।
एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत् ॥
वकारं चञ्चलापाङ्गि कुण्डलीमोक्षमव्ययम् ।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ।
त्रिबिन्दुसहितं मन्त्रमात्मादितत्त्वसंयुतम् ॥
पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम् ।
चतुर्वर्गप्रदं शान्तं सर्वसिद्धिप्रदायकम् ॥

**पूजन-यन्त्र**—चतुरस के मध्य में 'सौः सौः' ॥ १२ ॥

**नरं वर्षीयांसं नयनविरसं नर्मसु जडं**
**तवापाङ्गालोके पतितमनुधावन्ति शतशः ।**
**गलद्वेणीबन्धाः कुचकलशविस्त्रस्तसिचयाः**
**हठात्त्रुट्यत्काञ्च्यो विगलितदुकूला युवतयः ॥ १३ ॥**

**लक्ष्मीधरा**—**नरं** मनुष्यमात्रं, **वर्षीयांसं** अतिवृद्धं, **नयनविरसं** नयनाभ्यां विरसं काचकामिलपटलादिनेत्रदोषयुक्तम्, **नर्मसु जडं** नर्मसु रतिकलासु जडं अतिमूढम्, **तव** भवत्याः **अपाङ्गालोके** कटाक्षवीक्षणे, **पतितं** कटाक्षैकगोचरमित्यर्थः, **अनुधावन्ति** अनुधाव-

माना: **शतशः** शतसङ्ख्याका:, शतशब्द: सङ्ख्यातीतोपलक्षक:, भूर्भुवस्स्वर्लोकस्थिता: सर्वा इत्यर्थ: । **गलद्वेणीबन्धाः** गलन्तो वेणीबन्धा यासां ता:, **कुचकलशविस्रस्तसिचयाः** कुचकलशाभ्यां विस्रस्ता: शिथिला: सिचया: चेलाञ्चला यासां ता:, **हठात्त्रुट्यत्काञ्च्यः** हठात् शीघ्रं त्रुट्यन्त्य: गलन्त्य: काञ्च्यो रशनाकलापा: यासां ता:, **विगलितदुकूलाः** स्रस्तनीवीबन्धा:, **युवतयः** तरुण्य: ।

**अत्रेत्थं पदयोजना**—हे भगवति ! वर्षीयांसं नयनविरसं नर्मसु जडं तवापाङ्गालोके पतितं नरं शतश: युवतय: गलद्वेणीबन्धा: कुचकलशविस्रस्तसिचया: हठात्त्रुट्यत्काञ्च्य: विगलितदुकूला: सत्य: तादृशं नरं मदनमिति मत्वेति शेष:, अनुधावन्ति: ।

एतादृशान् मादनप्रयोगान् **'मुखं बिन्दुं कृत्वा'** (१९) इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्याम: ॥ १३ ॥

*** सरला ***

**नरमिति** । **नरं** मनुष्य मात्र, **वर्षीयांसं** अत्यन्त वृद्ध, **नयनविरसं** काचकामिल-पटलादि दोष से युक्त, अतएव नेत्रों से विरस, **नर्मसुजडं** रति कला में अत्यन्त मूर्ख ऐसे को भी, **तव** आप भगवती के, **अपाङ्गालोके** कटाक्षवीक्षण में, **पतितं** केवल कटाक्ष मात्र से देखे जाने पर ही, **अनुधावन्ति** पीछे-पीछे दौड़ती ही रहती हैं, **शतशः** सैकड़ों की संख्या में । यहाँ शत शब्द सौ से भी कई गुना अर्थ में प्रयुक्त है । **भूर्भुवः** स्वर्लोक स्थित सभी अर्थ का वाचक है, **गलद्वेणीबन्धाः** जिनकी वेणी स्वयं ढीली पड़ गई हैं, **कुचकलशविस्रस्त-सिचयाः** कुच कलशों से जिनके वस्त्राञ्चल स्वयं शिथिल हो गये हैं, **हठात् त्रुट्यत्काञ्च्यः** शीघ्रता के कारण जिनके रशनाकलाप स्वयं टूट कर गिर रहे हैं, **विगलितदुकूलाः** खिसकते हुए नीवी बन्ध वाली, **युवतयः** तरुणियाँ (पीछे-पीछे भागने लगती हैं) ।

**पदयोजना का अर्थ**—हे भगवति ! वयो-वृद्ध नेत्रों में काचकामिल पटलादि दोषों वाले तथा रतिकला से अनभिज्ञ भी मनुष्य आपकी दृष्टि के कटाक्ष मात्र के अवलोकन से ही ऐसा रमणीय हो जाता है कि सैकड़ों युवतियाँ कामातुर हो, शीघ्रता के कारण जिनके वेणीबन्ध खुल रहे हैं, और कुचकलशों की चोली फट रही है, किं बहुना, मेखला हठात् टूट रही है और नीवी बन्ध अपने स्थान से स्वयं खिसक रहे हैं ऐसी युवतियाँ उसके पीछे-पीछे भागने लगती हैं ।

ये सब मादन के प्रयोग **'मुखं बिन्दुं कृत्वा'** (द्र० श्लोक १९) इस श्लोक की व्याख्या के अवसर पर उपपादन करेंगे ॥ १३ ॥

**वशीकरणयन्त्र**

| क्लीं क्लीं क्लीं |
| --- |
| साध्यम् |
| क्लीं क्लीं क्लीं |

**ध्यान—न—** दलिताञ्जनवर्णाभां ललज्जिह्वां सुलोचनाम् ।
चतुर्भुजां चकोराक्षीं चारुचन्दनचर्चिताम् ॥
कृष्णाम्बरपरीधानां ईशद्धास्यमुखीं सदा ।
एवं ध्यात्वा नकारं तु तन्मन्त्रं दशधा जपेत् ॥
नकारं शृणु चार्वङ्गि रक्तविद्युल्लताकृति: ।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली ॥
त्रिगुणाशक्तिसंयुक्तं हृदि भावय पार्वति ।

**क्षितौ षट्पञ्चाशद्द्विसमधिकपञ्चाशदुदके**
**हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले ।**
**दिवि द्विष्षट्त्रिंशन्मनसि च चतुष्षष्टिरिति ये**
**मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम् ॥ १४ ॥**

**लक्ष्मीधरा**—**क्षितौ** पृथिवीतत्त्वयुक्ते मूलाधारे **षट्पञ्चाशत्** षडुत्तरपञ्चाशत्संख्याकाः, **द्विसमधिकपञ्चाशत्** द्वाभ्यां समधिकाः पञ्चाशत् **उदके** उदकतत्त्वयुक्ते मणिपूरस्थाने, **हुताशे** वह्नितत्त्वयुक्ते स्वाधिष्ठानचक्रे, **द्वाषष्टिः** द्वौ च षष्टिश्च द्वाषष्टिः । 'विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्' इति सूत्रेण द्विशब्दादिकारस्य आकारः। **चतुरधिकपञ्चाशत्** चतुस्संख्यया अधिकाः पञ्चाशत्, **अनिले** वायुतत्त्वयुक्ते अनाहतचक्रे **दिवि** आकाशतत्त्वयुक्ते विशुद्धिचक्रे **द्विष्षट्त्रिंशत्** द्विरावृत्तषट्त्रिंशत्संख्याकाः द्विसप्ततिसंख्याका इत्यर्थः, **मनसि** मनस्तत्त्वयुक्ते आज्ञाचक्रे, **चतुष्षष्टिः** । इति एवंप्रकारेण **ये** प्रसिद्धाः शास्त्रेषु आगमेषु, स्वासंवेद्यत्वेन **च** योगिनां प्रसिद्धाः **मयूखाः** सन्ति **तेषां** मयूखानां **अप्युपरि** सहस्रदलमध्यवर्तिचन्द्रबिम्बात्मके बैन्दवापरनामके सुधासिन्धौ, **तव** भवत्याः, **पादाम्बुजयुगं** वर्तते विद्यते । एवं समयसम्प्रदाय इति शेषः ॥

**अत्रेत्थं पदयोजना**—हे भगवति ! ये मयूखाः क्षितौ षट्पञ्चाशत्, उदके द्विसमधिकपञ्चाशत्, हुताशे द्वाषष्टिः, अनिले चतुरधिकपञ्चाशत्, दिवि द्विष्षट्त्रिंशत्, मनसि चतुष्षष्टिः, इति तेषामुपरि तव पादाम्बुजयुगं, वर्तते इति शेषः ।

अत्र षट्पञ्चाशदित्यादिसङ्ख्याशब्दानां सङ्ख्येयपरत्वात् सङ्ख्येयानां मयूखानां बहुत्वेऽपि एकवचनान्तत्वमेव । यथा—

विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः ।
सङ्ख्यार्थे द्विबहुत्वे स्तः ..................... .... ॥

न तु संख्येये इति नियमात् । संख्येयानां मयूखानां नियमाप्रसक्तेः बहुवचनान्तत्वं सिद्धम् ।

**अत्रेदं तत्त्वम्**—षट्पञ्चाशदित्यादिसंख्यानां संख्येयविशेषणत्वेऽपि न शुक्लादिगुणतौल्यं, यथाऽऽह **पदमञ्जरीकारः**—'विंशत्यादयो गुणाः न शुक्लादिभिः गुणैः समानधर्माणो भवितुमर्हन्ति । विंशत्यादयो हि तावत् पृथक्त्वयोगिषु द्रव्येषु वर्तन्त इति व्यासज्यवृत्तयः, शुक्लादयस्तु प्रत्येकपर्यवसायिनः' इति । **अत्रेदमतिरहस्यम्**—संख्येयपराणां संख्याशब्दानां बहुवचने षट्पञ्चाशतो मयूखा इति प्राप्तौ षट्त्रिंशदुत्तरशतोत्तरत्रिसहस्रसंख्याकाः भवेयुः । अतो विवक्षितार्थसिद्धिरिति नियमफलमिति ।

**अत्रेदमनुसन्धेयम्**—आधार-स्वाधिष्ठान-मणिपूर-अनाहत-विशुद्ध्या-ज्ञाचक्रात्मकं श्रीचक्रं त्रिखण्डं सोमसूर्यानलात्मकम् । मूलाधार-स्वाधिष्ठान-चक्रद्वयमेकं खण्डम् । मणिपूरानाहतचक्रद्वयमेकं खण्डम् । विशुद्ध्याज्ञाचक्रद्वयमेकं खण्डम् । अत्र प्रथमखण्डोपरि अग्निस्थानम् । तदेव रुद्रग्रन्थिरित्युच्यते । द्वितीयखण्डोपरि सूर्यस्थानम् । तदेव विष्णुग्रन्थिरित्युच्यते । तृतीयखण्डोपरि चन्द्रस्थानम् । तदेव ब्रह्मग्रन्थिरित्युच्यते । 'सोमसूर्यानलात्मकं

इति अवरोहणक्रमेणावगन्तव्यम् । तत्र प्रथमखण्डोपरि स्थितो वह्निः स्वज्वालाभिः प्रथमखण्डमावृणोति । द्वितीयखण्डोपरि स्थितः सूर्यः स्वकीयैः किरणैः द्वितीयखण्डमावृणोति । तृतीयखण्डोपरि स्थितः चन्द्रः स्वकलाभिः तृतीयखण्डमावृणोति । आधारचक्रे महीतत्त्वात्मके वह्नेः षट्पञ्चाशज्ज्वालाः, मणिपूरके उदकतत्त्वात्मके स्वोपरिस्थिते द्विपञ्चाशज्ज्वालाः। एवमष्टोत्तरशतं वह्नेः ज्वालाः । सूर्यस्य अग्नितत्त्वात्मके स्वाधिष्ठाने द्वाषष्टिकिरणाः, अनिलतत्त्वात्मके अनाहतचक्रे चतुःपञ्चाशत्किरणाः । सूर्यकिरणानां मणिपूरं विहाय स्वाधिष्ठानप्रवेशः सूर्याग्न्योरेकत्वात्, सूर्यान्तर्भावादग्नेश्च । स्वाधिष्ठानमणिपूरयोस्तु सूर्याग्निस्थानयोः मध्ये अग्निस्थाने सूर्यप्रवेशः सूर्यस्थाने अग्निप्रवेशः जगद्दहनाग्निशामक संवर्तमेघात्मकसूर्यकिरणजनितवर्षोत्पत्त्यर्थम् । एतत्तु 'तटित्वन्तं शक्त्या' इत्यादि श्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः । एवं सूर्यस्य षोडशोत्तरशतं किरणा भवन्ति । चन्द्रस्य कलाः वियत्तत्त्वात्मके विशुद्धिचक्रे द्विसप्ततिः, मनस्तत्त्वात्मके आज्ञाचक्रे चतुष्षष्टिः । एवं चन्द्रस्य षट्त्रिंशदुत्तरशतं कलाः भवन्ति । यथोक्तं **भैरवयामले भैरवाष्टकप्रस्तावे**—

अष्टोत्तरशतं वह्नेः षोडशोत्तरकं रवेः ।
षट्त्रिंशदुत्तरशतं चन्द्रस्य च विनिर्णयः ।। इति ।।

एवं सोमसूर्यानलाः पिण्डाण्डब्रह्माण्डे आवृत्य वर्तन्ते । पिण्डाण्डब्रह्माण्डयोरैक्यात् पिण्डाण्डवृत्तिरेव ब्रह्माण्डावृत्तिरिति रहस्यम् । एवं पिण्डाण्डमतीत्य वर्तते सहस्रकमलम् । तच्च ज्योत्स्नामयो लोकः । तत्रत्यश्चन्द्रमा नित्यकलः । एतच्च 'तवाज्ञाचक्रस्थम्' इत्यादि (श्लोकव्याख्यानावसरे) निपुणतरमुपपादयिष्यामः । 'आज्ञाचक्रोपरि स्थितश्चन्द्रः' इति यदुक्तं तत्तु चन्द्रकलावस्थानमात्रम्, न तु चन्द्रस्य स्थानमिति । यदुक्तं **सुभगोदये**—षोडशकलानां षोडशनित्यात्मकत्वात्, तासां प्रतिपदादिशुक्लपक्षकृष्णपक्षतिथ्यात्मकतया वृद्धिक्षयसद्भावात्, चन्द्रस्यापि सहस्रकमलगतस्य वृद्धिक्षयौ भवत एवेति, तत्तु चन्द्रमसः वृद्धिक्षयौ न भवतः, किन्तु षोडशनित्यात्मकाः षोडशचन्द्रकलाः प्रतिपदादिपौर्णमास्यन्ततिथिप्रवर्तिकाः, तथैव कृष्णप्रतिपदमारभ्य अमावास्यान्त तिथिप्रवर्तिकाः स्वात्मतिरोधानातिरोधानाभ्यामिति मन्त्रविद्रहस्यम् ।

**इदमत्रानुसन्धेयम्**—श्रीविद्यायाः चन्द्रकलाविद्यापरनामधेयायाः पञ्चदशतिथिरूपत्वात् षष्ट्युत्तरत्रिशतं मयूखाः दिवसात्मकाः,तेन संवत्सरो लक्ष्यते । तस्य कालशक्त्यात्मकस्य संवत्सरस्य प्रजापतिरूपत्वात्, प्रजापतेः जगत्कर्तृत्वात्, मरीचीनां जगदुत्पत्तिस्थितिलयकरत्वम् । ते च मरीचयः अस्मिन् ब्रह्माण्डे पिण्डाण्डे च षष्ट्युत्तरत्रिशतसंख्याकाः । एवं अनन्तकोटिपिण्डाण्डब्रह्माण्डेषु । एवमेव प्रतिब्रह्माण्डं प्रतिपिण्डाण्डं षष्ट्युत्तरत्रिशतसंख्याकाः मयूखाः । अतश्चानन्तमयूखाः । ते च मयूखाः सूर्यचन्द्राग्निसम्पृक्ताः भगवतीपादारविन्दजन्मानः तान् तान् लोकान् प्रकाशयन्ति । अयं च लोकस्य द्वारमर्चिष्मत्पवित्रम् (तै.ब्रा. ३.१२.३) इति श्रुत्या मयूखानां भगवतीपादारविन्दसम्भव उक्तः । तथैव च 'मरीचयस्स्वायंभुवाः' (तै.आ. १.२७) इति श्रुत्या तेषां मरीचीनां सृष्टिस्थितिलयकरत्वमुक्तम् । एतदुक्तं भवति—सूर्यचन्द्राग्नयः भगवतीपादारविन्दोद्भूतानन्तकोटिकिरणमध्ये कतिपयान् किरणानाहृत्य भगवतीप्रसादसमासादितजगत्प्रकाशनसामर्थ्यात् जगन्ति प्रकाशयन्तीति । अतश्च सर्वलोकातिक्रान्तं चन्द्रकलाचक्रं बैन्दवस्थानमिति । तत्र वर्तमानं चरणाम्बुजम् । अनेककोटिब्रह्माण्डपिण्डाण्डावच्छिन्नमयूखानां उपर्येव वर्तमानत्वात् 'तेषामप्युपरि तव पादाम्बुजं

तर्तते' इति सिद्धानुवादः, न त्वारोपस्तुतिरित्यनुसन्धेयम् । यथोक्तं **भैरवयामले** चन्द्रज्ञान-विद्यायां गौरीं प्रति महेश्वरेण—

साधु साधु महाभागे पृष्टं त्रैलोक्यसुन्दरि ।
गुह्याद्गुह्यतमं ज्ञानं न कुत्रापि प्रकाशितम् ॥ १ ॥
कलाविद्या पराशक्तेः श्रीचक्राकाररूपिणी ।
तन्मध्ये बैन्दवस्थानं तत्रास्ते परमेश्वरी ॥ २ ॥
सदाशिवेन सम्पृक्ता सर्वतत्त्वातिगा सती ।
चक्रं त्रिपुरसुन्दर्याः ब्रह्माण्डाकारमीश्वरि ॥ ३ ॥
पञ्चभूतात्मकं चैव तन्मात्रात्मकमेव च ।
इन्द्रियात्मकमेवं च मनस्तत्त्वात्मकं तथा ॥ ४ ॥
मायादितत्त्वरूपं च तत्त्वातीतं च बैन्दवम् ।
बैन्दवे जगदुत्पत्तिस्थितिसंहारकारिणी ॥ ५ ॥
सदाशिवेन सम्पृक्ता तत्त्वातीता महेश्वरी ।
ज्योतीरूपा पराकारा यस्या देहोद्भवाश्शिवे ॥ ६ ॥
किरणाश्च सहस्रं च द्विसहस्रं च लक्षकम् ।
कोटिरर्बुदमेतेषां परा सङ्ख्या न विद्यते ॥ ७ ॥
तामेवानुप्रविश्यैव भाति लोकं चराचरम् ।
यस्या देव्या महेशानि भासा सर्वं विभासते ॥ ८ ॥
तद्भासा रहितं किञ्चित् न च यच्च प्रकाशते ।
तस्याश्च शिवशक्तेश्च चिद्रूपायाश्चितिं बिना ॥ ९ ॥
आन्ध्यमापद्यते नूनं जगदेतच्चराचरम् ।
तेषामनन्तकोटीनां मयूखानां महेश्वरि ॥ १० ॥
मध्ये षष्ट्युत्तरं तेऽमी त्रिशतं किरणाश्शिवे ।
ब्रह्माण्डं व्यश्नुवानास्ते सोमसूर्यानलात्मना ॥ ११ ॥
अग्नेरष्टोत्तरशतं षोडशोत्तरकं रवेः ।
षट्त्रिंशदुत्तरशतं चन्द्रस्य किरणाश्शिवे ॥ १२ ॥
ब्रह्माण्डं भासयन्तस्ते पिण्डाण्डमपि शाङ्करि ।
दिवा सूर्यस्तथा रात्रौ सोमो वह्निश्च सन्ध्ययोः ॥ १३ ॥
प्रकाशयन्तः कालांस्ते तस्मात्कालात्मकास्त्रयः ।
षष्ट्युत्तरं च त्रिशतं दिनान्येव च हायनम् ॥ १४ ॥
हायनात्मा महादेवः प्रजापतिरिति श्रुतिः ।
प्रजापतिर्लोककर्ता मरीचिप्रमुखान् मुनीन् ॥ १५ ॥
सृजन्त्येते लोकपालान् ते सर्वे लोकरक्षकाः ।
संहारश्च हरायत्तः उत्पत्तिर्भवनिर्मिता ॥ १६ ॥
रक्षा तु मृडसंलग्ना सृष्टिस्थितिलये शिवः ।
नियुक्तः परमेशान्या जगदेवं प्रवर्तते ॥ १७ ॥ इति ॥

'तामेवानुप्रविश्य' इत्यादिना—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं

विभाति' (कठ. ५.२५) इति श्रुत्यर्थोऽनूदितः । अत्र बहु वक्तव्यमस्ति, तदुत्तरत्र सम्यङ्-निरूपयिष्यामः ॥ १४ ॥

*** सरला ***

**क्षिताविति** । **क्षितौ** पृथ्वीतत्त्वयुक्त मूलाधार में षट्पञ्चाशत् ५६, **द्विसमधिक-पञ्चाशत ५२ उदके** उदकततत्वयुक्त मणिपूर स्थान में, **हुताशे** वह्नितत्त्वयुक्त स्वाधिष्ठन चक्र में द्राषष्ठि ६२, **चतुरधिक पञ्चाशत् ५४ अनिले** वायुतत्त्वयुक्त अनाहत चक्रे, **दिवि** आकाशततत्वयुक्ते विशुद्धि नामक चक्र में, **द्विषट्त्रिंशत् ७२** संख्या वाले, **मनसि** मनोतत्त्व युक्त आज्ञाचक्र में इस प्रकार से **ये** शास्त्रों और आगमों में स्वसंवेध योगियों में प्रसिद्ध, **मयूखाः** सन्ति तेषां मयूखानां, **अपि उपरि** सहस्त्रदलमध्यवर्तिचन्द्रबिम्बात्मक जिसे वैन्दव स्थान भी कहते हैं ऐसे सुधासिन्धु में, **तव** आपके, **पादाम्बुजयुगं** दोनों चरणकमल, **वर्तते** विद्यमान रहते हैं—ऐसा समयमत का सिद्धान्त है ।

**पदयोजना का अर्थ**—हे भगवति ! जितने भी मयूख हैं, जैसे पृथ्वी में ५६, जल में ५२, अग्नि में ६२, वायु में ५४, आकाश में ७२ और मन में ६७ तत्त्व हैं उन सभी के ऊपर आप के दोनों चरण कमल विराजमान रहते हैं ।

यहाँ 'षट्पञ्चाशदित्यादि' संख्या शब्द संख्येय परत्व होने से संख्येय मयूखों के बहुवचन होने पर भी एक वचन में उसका प्रयोग होना उचित ही है । जैसा कि 'विंशति' आदि श्लोक में है ।

जिसके अर्थात् उन विंशति से लेकर सभी संख्याएँ 'संख्या और संख्येय' दोनों ही अर्थों में एकवचन होते हैं । अतः संख्यार्थ जहाँ हो दहाँ, द्वित्व बहुत्व हो सकता है किंतु संख्येय में नहीं, यह नियम है ।

मयूख संख्येय है । इसलिये नियम लागू न होने के कारण उनका बहुवचनान्तत्व अर्थ सिद्ध हो जायगा ही । यहाँ यह सिद्धान्त समझ लेना चाहिए कि षट्पञ्चाशदित्यादि संख्याओं के संख्येय में विशेषण होने पर भी शुक्लादि गुणों के समान उसकी तुल्यता नहीं है, जैसा कि **पदमञ्जरीकार** कहते हैं—'विंशत्यादि गुण होने पर भी शुक्लादि गुणों के समान धर्म वाले नहीं है क्योंकि विंशत्यादि शब्द अपने से पृथक् रहने वाले द्रव्यो में रहते हैं । अतः व्यासज्य वृत्ति (उभयात्मक) धर्म वाले हैं । शुक्लादि गुण तो प्रत्येक में पर्यवसायी है ।' यहाँ का अत्यन्त गूढ़ रहस्य यह है कि—संख्येयपरक संख्या शब्दों के बहुवचन में प्रयोग होने पर भी 'षट्पञ्चाशतो मयूखाः' ऐसा प्राप्त होने पर भी सम्पूर्ण मयूखों की संख्या ३१६० ही रहेगी । इतने से ही हमारे विवक्षित अर्थ की सिद्धि हो जाती है ।

(**विमर्श**—यहाँ षट्पञ्चाशदित्यादि शब्द संख्येय परक है । यद्यपि संख्येय मयूख बहुवचनान्त है, तथापि षट्पञ्चाशदित्यादि शब्द का प्रयोग एकवचन में ही है क्योंकि नियम यह है कि—संख्या और संख्येय दोनों ही अर्थ 'विंशति' आदि वाच्य है । किन्तु संख्येय अर्थ में उसका शब्द से प्रयोग होता है । यद्यपि ५६ आदि एक वचन और संख्यः में बहुवचन के रूप में संख्याएँ संख्येय के विशेषण हैं, तथापि वे शुक्लादिगुणों के तुल्य नहीं हैं, जैसे शुक्लः पटः, शुक्लाः पटाः । यहाँ 'शुक्ल' शब्द संख्येय परक होने पर भी एकवचनान्त बहुवचनान्त होते हैं, यहाँ ऐसी बात नहीं है, जैसा कि पदमञ्जरीकार कहते हैं—विंशत्यादि

## * सरला *

**तडिल्लेखेति । तडिल्लेखा** विद्युल्लेखा के समान दीर्घ और सूक्ष्म क्षण मात्र प्रकाश करने वाली । इस स्थिरदामिनी का क्षणमात्र प्रकाश 'आज्ञा चक्र' में होता है जो क्षण मात्र के लिये ही दिखाई पड़ता है । यह बात आज्ञा चक्र के निरूपण के अवसर पर हमने (लक्ष्मीधर ने) कह दी है । **तपनशशिवैश्वानरमयीं** सूर्यचन्द्रानिलात्मिका का । यह बात भी त्रिखण्डा-निरूपणावसर में हमने अच्छी प्रकार से निरूपित कर दी है । **निषण्णाम्** बैठी हुई, **षण्णां** छः संख्या वाले, **अपि** यह समुच्चयार्थ प्रयुक्त है, ग्रन्थित्रय को प्राप्त करता है अर्थात् ग्रन्थित्रय के भी ऊपर, **उपरि कमलानां** कमलों के ऊपर । इन आधार, स्वाधिष्ठान, मणिपूरक, अनाहत, विशुद्ध तथा आज्ञात्मक छः चक्रों की कमलरूपता हमने पहले निरूपित कर दी है । **तव** आपकी, **कलां** सादाख्य बैन्दवी कला को, **महापद्माटव्यां** बहुत कमलदल वाले अटवी स्वरूप अर्थात् सहस्त्रदलकमल की कर्णिकाओं में, **मृदितमलमायेन** कामादिक मलों तथा अविद्या, अस्मिता एवं अहङ्कारादि माया स्वरूपों को नष्ट कर दिया है जिसने ऐसे, **मनसा** अन्त:करण से, **महान्तः** योगीश्वर, **पश्यन्तः** सादाख्यकला से निकलती हुई 'सुधाधारा' का अनुभव करते हुये **दधति** अपने में ही रोक लेते हैं । **परमाह्लादलहरीं** अत्यन्त सुख विशेष के उद्रेक को अर्थात् सबसे उत्कृष्ट आनन्द को जो सादाख्य कला के अमृत के अनुभव से उत्पन्न होता है, उन्हें सर्वदा प्राप्त करते हैं ।

**पदयोजना का अर्थ**—हे भगवति ! विद्युत् के आकार के समान दीर्घ, सूक्ष्म एवं क्षण मात्र के लिये प्रकाशित होने वाली सूर्य-सोम-अनिलात्मक स्वरूप वाली षट् कमल चक्रों के ऊपर रहने वाले सहस्त्रदलात्मक महाटवी में विराजमान आपकी कला का कामादि 'मल' तथा अविद्या अस्मिता अहङ्कारादि 'मायामल' से सर्वथा रहित मन से योगी जन अत्यन्त आनन्द के उद्रेक को धारण करते हैं ॥ २१ ॥

**ध्यान**—'त' । **श्लोकस्थ वर्ण बीज 'त' का ध्यान**—

चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम् ।
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम् ॥
नानाऽलङ्कारभूषां तां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा तकारं तु मन्त्ररूपं सदा यजेत् ॥
तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा ॥
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम् ॥

**सकलजनविरोधनाशक यन्त्र**

**पूजन-यन्त्र**—वृत्त में 'ह्रीं ह्रीं ह्रीं' लिखे ।

**भावार्थ**—श्री कामकला का ध्यान (अर्थात् त्रिदेव-माता का 'बाह्य ध्यान') १९ वें श्लोक में कहा गया है । इस श्लोक में श्री आनन्दमयी देवी का श्रेष्ठ साधकोपयुक्त आभ्यन्तर ध्यान दिया गया है ।

हे आनन्दमयी महाकला ! अग्नि-शिव-शशिमयी आप विद्युत् रेखावत् द्रुतगतिमयी तथा अनन्त प्रकाशमयी हो । चन्द्राग्नि एवं सूर्यादि सभी आप के अनन्त शक्तिसागर में बिन्दुवत् हैं । आप प्रकृतिचक्र के षट्चक्र-पद्मों से अति परे हैं । विश्व महापद्मवन में जिन महाभ्यासी साधकों के मन कामक्रोधादि विकारमय कीचड़ से छूट गये हैं—वे आपके चिच्छक्ति भाव का चिन्तन करते हुए परमानन्दलहरीरूपिणी श्री कला का दर्शन पाते हैं ।

**श्रीविद्यारहस्यार्थ**—कमलवन सुखप्रद होने पर भी उसमें कीचड़ रहता है । कमल-वन का आनन्द लेते हुये भी जो श्रेष्ठ साधक तत्स्थानस्थ कीचड़ से विलग रहते हैं, वे ही श्रेष्ठ साधक हैं तथा वे ही जगदम्बा के दिव्याशीर्वाद के पात्र हैं ।

इस प्रकार यहाँ सहस्रार के दिव्य दर्शन का भाव है ।

अग्नि-सूर्य-सोम—प्रशान्त एकात्मता की स्थिति-शान्ति-पराकला—इन तीन बिन्दुओं के आधार-स्थान को 'योनि' कहते हैं । इन तीनों बिन्दुओं को बाह्य क्रियाएँ पृथक्-पृथक् हैं । परन्तु योन्याधार-स्थान को पाकर त्रिबिन्दु की तीनों क्रियाओं का सम्मिश्रण तथा लयीकरण प्रारम्भ हो जाता है और उन्मनी भाव की जागृति होकर उसमें से सपरार्द्ध कला का स्फुरण करती है । इस स्थान पर शिव-शक्ति की एकात्मकता का साधक को भान होता है । इस एकात्म महानन्द में साधक अपने 'अहं' को भूल जाता है । यही आनन्दमयी एकात्मभावा समाधि कही गई है ॥ २१ ॥

**भवानि त्वं दासे मयि वितर दृष्टिं सकरुणा-**
**मिति स्तोतुं वाञ्छन् कथयति भवानि त्वमिति यः ।**
**तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं**
**मुकुन्दब्रह्मेन्द्रस्फुटमकुटनीराजितपदाम् ॥ २२ ॥**

**लक्ष्मीधरा**—हे **भवानि** ! भवस्य पत्नि! **त्वं** भवती, **दासे मयि** दासभूते किङ्करे मयि, **वितर** देहि । **दृष्टिं** कटाक्षं, **सकरुणां** करुणायुक्तां, **इति** एवं प्रकारेण, **स्तोतुं** स्तोत्रं कर्तुं, **वाञ्छन्** इच्छन्, **कथयति** वदति । **भवानि त्वमिति** 'भवानि त्वं दासे मयि वितर दृष्टिं सकरुणाम्' इति वाक्यप्रतीकं 'भवानि त्वं' इत्येवं, **यः** साधकः, **तदैव** 'भवानि त्वम्' इति वाक्यैकदेशोच्चारणसमय एव, **त्वं** भवती **तस्मै** वाक्यैकदेशोच्चारकाय, **दिशसि** ददासि । **निजसायुज्यपदवीं** निजस्य आत्मनः सायुज्यपदवीं तादात्म्यम् । **मुकुन्दब्रह्मेन्द्रस्फुटमकुट-नीराजितपदां** मुकुन्दो विष्णुः, ब्रह्मा द्रुहिणः, इन्द्रः आखण्डलः, तेषां स्फुटं यथा भवति तथा मकुटैः नीराजिते निराजनविधिक्रियाञ्चिते पदे पदाम्बुजे यस्यास्ताम् ।

**अत्रेत्थं पदयोजना**—हे भवानि! त्वं दासे मयि सकरुणां दृष्टिं वितरेति स्तोतुं वाञ्छन् भवानि त्वमिति यः कथयति तस्मै तदैव त्वं मुकुन्दब्रह्मेन्द्रस्फुटमकुटनीराजितपदां निज-सायुज्यपदवीं दिशसि ॥

**अयमर्थः**—'भवानि त्वं दासे मयि' इत्यादिवाक्यप्रतीके 'भवानि त्वं' इति पदद्वये 'भवानि' इति पदस्य लोडुत्तमपुरुषैकवचनान्तत्वमवगम्य तत्सामानाधिकरण्येन त्वं पदस्या-न्वये महावाक्यप्रयोगोऽनेन साधकेन प्रयुक्त इति मत्वा महावाक्यफलं तादात्म्यं दिशति भगवती, जपहोमाद्युपासनाविधिभ्यः तादात्म्योपासनायाः सद्यः फलदायित्वात्—

अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥

इति न्यायेन अविवक्षया प्रयुक्तमपि महावाक्यं फलदायकमिति, नापि अविमृश्यकारित्वं देव्या इति रहस्यम् ॥ २२ ॥

*** सरला ***

**भवानीति । हे भवानि!** हे भवपत्नि ! **त्वं** आप **दासे मयि** किङ्करभूत मुझमें **वितर** प्रदान कीजिए, **दृष्टिं** कटाक्ष, **सकरुणां** करुणायुक्त, **इति** इस प्रकार, **स्तोतुं** स्तोत्र करने के लिये, **वाञ्छन्** इच्छा करते ही, **कथयति** कहता है, **भवानि त्वमिति** 'भवानि त्वं दासे मयि वितर दृष्टिं सकरुणाम्' यह वाक्य का प्रतीक है । किन्तु इसमें जो केवल 'भवानि त्वं' मात्र कह पाता है ऐसा साधक—**तदैव** 'भवानि त्व'मिति वाक्यैकदेश के उच्चारण के समय ही, **त्वं** आप, **तस्मै** उस वाक्यैकदेश के उच्चारण करने वाले साधक को, **दिशसि** देती हो, **निजसायुज्यपदवीं** अपने में तादात्म्य रूप से युक्त हो जाने वाली सायुज्यपदवीं को, **मुकुन्दब्रह्मेन्द्रस्फुटमकुटनीराजितपदां** विष्णु, ब्रह्मदेव एवं इन्द्र के मुकुटों से आरती किये जाने पर स्पष्ट रूप से दिखाई पड़ रहे हैं पादाम्बुज जिसके, उस सायुज्य पदवी को देती हैं ।

**पदयोजना का अर्थ**—हे भवपत्नि ! आप मुझ दास पर अपनी सकरुणा दृष्टि प्रदान कीजिए । क्योंकि जो साधक आपकी स्तुति के लिये 'भवानि त्वं दासे मयि सकरुणां दृष्टिं वितर' इस वाक्य का एकदेश 'भवानि त्वं' मान्त्र को जितने काल में उच्चारण कर पाता है आप उसे उसी क्षण ब्रह्मा, विष्णु तथा इन्द्र के मुकुटों द्वारा आरती किये जाने पर स्पष्ट रूप से जिसके पद दिखाई पड़ रहे हैं ऐसी अपनी सायुज्य पदवी प्रदान कर देती हो ।

इस श्लोक का तात्पर्य इस प्रकार है—'भवानि त्वं दासे मयि सकरुणां दृष्टिं वितर' यह एक वाक्य है । इस वाक्य में साधक ज्यों ही 'भवानि त्वं' इन दो पदों का उच्चारण कर पाता है कि आप भवानि में लोट् लकार के उत्तम पुरुष का एकवचन अर्थात् 'मैं आपका स्वरूप बन जाऊँ । ऐसे महावाक्य का उच्चारण समझ कर देवी महावाक्य के फलस्वरूप उसे अपने से अभिन्न (तादात्म्य सम्बन्ध स्वरूप वाली) सायुज्य पदवी प्रदान कर देती हैं, क्योंकि जप होमादि उपासनाओं की अपेक्षा तादात्म्य सम्बन्ध वाली उपासना सद्यः फलदायिनी होती है । कहा भी है—

'विना इच्छा के भी अग्नि का स्पर्श हो जाने पर वह जला देती है ।

इस न्याय (= नियम) से विवक्षा से रहित भी प्रयुक्त महावाक्य फलदायी हो गया । इसमें देवी ने विचार नहीं किया यह बात नहीं है । क्योंकि विचारे जाने पर उच्चरित होने पर अथवा अविचारित उच्चरित होने पर भी महावाक्य में आवश्यक फलदातृत्व है ही ॥ २२ ॥

**ध्यान**—भ— तडित्प्रभां महादेवीं नागकङ्कणशोभिताम् ।
चतुर्वर्गप्रदां देवीं साधकाभीष्टसिद्धिदाम् ॥
एवं ध्यात्वा भकारं तु तन्मन्त्रं दशधा जपेत् ।
भकारं शृणु चार्वाङ्गि स्वयं परमकुण्डली ॥

महामोक्षप्रदं वर्णं तरुणादित्यसमप्रभम् ।
पञ्चप्राणमयं वर्णं पञ्चदेवमयं प्रिये ॥

**बीजाक्षर**—'भ'; जपादि विधान उपर्युक्त समान; पूजन-यन्त्र—श्रीयन्त्र, होम—करवीर पुष्प, बिल्व, पायस से; नैवेद्य—मधु, त्रिमधु, दधि, क्षीर, चित्रान्न ।

**भावार्थ**—हे भगवति ! आप पूर्ण दयामृतसागरा हैं—आप दिव्य दयामयी हैं । आपकी दयामयी बौछार निज भक्तों को विश्व-त्रिताप से बचाने के लिये उन पर बरसा ही करती हैं । हे करुणामयी ! आप अपने करुणामय दृष्टिपात से मुझ दास को देखिये'—इस प्रकार आपका स्तवन करने की इच्छा वाला भक्त ज्योंहि अपने मुख से 'भवानि त्वं' इतने शब्द निकालता है कि आप त्वरित ही उसे अपना सायुज्य पद दे देती हैं । जो पद मुकुन्द ब्रह्मेन्द्रादि देवों के शीशमुकुट से सेवित है तथा जिन चरणकमलों की आरती देवमुकुटमणि की ज्योति से उतारी जाती है । अर्थात् मैं आपके चरणों में तल्लीन हो जाऊँ, क्योंकि सतत ध्यान करने वाले साधक में आपकी सिद्ध्यादि अनेक शक्तियाँ प्रकट होने लगती हैं ।

**विमर्श**—पिछले श्लोकों में बहिर्याग, अन्तर्यागादि का वर्णन करने के पश्चात् इस श्लोक में श्रीशङ्करभगवत्पाद ने भक्तिभाव का वर्णन किया है । भक्ति-योगमतानुसार मुक्त भक्त की चार अवस्थायें कही गयी हैं । यथा—

१ सालोक्य, २ सामीप्य, ३ सारूप्य और ४ सायुज्य ॥ २२ ॥

**त्वया हृत्वा वामं वपुरपरितृप्तेन मनसा**
**शरीरार्धं शम्भोरपरमपि शङ्के हृतमभूत् ।**
**यदेतत्त्वद्रूपं सकलमरुणाभं त्रिनयनं**
**कुचाभ्यामानम्रं कुटिलशशिचूडालमकुटम् ॥ २३ ॥**

**लक्ष्मीधरा**—त्वया भवत्या, हृत्वा अपहृत्य, वामं वामार्धं, वपुः शरीरं, अपरि-

**तृप्तेन** असन्तुष्टेन, **मनसा** अन्तःकरणेन, **शरीरार्धं शम्भोरपरमपि** दक्षिणमपि, **शङ्के** मन्ये **हृतं** गृहीतं, **अभूत्** । **यत्** यस्मात् **एतत्** हृदयकमलान्तःप्रतिभासि, **त्वद्रूपं** तव शरीरं, **सकलं** कृत्स्नं वामदक्षिणभागात्मकं, **अरुणाभं** अरुणस्य प्रातःकालसूर्यस्याभेवाभा यस्य तत् । यद्वा—अरुणा रक्तवर्णा आभा प्रभा यस्य तत् अरुणाभम् । **त्रिनयनं** नयनत्रययुक्तं, **कुचाभ्यामानम्रं** स्तनाभ्यामीषन्नम्रं **कुटिलशशिचूडालमकुटं** कुटिलशशिना वक्रचन्द्रकलया चूडालं चूडावन्तं मकुटं यस्य तत् ।

**अत्रेत्थं पदयोजना**—हे भवगति ! शम्भोर्वामं वपुः त्वया हृत्वा अपरितृप्तेन मनसा अपरमपि शरीरार्धं हृतमभूदिति शङ्के; यत् एतत् त्वद्रूपं सकलमरुणाभं त्रिनयनं कुचाभ्यामानम्रं कुटिलशशिचूडालमकुटम् ॥

**अयमर्थः**—भगवत्या शम्भोः एकस्मिन्नर्धे अपहृते अपरार्धस्याप्यपहार उत्प्रेक्ष्यते । यद्वा—उत्तरकौलसिद्धान्तप्रतिपादकोऽयं श्लोकः । उत्तरकौलसिद्धान्ते शक्तितत्त्वात् अन्यत् शिवतत्त्वं नास्ति । अतश्च शिवतत्त्वं शक्तितत्त्वे अन्तर्भूतमिति तदेव उपास्यमिति प्रस्तुतम् । एतच्च 'मनस्त्वं व्योम त्वम्' (३५) इति श्लोकव्याख्यानावसरे, तवाधारे मूले' (४९) इति श्लोकव्याख्यानावसरे च निपुणतरमुपपादयिष्यामः ॥ २३ ॥

*** सरला ***

**त्वयेति** । **त्वया** आप के द्वारा, **हृत्वा** अपहरण कर, **वामं** वामार्ध, **वपुः** शरीर को, **अपरितृप्तेन** असंतुष्ट, **मनसा** अन्तःकरण से, **शरीरार्धं शम्भोः अपरमपि** शम्भु के अपर दक्षिणभाग को भी, **शङ्के** मानता हूँ, **हृतं** ग्रहण कर, **अभूत्** लिया, **यत्** जिस कारण से, **एतत्** यह हृदय कमल के भीतर मालूम पड़ता है, **त्वद्रूपं** आपका शरीर, **सकलं** सम्पूर्ण, वाम एवं दक्षिणात्मक समस्त शरीर, **अरुणाभं** प्रातःकालीन सूर्य की समान आभा वाले अथवा रक्त वर्ण की आभा हो गई है जिसकी । **त्रिनयनं** तीन नेत्रों से युक्त, **कुचाभ्यामानम्रं** दोनों स्तनों से किञ्चित् नम्र, **कुटिलशशिचूडालमुकुटं** टेढी चन्द्र कला से जटायुक्त शिरःस्थमुकुट है जिसका ।

**पदयोजना का अर्थ**—हे भगवति ! आपने जब सदाशिव के शरीर के एक आधे भाग का हरण कर लिया, फिर भी आपका मन इतने मात्र से संतुष्ट नहीं हुआ, अतः शेष दूसरे आधे भाग का भी हरण कर लिया—ऐसा मुझे मालूम पड़ता है, क्योंकि उनका वह सारा शरीर आपके शरीर के समान अरुण वर्ण की आभा वाला एवं तीन नेत्रों से युक्त तथा कुचों के भार से कुछ झुका हुआ सा द्वितीया के चन्द्रमा से युक्त केशों पर मुकुट धारण किये जैसा दिखाई पड़ रहा है ।

इस **श्लोक का तात्पर्य** इस प्रकार है—यहाँ भगवती के द्वारा शिव के आधे शरीर के अपहरण कर लेने पर शेष आधे भाग को भी भगवती के द्वारा अपहरण कर लेने की उत्प्रेक्षा कहते हैं । अथवा, यह श्लोक उत्तर कौल के सिद्धांत का प्रतिपादक है । उत्तर कौल के सिद्धान्तानुसार शक्तितत्त्व से अन्य कोई शिव तत्त्व नहीं है । अतः शिवतत्त्व शक्तितत्त्व में अन्तर्भूत है । इसलिये शक्तितत्त्व की ही उपासना करनी चाहिए, यह बात 'मनस्त्वं व्योम त्वं' (द्र० ३५) इस श्लोक की व्याख्या के अवसर पर तथा 'तवाधारे मूले' इस श्लोक (द्र० ४१) की व्याख्या के अवसर पर अच्छी तरह उपपादन करेंगे ॥ २३ ॥

**ध्यान**—'त्व' = त् + व । **श्लोकस्थ वर्ण बीज 'त' का ध्यान**—

त— चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम् ।
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम् ॥
नानाऽलङ्कारभूषां तां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा तकारं तु मन्त्ररूपं सदा यजेत् ॥
तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा ॥
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम् ॥

व— कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम् ।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम् ॥
साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम् ।
एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत् ॥
वकारं चञ्चलापाङ्गि कुण्डलीमोक्षमव्ययम् ।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ।
त्रिबिन्दुसहितं मन्त्रमात्मादितत्त्वसंयुतम् ॥
पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम् ।
चतुर्वर्गप्रदं शान्तं सर्वसिद्धिप्रदायकम् ॥

**ऋणमोचनयन्त्र**

**बीजाक्षर**—'त्व'; जप—१०००; जपस्थान—स्वाधिष्ठान; होम—करवीर पुष्प, बिल्व और पय से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोकपाठसंख्या—१०; श्लोकपाठ-आहुति—१ ।

**भावार्थ**—हे जगदम्बे ! (ऐसा आभास होता है कि) भगवान् शिव का वामाङ्ग हरण कर आप ने सन्तोष न मान उनका दक्षिणार्द्ध भी हरण कर लिया है । आप के दिव्य शरीर की यह रक्ताभ छवि, त्रिनेत्र, कुचभार से अङ्ग की कुछ झुकावट तथा चन्द्ररूपमुकुट इस गुप्त भेद के साक्षी हैं अर्थात् श्री भगवान् शिव के अलङ्कारों का आपके श्री देह में प्रत्यक्ष दर्शन होता है । इससे यह सिद्ध है कि श्री शम्भु का समस्त देह आपने अपने में पचा लिया है ।

**विमर्श**—इस श्लोक में शिवतत्व के शक्तितत्व में लय हो जाने से शक्तितत्व का प्रधानत्व बताया गया है ॥ २३ ॥

**जगत्सूते धाता हरिरवति रुद्रः क्षपयते**
**तिरस्कुर्वन्नेतत्स्वमपि वपुरीशस्तिरयति ।**
**सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिवः**
**तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ॥ २४ ॥**

**लक्ष्मीधरा—जगत्** स्थावरजङ्गमात्मकं जगत्, **सूते** सृजति, **धाता** स्रष्टा । **हरिः** विष्णुः, **अवति** रक्षति । **रुद्रः क्षपयते** संहरति । धातृहरिरुद्राः सृष्टिस्थितिलयाधिकारिणः । **तिरस्कुर्वन्** उपसंहरन्, **एतत् धातृहरिरुद्रात्मकं त्रितयं,** स्वमपि स्वकीयमपि, **वपुः** देहं, **ईशः** महेश्वरतत्त्वं, **तिरयति** अन्तर्हितं करोति । ईश्वरः धातृहरिरुद्रान् आत्मन्यारोप्य स्वयमपि सदाशिवतत्त्वे अन्तर्भूत इत्यर्थः । अनेन ब्रह्माण्डप्रलय उक्तः । तदनन्तरं ब्रह्माण्डोत्पिपित्सा सदाशिवस्य जायते । तदानीमाह—**सदापूर्व** इति । सदाशब्दः पूर्वः यस्य शिवशब्दस्य सः **सदापूर्वः** शिवशब्दः । तेन सदा शिवशब्देन वाच्यवाचकयोः अभेदोपचारात् सदाशिवरूपं तत्त्वं उपचर्यते । सर्वं तदिदं पूर्वोक्तं धातृहरिरुद्रेशानात्मकं तत्वचतुष्टयं अनुगृह्णाति । चकारः शङ्काच्छेदे । **शिवः** सदाशिवः । कथमनुगृह्णातीत्याशङ्कायामाह—**तवाज्ञामालम्ब्य इति** । तव भवत्याः, **क्षणचलितयोः भ्रूलतिकयोः** क्षणमात्रं चलितयोः, भ्रूलतिकाचलनेन विज्ञेया-माज्ञामालम्ब्येत्यर्थः । **भवद्भ्रू** विक्षेपमात्रेण धातृहरिरुद्रेशानात्मकं तत्त्वचतुष्टयमुत्पन्नं, भ्रकुटीकरणमात्रेण तद्विनष्टमिति अनेककोटिब्रह्माण्डानामुत्पादने संहरणे च त्वद्भ्रूविक्षेपमात्र-रूपा शक्तिः साचिव्यं सदाशिवस्य करोतीति तात्पर्यम् ।

**अत्रेत्थं पदयोजना**—हे भगवति ! धाता जगत् सूते । हरिः जगत् अवति । रुद्रः जगत् क्षपयते । ईशः एतत् तिरस्कुर्वन् स्वमपि वपुः तिरयति । सदापूर्वः शिवः सर्वं तदिदं तव क्षणचलितयोः भ्रूलतिकयोः आज्ञामालम्ब्य अनुगृह्णाति ॥ २४ ॥

## ❋ सरला ❋

**जगदिति । जगत्** स्थावर जङ्गमात्मक जगत्, **सूते** उत्पन्न करते हैं, **धाता** स्रष्टा, **हरिः** विष्णु, **अवति** रक्षा करते हैं, **रुद्रः क्षपयते** रुद्र संहार करते हैं । ब्रह्मा, विष्णु, रुद्र क्रमशः सृष्टि करते हैं, पालन करते हैं एवं संहार करते हैं । **एतत्** ब्रह्म, विष्णु रुद्रात्मक त्रितयों के, **स्वमपि** अपने अपने, **तिरस्कुर्वन्** उपसंहार करते हुये, **ईशः** महेश्वर तत्त्व अपने में, **तिरयति वपुः** शरीर को उपसंहृत कर लेते हैं । फिर ईश्वर भी ब्रह्मा, विष्णु और रुद्र को अपने में अन्तर्हित कर स्वयं भी सदाशिव तत्त्व में विलीन हो जाते हैं । इससे ब्रह्माण्ड के लय का प्रतिपादन किया गया है । इसके बाद सदाशिव को ब्रह्माण्ड के उत्पादन करने की उत्पिपित्सा जब-जब होती हैं उस समय की अवस्था का वर्णन करते हुये कहते हैं । **सदापूर्व इति** 'सदा' शब्द है पूर्व में जिसके अर्थात् 'सदाशिव' । उस सदाशिव शब्द से वाच्य वाचक में अभेद होने से सदाशिव का स्वरूप लक्षणया जानना चाहिए । **सर्वं तदिदं** पूर्वोक्त व्याख्या में प्रतिपादित ब्रह्मा, विष्णु, रुद्र, ईशात्मक तत्त्वचतुष्टय को **अनुगृह्णाति** अनुगृहीत करते हैं, चकार शङ्का में प्रयुक्त है । **तवाज्ञामवलम्ब्य । तव क्षणचलितयोः भ्रूलतिकयोः** क्षणमात्र के भ्रूलतिका के संचालन से सूचित होने वाली आपकी आज्ञा का अवलम्बन करते हुये सृष्टि आदि करते हैं ।

आपके भ्रूविक्षेपमात्र से ब्रह्मा, विष्णु, रुद्र, ईशात्मक तत्त्व चतुष्टय उत्पन्न हुए तथा भ्रुकुटी के टेढ़ी करने मात्र वे विनष्ट भी हो गये । इस प्रकार अनेक करोड़ों ब्रह्माण्ड के उत्पादन में तथा उनके संहार में आपकी भ्रू विक्षेपरूपा शक्ति सदाशिव का साचिव्य करती हैं यही इसका तात्पर्य है ।

**पदयोजना का अर्थ**—हे भगवति ! ब्रह्मदेव यह स्थावरजङ्गमात्मक जगत् उत्पन्न

करते हैं, विष्णु पालन करते हैं तथा रुद्र इसका उपसंहार करते हैं। ईश्वर इन तीनों को अपने में अन्तर्हित कर स्वयं भी अपने शरीर को सदाशिव तत्त्व में विलीन कर देते हैं। यह सब इस ब्रह्माण्ड का उत्पादन तथा संहार सदाशिव केवल आपकी भ्रूकुटी संचालन मात्र से ही आपकी आज्ञा पा कर करते हैं ॥ २४ ॥

**ध्यान—'ज' । श्लोकस्थ वर्णबीज 'ज' का ध्यान—**

ज— नानालङ्कारसंयुक्तैर्भुजैर्द्वादशभिर्युतम् ।
रक्तचन्दनदिव्याङ्गीं चित्राम्बरविधारिणीम् ॥
त्रिलोचनां जगद्धात्रीं वरदां भक्तवत्सलाम् ।
एवं ध्यात्वा 'ज' कारं तु तन्मन्त्रं दशधा जपेत् ॥
जकारं परमेशानि या स्वयं मध्यकुण्डली ।
शरच्चन्द्रप्रतीकाशं दिव्यत्रिमुण्डसंयुतम् ॥
पञ्चदेवमयं वर्णं पञ्चप्राणमयं प्रिये ।
त्रिशक्तिसहितं वर्णं द्विबिन्दुसहितं यजेत् ॥

**बीजाक्षर**—'ज'; जप—१०००; जप-स्थान—स्वाधिष्ठान; होम—करवीर पुष्प, बिल्व, और पायस से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोकपाठसंख्या—१०; श्लोकपाठ आहुति—२ ।

**भूतप्रेतपिशाचापस्मारादिनिवारक यन्त्र**

| न | शि | य | मः | वा |
|---|---|---|---|---|
| य | मः | वा | न | शि |
| वा | न | शि | य | मः |
| शि | य | मः | वा | न |
| मः | वा | न | शि | य |

**भावार्थ**—हे विश्वविधायिनि ! विधाता ब्रह्मा विश्व की सृष्टि करते हैं, हरि पालन करते हैं और रुद्र संहारक हैं। उत्पत्ति-स्थिति-लयात्मक ब्रह्मेश हरि-सहित जगत् का तिरस्कार कर विश्वेश अपने निज देह को भी तिरोभावस्थ कर देते हैं। भगवान् श्री शिव आप के चलित नेत्रों के भ्रू के संकेत रूप आज्ञा से इन सब पर अनुग्रह करते हैं अर्थात् ब्रह्मा, रुद्रा, विष्णु और ईश्वर के लय होने के पश्चात् अकेले भगवान् श्री सदाशिव ही रह जाते हैं, जो ईश्वर-सहित सम्पूर्ण तत्त्वों का बीज में लय कर लेते हैं। यहीं से पुनरुत्पत्ति प्रकार प्रारम्भ होता है ॥ २४ ॥

**त्रयाणां देवानां त्रिगुणजनितानां तव शिवे**
**भवेत्पूजा पूजा तव चरणयोर्या विरचिता ।**
**तथा हि त्वत्पादोद्वहनमणिपीठस्य निकटे**
**स्थिता ह्येते शश्वन्मुकुलितकरोत्तंसमकुटाः ॥ २५ ॥**

**लक्ष्मीधरा—त्रयाणां देवानां** धातृहरिरुद्राणामित्यर्थः । **त्रिगुणजनितानां** सत्त्वरजस्तमः प्रभवानाम्, **तव** भवत्याः, **हे शिवे !** शिवमहिषि ! **भवेत्** भवत्येव । प्राप्तकाले लिङ् । **पूजा** सपर्या, **सैव पूजा** नान्येति, द्वितीयपूजाशब्दस्यार्थः । **तव चरणयोः या पूजा विरचिता**

निर्मिता। युक्तं चैतदित्याह—**तथाहीत्यादिना** । **तथाहि** युक्तमेतत् । **त्वत्पादोद्वहनमणिपीठस्य** तव पादयोः उद्वहनार्थं यन्मणिपीठं परिकल्पितं तस्य **निकटे** उपसिंहासनसमीपे, **स्थिताः** वर्तन्ते स्म । **हि** यस्मात्, **एते** धातृहरिरुद्राः अधिकारिपुरुषाः, **शश्वत्** अनवरतं, **मुकुलितकरोत्तंसमकुटाः** मुकुलिता येषां ते ।

**अत्रेत्थं पदयोजना**—हे शिवे! तव त्रिगुणजनितानां त्रयाणामपि देवानां तव चरणयोः या पूजा विरचिता भवेत् सैव पूजा । तथाहि त्वत्पादोद्वहनमणिपीठस्य निकटे हि यस्मात् मुकुलितकरोत्तंसमकुटाः शश्वदेते स्थिताः ॥

**अयं भावः**—भगवत्याः पादपीठसेवा पूजामात्रेण न लभ्यते, अपि तु भगवत्याः प्रसादवशादेवेति ॥ २५ ॥

## * सरला *

**त्रयाणामिति** । **त्रयाणां देवानां** ब्रह्मा, विष्णु और रुद्र इन तीनों की, **त्रिगुणजनितानां** सत्त्व, रज तथा तम रूप तीन गुणों से उत्पन्न, **तव** आप को, **शिवे** हे शिवमहिषि ! **भवेत्** होती हैं । प्राप्तकाल में लिङ्ग लकार प्रयुक्त है । **पूजा** सपर्या, **सैव पूजा** और नहीं—यह द्वितीय पूजा का अर्थ है । **तव चरणयोः या पूजा विरचिता** आपके चरण की जो पूजा निर्मित होती है—ऐसा होना ही चाहिए । 'तथा हि' इत्यादि से इस बात को कहते हैं । **तथा हि** यह ठीक भी है, **त्वत्पादोद्वहनमणिपीठस्य** आपके चरण के उद्वहन करने (= दबाते) के लिये जो परिकल्पित मणिपीठ है उसके, **निकटे** उपसिंहासन के समीप में, **स्थिताः** रहते हैं । **हि** जिस कारण से वे ब्रह्मा, विष्णु और रुद्र अधिकारि पुरुष, **शश्वत्** निरन्तर **मुकुलितकरोत्तंसमकुटाः** अञ्जलि से युक्त मुकुटों वाले हैं ।

**पदयोजना का अर्थ**—हे शिवे ! आपके त्रिगुणों से उत्पन्न तीन देवताओं के द्वारा सम्पादन की जाने वाली आपके चरणों की सेवा ही वस्तुतः सेवा हैं, क्योंकि ये तीनों आपके चरणों के मणिपीठ के निकट अपने अञ्जलि मुकुट लगाये हुये निरन्तर स्थित रहते हैं ।

इसका यह भाव है कि भगवती की पाद पीठ सेवा पूजा मात्र से नहीं प्राप्त होती, किन्तु भगवती की प्रसन्नता प्राप्त करने पर ही प्राप्त होती है ॥ २५ ॥

**ध्यान**—त्र = त् + र् । **श्लोकस्थ वर्ण बीज 'त' का ध्यान**—

चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम् ।
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम् ॥
नानाऽलङ्कारभूषां तां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा तकारं तु मन्त्ररूपं सदा यजेत् ॥
तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा ॥
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम् ॥

**र का ध्यान** इस प्रकार है—

ललज्जिह्वां महारौद्रीं रक्तास्यां रक्तलोचनाम् ।

रक्तमाल्याम्बरधरां रक्तालङ्कारभूषिताम् ॥
रक्तवर्णामष्टभुजां रक्तपुष्पोपशोभिताम् ।
महामोक्षप्रदां नित्यां अष्टसिद्धिप्रदायिकाम् ॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ।
रेफं च चञ्चलापाङ्गि कुण्डलीद्वयसंयुतम् ॥
रक्तविद्युल्लताकारं पञ्चदेवात्मकं सदा ।
त्रिशक्तिसहितं देवि आत्मादि तत्त्वसंयुतम् ॥
सर्वतेजोमयं वर्ण सततं मनसि चिन्तयेत् ।

**बीजाक्षर**—'त्र'; जपादि विधान उपर्युक्त समान ।
पूजन यन्त्र—त्रिशूलयुक्त त्रिकोण के मध्य में 'सौः' ।

**उच्चपदप्राप्तिकर यन्त्र**

**भावार्थ**—हे विश्वव्यापिनि ! आपके त्रिगुण से उत्पन्न हुये ब्रह्मा, हरि, रुद्रादि देवों की पूजा आपके श्री चरणों की ·  ाधना के साथ ही हो जाया करती है क्योंकि वे आपके चरणज गुणों से ही उत्पन्न हुये हैं । इसी कारण आप के चरण-विश्राम रूप मणिपीठ के समीप वे अपने मुकुट से मिले हुये हाथों को जोड़कर खड़े रहते हैं ॥ २५ ॥

**विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं**
**विनाशं कीनाशो भजति धनदो याति निधनम् ।**
**वितन्द्री माहेन्द्री विततिरपि सम्मीलितदृशा**
**महासंहारेऽस्मिन् विहरति सति त्वत्पतिरसौ ॥ २६ ॥**

**लक्ष्मीधरा**—**विरिञ्चिः** ब्रह्मा, **पञ्चत्वं** पञ्चभूतानां व्यष्टिरूपतां, मरणमिति यावत्, **व्रजति** याति । **हरिः** विष्णुः **आप्नोति** प्राप्नोति, **विरतिं** उपरतिं, मरणमिति यावत् । **विनाशं** मृतिं, **कीनाशः** यमः **भजति** । **धनदः** कुवेरः, **निधनं** मरणं, **याति** प्राप्नोति । **वितन्द्री** विशेषेण तन्द्री प्रमीला जाड्यं यस्यास्स, निद्राणेत्यर्थः, **मान्हेद्री** महेन्द्रस्येयं माहेन्द्री, चतुर्दशानां मनूनां इन्द्राणां **विततिरपि** सङ्घोऽपि, **सम्मीलितदृशा** सम्मीलिता दृशा दृष्टिर्यस्याः सा । 'हलन्तादपि टाब्रिष्यते' इति टाप् । यद्वा, सम्मीलित दृशा करणेन वितन्द्रीमाहेन्द्री । **महासंहारे** कल्पान्ते, **अस्मिन् विहरति** विशृङ्खलतया वर्तते । **हे सति !** पतिव्रते ! **त्वत्पतिः** सदाशिवः हरः, **असौ** सहस्रदलकमले परिदृश्यमानः ॥

**अत्रेत्थं पदयोजना**—विरिञ्चिः पञ्चत्वं व्रजति । हरिः विरतिं आप्नोति । कीनाशः विनाशं भजति । धनदः निधनं याति । माहेन्द्री विततिरपि सम्मीलितदृशा वितन्द्री । अस्मिन् महासंहारे सति! असौ त्वत्पतिः हरः विहरति ॥

**अयं भावः**—सर्वेषां अधिकारिपुरुषाणां च संहारे ब्रह्माण्डभङ्गसमये तव पत्युर्यत् विहरणं तत् तव पातिव्रत्यमहिमायत्तमिति ॥ २६ ॥

*** सरला ***

**विरिञ्चिरिति** । **विरिञ्चिः** ब्रह्मदेव, **पञ्चत्वं** पञ्चभूतों के व्यष्टिरूप में अर्थात् मृत्यु

को, **व्रजति** प्राप्त करते हैं, **हरिः** विष्णु, **आप्नोति** प्राप्त करते हैं, **विरतिं** उपरति अर्थात् मरण, **विनाशं** मरण, **कीनाशः** यमराज, **भजति**। **धनदः** कुबेर, **निधनं** मरणं, **याति** प्राप्त करते है। **वितन्द्री** विशेष रूप से निद्रा लेते हुये, **माहेन्द्री** महेन्द्र से सबन्ध रखने वाली माहेन्द्री, चतुर्दश मनुओं एवं इन्द्रों के, **विततिरपि** संघ भी **सम्मीलितदृशा** बन्द हो गई है दृष्टि जिनकी। यहाँ दृशा शब्द में 'हलन्तादपि टाबिष्यते' इस वार्तिक से टाप् हुआ है, अथवा सम्मीलिताकरण कारक है इसलिये वितन्द्री माहेन्द्री। **महासंहारे** कल्पान्त में, **अस्मिन् विहरति** बिना किसी रुकावट के वर्त्तमान रह कर बिहार करते हैं। **हे सति** पतिव्रते, **त्वत्पतिः** सदाशिव, हर, **असौ** सहस्त्रदल-कमल में दिखाई पड़ते हुये विहार करते हैं।

**पदयोजना का अर्थ**—जब ब्रह्मदेव पञ्चत्व प्राप्त कर लेते हैं, विष्णु भी मर जाते हैं, यमराज विनष्ट हो जाते हैं, कुबेर भी मर जाते हैं, इन्द्रादि तथा मनुगणों का चतुर्दश समुदाय भी जब अपने अपने नेत्रों को बन्द कर महानिद्रा में लीन हो जाते है, इस प्रकार के महासंहार में, हे पतिव्रते ! केवल आपके पति सदाशिव ही विहार करते हैं।

इसका तात्पर्य यह है कि जब समस्त अधिकारी पुरुषों का संहार हो जाता है और ब्रह्माण्ड का प्रलय हो जाता है उस समय जो केवल एकमात्र पति विहार करते हैं वह आपके पातिव्रत्य का फल है ॥ २६ ॥

**ध्यान—वि = व् + इ। श्लोकस्थ वर्णबीज 'वि' का ध्यान—**

व— कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम्।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम् ॥
साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम्।
एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत् ॥
वकारं चञ्चलापाङ्गि कुण्डलीमोक्षमव्ययम्।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा।
त्रिबिन्दुसहितं मन्त्रमात्मादितत्त्वसंयुतम् ॥
पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम्।
चतुर्वर्गप्रदं शान्तं सर्वसिद्धिप्रदायकम् ॥

इ— इकारं परमानन्दं सुगन्धं कुंकुमच्छविः।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये ॥
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम् ॥
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गता भवेत्।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत् ॥
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम्।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम् ॥
चतुर्भुजां च वरदां हरिचन्दनभूषिताम्।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत् ॥

**बीजाक्षर**—'वि'; जप—१०००; जप-स्थान—स्वाधिष्ठान; होम—करवीर पुष्प,

बिल्व, और पायस से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोकपाठ-संख्या—१०; श्लोकपाठ-आहुति—२ ।

**भावार्थ**—हे त्रिपुरसुन्दरि ! ब्रह्मा पञ्चत्व को प्राप्त होते हैं अर्थात् तत्वों में विलय हो जाते हैं । हरि का व्यक्तित्व समाप्त हो जाता है । यम का भी विनाश होता है, कुबेर का क्षय होता है, सदा जागृत् माहेन्द्री के नेत्र बन्द हो जाते हैं । महाप्रलयकाल के पश्चात् आपके पति महाशिव ही अकेले जागते रहते हैं ॥ २६ ॥

**जपो जल्पः शिल्पं सकलमपि मुद्राविरचना**
**गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।**
**प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा**
**सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥ २७ ॥**

**लक्ष्मीधरा—जपः** मन्त्रजपः, 'उपांशूच्चैर्वा क्रियते' इत्यादिभिश्चोदितः सः, **जल्पः** यादृच्छिकसल्लापः । **शिल्पं सकलमपि** हस्तविन्यासादिक्रियानिचयः, **मुद्राविरचना** मुद्राणां संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशखेचरीबीजयोनित्रिखण्डात्मकानां विरचना करणम् । **गतिः** यादृच्छिकगमनं, **प्रादक्षिण्यक्रमणं** प्रदक्षिणक्रिया । **अशनादि** ओदनादियत्किञ्चित्पदार्थ-चर्वणं, **आहुतिविधिः** आहुतीनां देवतोद्देशेन हविः प्रक्षेपणात्मकानां विधिः करणम् । **प्रणामः** नमस्कारः, **संवेशः** यादृच्छिकदण्डवल्लुंठनम्, जल्पशिल्पव्यतिरेकेण अङ्गभङ्गनयनोन्मीलन-निमीलनादिकं च **सुखं** सुखकरं वस्तु **अखिलं** समस्तं शब्दस्पर्शरूपरसगन्धादिकं, **आत्मा-र्पणदृशा** आत्मार्पणबुद्ध्या, **सपर्यापर्यायः** सपर्या पूजा, तस्याः पर्यायः रूपान्तरं, सपर्यैवे-त्यर्थः, **तव** ते, **भवतु** भूयात । **यत्** प्रसिद्धं, **मे** मम, **विलसितं** विलासः ।

**अत्रेत्थं पदयोजना**—हे भगवति ! आत्मार्पणदृशा जपः जल्पः, सकलमपि शिल्पं मुद्राविरचना, गतिः प्रादक्षिण्यक्रमणं, अशनादि आहुतिविधिः, संवेशः प्रणामः, अखिलं सुखं मे यद्विलसितं च तव सपर्यापर्यायः भवतु ।

**अयमर्थः**—जल्पादीनां जपादिरूपता यथार्हं कल्पिता । एवं नयनोन्मीलननिमीलन-निमेषोन्मेषाङ्गभङ्गजृम्भादीनां यथार्हं सपर्यापर्यायता ऊह्या । शब्दादेः सुखकरस्य वस्तुनः षोडशोपचारव्यतिरेकेण आत्मार्पणबुद्ध्या त्याग एव सपर्यापर्यायः, न तु स्वीकृतानाम् । यद्वा—शब्दादीनां यादृच्छिकसम्भवेन सुखप्रादुर्भावे तत्सुखं मच्छेषं न भवति किन्तु सदाशिवायेत्यर्पणं सपर्यापर्यायः ।

**अत्रेदमनुसन्धेयम्**—समयिनां मते समयस्य सादाख्यतत्त्वस्य सपर्या सहस्रदलकमल एव, न तु बाह्ये पीठादौ । ये ये समयिनो योगीश्वरा जीवन्मुक्ताः संसारयात्रामनुवर्तमानाः सादाख्यतत्त्वमनुचिन्तयन्तः आत्मैकप्रवणाः वर्तन्ते, तेषां 'जपो जल्पशिशल्पम्' इत्यादिना सपर्याप्रकारो निरूपितः । ये तु समयिनो योगीश्वराः विजने गुहान्तरे वा बद्धपद्मासनाः निगृहीतेन्द्रियाः सादाख्यतत्त्वध्यानैकनिष्ठाः वर्तन्ते । तेषां वक्ष्यमाणचतुर्विधषड्विधैक्यानु-

सन्धानमेव भगवत्याः सपर्येति अर्थादुक्तं भवति । अतश्च पक्षद्वयेऽपि बाह्यपूजायां तत्क्रियाकलापे च तत्सम्पादनायां च क्लेशो नास्ति समयिनामिति रहस्यम् । यत्तु चन्द्रज्ञानविद्यायामुक्तम्—

सूर्यमण्डलमध्यस्थां देवीं त्रिपुरसुन्दरीम् ।
पाशाङ्कुशधनुर्बाणान् धारयन्तीं प्रपूजयेत् ॥ इति ॥

बाह्यपूजाप्रकारकथनं, तत्तु समयैकदेशिमतमिति पुरस्तात्प्रपञ्चयते ॥ २७ ॥

*** सरला ***

**जप** इति । **जपः** मन्त्र का जप, जो उपांशु रूप में अथवा ऊँचे स्वर में किया जाता है । **जल्पः** स्वेच्छापूर्वक संल्लाप । **शिल्पं सकलमपि** = हस्तविन्यासादि क्रिया समुदाय । **मुद्राविरचना** संक्षोभद्रावणाकर्षण वश्योन्मादमहाङ्कुशखेचरी बीजयोनि आदि मुद्राएँ जो त्रिखण्डात्मक हैं उनका झरना, **गतिः** इच्छानुसार गमन, **प्रादक्षिण्यक्रमणं** प्रदक्षिण क्रिया, **अंशनादि** भात आदि जिस किसी पदार्थ का भोजन, **आहुतिविधिः** देवता के उद्देश्य से वैध आधार में हवि के प्रक्षेपीकरण की प्रक्रिया, **प्रणामः** नमस्कार, **संवेशः** इच्छानुसार डण्डे के समान यत्र तत्र लोट जाना, जल्प शिल्प से व्यतिरिक्त अङ्गों का टेढ़ा मेढ़ा करना और नेत्रों का खोलना एवं बन्द करना, **सुखं** जो जो सुखकारक वस्तु, **अखिलं** समस्त शब्द स्पर्शरूप रसगन्धादि, **आत्मार्पणदृशा** आत्मार्पण बुद्धि से, **सपर्या पर्यायः** पूजा का पर्याय या पूजा का रूपान्तर ये सभी सपर्या (= पूजा) ही हैं, **तव** आपकी, **भवतु** होवे, **यत्** प्रसिद्ध, **मे विलसितम्** मेरा विलास आपकी सपर्या होए ।

**पदयोजना का अर्थ**—हे भगवति ! आत्मार्पण दृष्टि से मेरे द्वारा किया जाने वाला जल्प जप है । हाथ आदि से की जाने वाली हस्तविन्यासादि क्रियाएँ मुद्रा की रचनाएँ हैं । स्वेच्छा से चलना फिरना प्रदक्षिणा है । भोजनादि व्यापार वैध आधार में आहुति का प्रक्षेप है । इच्छानुसार लोटना प्रणाम है । इस प्रकार मेरा समस्त सुख और मेरा सम्पूर्ण विलास आपकी सपर्या का पर्याय बने ।

इसका अर्थ यह है—जिस प्रकार जल्पादिकों की जपादि रूप में कल्पना उचित रूप से कही गई है उसी प्रकार नेत्रों का खोलना, बन्द करना, निमेष-उन्मेष, अङ्ग भङ्ग जँभाई आदि भी सपर्या का पर्याय समझना चाहिए । सुख पहुँचाने वाले शब्दादि विषय यद्यपि षोडशोपचार पूजन से भिन्न हैं तथापि आत्मार्पण बुद्धि से उनका त्याग भी 'सपर्या' का पर्याय समझना चाहिए । अपने लिये स्वीकार की गई वस्तुओं को पूजा का पर्याय नहीं समझें । अथवा शब्दादि विषयों के यादृच्छिक सम्भव होने से सुखदायक होते हुये भी वे मेरे लिये न हो । किन्तु सदाशिव के अर्पण की बुद्धि से हों । यही सपर्या का पर्यायार्थ है ।

यहाँ यह भी विचार कर लेना चाहिए कि समयसम्प्रदाय के मतानुसार 'समय' नाम से कहे जाने वाले सादाख्य तत्त्व की सपर्या सहस्रदल कमल में ही होती है, बाह्य पीठादि में नहीं । जो जो समय सम्प्रदाय का अनुसरण करने वाले योगीजन जीवन्मुक्त होते हुये भी संसार यात्रा का अनुवर्त्तन करते हैं तथा सादाख्य तत्त्व का चिन्तन करते हुये आत्मानुसन्धान में संलग्न हैं उनकी रीति से हमने यहाँ 'जपो जल्पः' इस श्लोक से सपर्या का प्रकार निरूपित किया है । किन्तु जो समयमत के अनुसरण करने वाले योगीश्वर सर्वथा

एकान्त में अथवा गुफाओं के भीतर पद्मासन से बैठकर इन्द्रियां को अपने वश में रखकर मात्र सादाख्य तत्त्व में अपनी निष्ठा रखते हैं उनकी भी सपर्या आगे कही जाने वाली चतुर्विध एवं षड्विधों के ऐक्यानुसन्धान को भी भगवती की सपर्या का पर्याय अर्थ में समझ लेना चाहिए। इसलिये ये दोनों पक्षों में बाह्यपूजा में अथवा बाह्य पूजा के लिये किये गये क्रिया कलापों के सम्पादन में कोई क्लेश नहीं हैं यही समय मत का रहस्य है। किन्तु जो चन्द्रज्ञान विद्या में ऐसा कहा गया है कि सूर्य मण्डल के मध्य में पाश, अंकुश, धनुष एवं बाण धारण करने वाली भगवती त्रिपुरा का पूजन करना चाहिए वह तो बाह्य पूजा का प्रकार है और यह समयिमत का एकदेशीय मत है, सर्वसम्मत नहीं है। इस विषय को आगे विस्तारपूर्वक उपपादन करेंगे ॥ २७ ॥

**ध्यान—'ज'—श्लोकस्थ वर्णबीज 'ज' का ध्यान—**

ज— नानालङ्कारसंयुक्तैर्भुजैर्द्वादशभिर्युतम् ।
रक्तचन्दनदिव्याङ्गीं चित्राम्बरविधारिणीम् ॥
त्रिलोचनां जगद्धात्रीं वरदां भक्तवत्सलाम् ।
एवं ध्यात्वा 'ज' कारं तु तन्मन्त्रं दशधा जपेत् ॥
जकारं परमेशानि या स्वयं मध्यकुण्डली ।
शरच्चन्द्रप्रतीकाशं दिव्यत्रिमुण्डसंयुतम् ॥
पञ्चदेवमयं वर्णं पञ्चप्राणमयं प्रिये ।
त्रिशक्तिसहितं वर्णं द्विबिन्दुसहितं यजेत् ॥

**बीजाक्षर**—'ज'; जपादि विधान उपर्युक्त समान; पूजन-यन्त्र—त्रिशूल युक्त त्रिकोण के मध्य में 'ह्रीं' लिखे।

**आत्मज्ञानप्रदायक यन्त्र**

**भावार्थ**—हे भगवति ! इस देह से मनादि इन्द्रियों से जो कुछ भी बाह्यान्तर साधन किया हो, वह आप अपनी आराधना-रूप में मान लें और स्वीकार करें। मेरा बोलना आपके लिए मन्त्रजप हो जाय; शिल्पादि बाह्य क्रिया मुद्रा-प्रदर्शन हो जाय; देह की गति (= चलना) आपकी प्रदक्षिणा हो जाय; भोजनादि हवन कर्म हो जाय, देह का सोना (शयन) अष्टाङ्ग नमस्कार हो तथा दूसरे शारीरिक सुख या दुःख भोग भी सर्वार्पण-भाव में आप स्वीकार करें।

इस प्रकार यह अन्तराराधना-विधान है। इसमें सर्वार्पणभाव है ॥ २७ ॥

'विरिञ्चिः पञ्चत्वम्' इति श्लोकेन यदुक्तं तदेव सोपस्करमाह—

**सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरिणीं**
**विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः ।**
**करालं यत्क्ष्वेलं कबलितवतः कालकलना**
**न शम्भोस्तन्मूलं तव जननि ताटङ्कमहिमा ॥ २८ ॥**

**लक्ष्मीधरा—सुधाम्** अमृतम्, **अपिः** विरोधे, **आस्वाद्य** पीत्वा, **प्रतिभयजरामृत्युहरिणीं** प्रतिभयौ भयङ्करौ जरामृत्यू जरामरणे हरतीति प्रतिभयजरामृत्युहरिणी ताम् । **विपद्यन्ते** म्रियन्ते, **विश्वे** अखिलाः **विधिशतमखाद्याः** विधिः ब्रह्मा, शतमखो देवेन्द्रः, तौ आद्यौ प्रभृतिभूतौ येषां ते, **दिविषदः** सुरा, **करालं** अत्युग्रं, **यत् क्ष्वेलं** विषं कालकूटं **कबलितवतः** भक्षितवतः, **कालकलना** कालेन अवसानकालेना कलना अवच्छेदः, मरणमिति यावत्, **न शम्भोः तन्मूलं** तस्य कालकलनाभावस्य मूलं कारणं **तव** भवत्याः, **जननि !** हे मातः ! **ताटङ्कमहिमा** ताटङ्कस्य कर्णाभरणस्य सामर्थ्यम् ।

**अत्रेत्थं पदयोजना**—हे जननि! विश्वे विधिशतमखाद्याः दिविषदः प्रतिभयजरामृत्युहरिणीं सुधां आस्वाद्यापि विपद्यन्ते । करालं क्ष्वेलं कबलितवतः शम्भोः कालकलना नास्तीति यत् तन्मूलं तव ताटङ्कमहिमा ।

**अयं भावः**—यदि शम्भोरपि विपत्तिस्स्यात् ताटङ्कच्युतिः तर्हि स्यात् । ताटङ्कच्यावकत्वं कालस्य नास्ति, कालोत्पत्तिस्थितिलयानां ताटङ्कैकनियतत्वादिति देव्याः पातिव्रत्यमहिमा सर्वातिशार्यी इति ॥ २८ ॥

## * सरला *

**विरिञ्चिः पञ्चत्वम्** (५ श्लो० २६) में इस श्लोक में जो कहा गया है उसी को अब सकारण उपपादन करते हैं ।

**सुधामिति** । **सुधां** अमृत को, **अपिः** विरोध अर्थ में प्रयुक्त है । **आस्वाद्य** पीकर, **प्रतिभयजरामृत्युहरिणीं** अत्यन्त भयंकर जरा और मृत्यु को हरण करने वाली, **विपद्यन्ते** मर जाते हैं, **विश्वे** सभी, **विधिशतमखाद्याः** ब्रह्मा एवं इन्द्रादि आद्यदेव, **दिविषदः** देवगण, **करालं** अत्यन्त उग्र, **यत् क्ष्वेलं** जो कालकूट नामक विष, **कबलितवतः** भक्षण करने वाले, **कालकलना** काल के द्वारा होने वाली मृत्यु, **न शम्भोः तन्मूलं** उस काल के द्वारा मृत्यु न होने का कारण, **तव** आप, **जननि** हे मातः, **ताटङ्कमहिमा** कर्णाभरण की सामर्थ्य ।

**पदयोजना का अर्थ**—हे जननि ! समस्त ब्रह्मा एवं इन्द्रादि देवगण अत्यन्त भयंकर जरा एवं मृत्यु का अपहरण करने वाली सुधारस का आस्वादन करने पर भी मृत्यु को प्राप्त हो जाते हैं । किन्तु अत्यन्त उग्र कालकूट नामक विष को पी लेने पर भी सदाशिव की मृत्यु नहीं होती इसमें आपका कर्णाभरण ही कारण है ।

इसका भाव यह है यदि सदाशिव पर विपत्ति आवे तो आपके कर्णाभरण भी कान से गिर जावे । किन्तु काल में इतनी शक्ति नहीं है वह आपके कर्णों के ताटङ्क को गिरा देवे, क्योंकि काल की उत्पत्ति, स्थिति और संहार भी आपके ताटङ्क में ही निवास करते हैं । अतः देवी के पातिव्रत्य की महिमा सबसे बढ़कर है ॥ २८ ॥

**ध्यान—सु = स् + उ । श्लोकस्थ वर्णबीज 'सु' का ध्यान—**

**स्—** करीषभूषिताङ्गीं च साट्टहासां दिगम्बराम् ।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम् ॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम् ।
सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम् ॥

एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत् ।
सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम् ।
कोटिविद्युल्लताकारं कुण्डलीमयसंयुतम् ॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा ।
रजस्सत्वतमोयुक्तं त्रिबिन्दुसहितं सदा ॥

उ— पीतवर्णां त्रिनयनां पीताम्बरधरां पराम् ॥
द्विभुजां जटिलां भीमां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
उकारं परमेशानि अधःकुण्डलिनी स्वयम् ।
पीतचम्पकसङ्काशं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम् ॥

**अपमृत्युनिवारक यन्त्र**

ठं
ठं
ठं

**बीजाक्षर**—'सु'; जप—१०००; जप-स्थान—स्वाधिष्ठान; होम—करवीर पुष्प; बिल्व और पाय से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—२ ।

**भावार्थ**—हे विश्वजननि ! भय-जरा एवं मृत्यु को हरण करने वाले अमृत को पीकर भी ब्रह्मा-इन्द्रादि अपर वर्ग के देवता भी विलय को प्राप्त होते हैं । किन्तु महाकालकूट विष पीकर भी श्री महाप्रभु श्री सदाशिव कालपर हैं । हे अमृतमयि ! यह आप श्री के कर्णाभरण ताटङ्क की अमोघ महिमा है अर्थात् कर्ण-समीप कपोल-चुम्बन-प्रकार से श्री महाशिव-देहगत सम्पूर्ण महाविष-विकार उपशमित हो जाता है तथा वे महाकाल का भी पराभव करने में समर्थ होते हैं ।

कहीं-कहीं कर्णताटङ्क सौभाग्यचिन्ह माना गया है । अतः अर्थ हो सकता है कि आपके अखण्ड सौभाग्यचिन्ह ताटङ्क की अमोघ शक्ति से श्रीशिव मृत्युञ्जय हुए हैं ॥ २८ ॥

**किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः**
**कठोरे कोटीरे स्खलसि जहि जम्भारिमकुटम् ।**
**प्रणम्रेष्वेतेषु प्रसभमुपयातस्य भवनं**
**भवस्याभ्युत्थाने तव परिजनोक्तिर्विजयते ॥ २९ ॥**

**लक्ष्मीधरा**—**किरीटं** मकुटं, **वैरिञ्चं** विरिञ्चिसम्बन्धि, **परिहर** दूरत एव कुरु, **पुरः** अग्रभागे । **कैटभभिदः** कैटभासुरं भिनत्तीति कैटभभित् तस्य विष्णोः, **कठोरे कोटीरे** मकुटाञ्चले, **स्खलसि** । अत्र काकुः अनुसन्धेया । **जहि** त्यज, **जम्भारिमकुटं** जम्भारेः इन्द्रस्य मकुटं किरीटम् । **प्रणम्रेषु** प्रकर्षेण दण्डवत् नतेषु **एतेषु** विरिञ्चिकैटभजिज्जम्भारिषु, **प्रसभं** अतिशीघ्रं ससम्भ्रममित्यर्थः । **उपयातस्य** समागतस्य, **भवनं** मन्दिरं, **भवस्य** परमेश्वरस्य, **अभ्युत्थाने** अभिमुखोत्थितौ, **तव परिजनोक्तिः** सेवकानां वचनं, **विजयते** सर्वोत्कर्षेण वर्तते ।

**अत्रेत्थं पदयोजना**—हे भगवति ! पुरः वैरिञ्चं किरीटं परिहर, कैटभभिदः कठोरे कोटीरे स्खलसि, जम्भारिमकुटं जहि, (इत्येवंरूपा) एतेषु प्रणम्रेषु सत्सु भवनमुपयातस्य भवस्य प्रसभं तवाभ्युत्थाने परिजनोक्तिर्विजयते । तत्र उदात्तालङ्कारः 'समृद्धिमद्वस्तुवर्णनमुदात्तम्' इति लक्षणात् ॥ २९ ॥

## * सरला *

**किरीटमिति** । **किरीटं** मुकुट को, **वैरिञ्चं** ब्रह्मदेव सम्बन्धी, **परिहर** दूर कीजिए, **पुरः** आगे रहने वाले, **कैटभभिदः** कैटभासुर का विनाश करने वाले विष्णु के, **कठोरे कोटीरे** मुकुटाञ्चल पर, **स्खलसि** फिसल जाओगी । यहाँ काकु है (= निषेधात्मक शब्द जो इस ढंग से प्रयुक्त किया जाय कि विरुद्ध = स्वीकारात्मक, अर्थ को प्रकट करे—काकु कहलाता है) यह अनुसन्धान का विषय है । **जहि** छोड़ दो, **जम्भारिमकुटं** इन्द्र का किरीट, **प्रणम्रेषु** जो प्रकर्ष रूप से दण्ड के समान विनम्र हैं, **एतेषु** इन ब्रह्मा, विष्णु एवं इन्द्र को, **प्रसभं** अति शीघ्र अर्थात् संभ्रम, **उपयातस्य** समागत, **भवनं** मन्दिर, **भवस्य** परमेश्वर के, **अभ्युत्थाने** अभिमुख उठकर स्वागतार्थ, **तव परिजनोक्तिः** आपके सेवकों के वचन, **विजयते** सर्वोत्कृष्टतया वर्तमान रहें ।

**पदयोजना का अर्थ**—हे भगवति ! अपने आगे पड़े हुये ब्रह्मा के किरीट से कहीं ठोकर न लगे अतः बचा कर चले, विष्णु के कठोर मुकुट पर फिसल जाओगी, इसलिये उसे भी हटा दीजिए, विशेष नम्रता के लिये नीचे दण्डे के समान प्रणत इन्द्र के मुकुट को भी हटा दीजिए, इस प्रकार इन लोगों के प्रणाम करते रहने पर भी घर में आ रहे भगवान् परमेश्वर के अभ्युत्थान के लिये कही गई आपके परिचारिकाओं की उक्ति सर्वदा सर्वोत्कृष्टरूपेण बनी रहे ॥ २९ ॥

**ध्यान**— 'कि' = क् + इ । **श्लोकस्थ वर्णबीज 'कि' का ध्यान**—

**क्**— जपापावकसिन्दूरसदृशीं कामिनीं पराम् ।
चतुर्भुजां त्रिनेत्रां च बाहुवल्लीविराजिताम् ॥
कदम्बकोरकाकारः स्तनयुग्मविराजिताम् ।
रत्नकङ्कणकेयूरहारनूपुरभूषिताम् ॥
एवं ककारं ध्यात्वा तु तन्मन्त्रं दशधा जपेत् ।
शङ्खकुन्दसमा कीर्तिर्मात्रा साक्षात्सरस्वती ॥
कुण्डली चांकुशाकारा कोटिविद्युल्लताऽऽकृतिः ।
कोटिचन्द्रप्रतीकाशो मध्ये शून्यः सदाशिवः ॥
शून्यगर्भस्थिता काली कैवल्यपददायिनी ।
अर्थश्च जायते देवि तथा धर्मश्च नान्यथा ॥
आसनं त्रिपुरा देव्याः ककारः पञ्चदैवतः ।
ईश्वरो यस्तु देवेशि त्रिकोणं तत्त्वसंस्थितः ॥
त्रिकोणमेतत्कथितं योनिमण्डलमुत्तमम् ॥
कैवल्यं प्रपदे यस्याः कामिनी सा प्रकीर्तिता ।
एषा सा कादिविद्या वा चतुर्वर्गफलप्रदा ।

इ— इकारं परमानन्दं सुगन्धं कुंकुमच्छविः।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये॥
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम्॥
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गता भवेत्।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत्॥
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम्।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम्॥
चतुर्भुजां च वरदां हरिचन्दनभूषिताम्।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत्॥

**बीजाक्षर**—'कि'; जपादि विधान उपर्युक्त समान;
पूजन-यन्त्र—त्रिकोण युक्त षट्कोण में 'क्लीं' लिखे।

**सर्ववश्यकर यन्त्र**

क्लीं

**भावार्थ**—हे भवानि! आपके दरबार में, जहाँ विरञ्चि (ब्रह्मा), कैटभारि (विष्णु), इन्द्रादि आपको साष्टाङ्ग प्रणाम कर रहे हैं तथा आपकी सेविकायें आपके चारों ओर खड़ी हैं, वहाँ श्री-दर्शनातुर श्री भगवान् शिव का आगमन सुनकर आपको सहसा उनके स्वागतार्थ उठते हुये देखकर 'भगवति, सम्हाल कर' श्री ब्रह्मदेव, इन्द्र तथा श्री विष्णु के मुकुट श्री चरणों में पड़े हैं, कुचल न जायँ, आपको कहीं ठोकर न लगे'—इस प्रकार ललित विरुदावलि के शब्द श्री सेविकाओं के मुख से निकलते हुये विजय को प्राप्त करें।

**विमर्श**—इस श्लोक में भगवान् शङ्कर से मिलने के लिए भगवती की आतुरता का वर्णन है॥ २९॥

**स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितः**
**निषेव्ये नित्ये त्वामहमिति सदा भावयति यः।**
**किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतः**
**महासंवर्ताग्निर्विरचयति नीराजनविधिम्॥ ३०॥**

**लक्ष्मीधरा—स्वदेहोद्भूताभिः** स्वस्याः देहः स्वदेहः तस्मादुद्भूताभिः, अत्र देहशब्दो देहावयवं चरणं लक्षयति। **घृणिभिः** मयूखैः, मयूखानां चरणोद्भवत्वमुक्तं प्राक्। **अणिमाद्याभिः** अणिमागरिमेत्यादिभिः अष्टसिद्धिभिः, **अभितः** आवरणत्वेन अवस्थिताभिः युक्तामिति शेषः। **निषेव्ये!** संसेव्ये! **नित्ये!** आद्यन्तरहिते! त्वामेतादृशीम्, **अहमिति** अहंभावनया, **सदा** सर्वकालं, **भावयति** ध्यानं करोति, **यः** साधकः, **किमाश्चर्यं** नास्त्याश्चर्यं, **तस्य** साधकस्य **त्रिनयनसमृद्धिं** त्रीणि नयनानि मार्गाः प्रापकाः सूर्यचन्द्राग्निरूपाः यस्य दर्शनायेति स त्रिनयनः। यद्वा—इडापिङ्गलासुषुम्नामार्गाः त्रयः तद्दर्शने उपाया इति त्रिनयनः सदाशिवः। यद्वा—त्रीणि नयनानि चक्षूंषि यस्य सः त्रिनयनः। क्षुभ्नादित्वात् णत्वाभावः। तस्य समृद्धिं ऐश्वर्यं **तृणयतः** तृणीकुर्वतः, **महासंवर्ताग्निः** प्रलयकालाग्निः **विरचयति**

करोति । **नीराजनविधिं** नीराजनानुष्ठानम् । तस्य नीराजनक्रियायामवस्थित: प्रलयाग्नि-रपीत्यर्थ: ।

**अत्रेत्थं पदयोजना**—हे नित्ये ! निषेव्ये ! स्वदेहोद्भूताभि: घृणिभि: अणिमाद्याभि: अभितोऽवस्थिताभि: परिवृतां त्वां य: साधक: अहमिति सदा भावयति, त्रिनयनसमृद्धिं तृणयत: तस्य महासंवर्ताग्नि: नीराजनविधिं विरचयतीत्यत्र किमाश्चर्यम् !

**अयं भाव:**—अहमिति भावनया तादात्म्यसिद्धौ भगवत्या: तन्नीराजनविधिराश्चर्यकरो न भवतीति ॥ ३० ॥

## * सरला *

**स्वदेहोद्भूताभि:** अपने शरीरावयवभूत चरणों से उत्पन्न हुये, **घृणिभि:** मयूखों से, मयूख भगवती के चरण से उत्पन्न हैं, यह बात पहले कही जा चुकी है । **अणिमाद्याभि:** अणिमा गरिमा इत्यादि नामों वाली अष्टसिद्धियों से जो, **अभित:** चारों ओर आवरण रूप से संयुक्त हो उसे घेरे हुये हैं, **निषेव्ये** संसेव्य, **नित्ये** आद्यन्तरहित, **त्वाम्** इस प्रकार की **अहमिति** अहं भावना से, **सदा** समस्तकाल में, **भावयति** ध्यान करता है, **य:** जो साधक, **किमाश्चर्यं** इसमें आश्चर्य नहीं है, **तस्य** उस साधक के, **त्रिनयनसमृद्धिं** सूर्य-चन्द्राग्निरूप मार्ग जिसके दर्शन के मार्ग हैं, अथवा ईडा, पिङ्गला एवं सुषुम्ना ये तीन जिसके दर्शन में उपाय हैं, अथवा तीन नेत्र हैं जिसके वह त्रिनयन सदाशिव । शुभ्रादिगण में पठित होने के कारण 'णत्व' नहीं हुआ है । **तस्य समृद्धिं** उसकी समृद्धि को, **तृणयत:** तृण के समान समझने वाले उस साधक की, **महासंवर्त्ताग्नि** प्रलयकालीन अग्नि, **विरचयति** करता है, **नीराजनविधिं** आरती की क्रिया अर्थात् 'उसकी आरती करने के लिये प्रलयाग्नि भी तैयार रहती है' यह अर्थ हुआ ।

**पदयोजना का अर्थ**—हे नित्ये ! आपके शरीरावयवभूत चरणों से उत्पन्न रश्मियां एवं अणिमादि अष्टसिद्धियों से घिरी हुई आपका जो साधक 'अहं' इस अभेद भावना से ध्यान करता है, सूर्य चन्द्राग्नि रूप समृद्धि वाले अथवा ईडा, पिङ्गला, सुषुम्ना के उपायों से प्राप्त होने वाले, सदाशिव की समृद्धि को भी तुच्छ समझने वाले उस साधक की आरती, प्रलयकालीन संवर्त्त नामक अग्नि भी करे तो इसमें कौन सी आश्चर्य की बात है?

यहाँ यह भाव है कि 'अहं' इस भावना से साधक का जब तादात्म्य सिद्ध हो जाता है तो प्रलयाग्नि भी उसकी आरती उतारती है इसमें आश्चर्य की क्या बात है?॥ ३० ॥

**ध्यान**—'स्व' = स् + व । **श्लोकस्थ वर्णबीज 'स्व' का ध्यान**—

स्— करीषभूषिताङ्गीं च साट्टहासां दिगम्बराम् ।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम् ॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम् ।
सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम् ॥
एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत् ।
सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम् ।
कोटिविद्युल्लताकारं कुण्डलीमयसंयुतम् ॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा ।

रजस्सत्वतमोयुक्तं त्रिबिन्दुसहितं सदा ॥

**'व' बीज का ध्यान इस प्रकार है—**

कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम् ।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम् ॥
साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम् ।
एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत् ॥
वकारं चञ्चलापाङ्गि कुण्डलीमोक्षमव्ययम् ।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ।
त्रिबिन्दुसहितं मन्त्रमात्मादितत्त्वसंयुतम् ॥
पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम् ।
चतुर्वर्गप्रदं शान्तं सर्वसिद्धिप्रदायकम् ॥

**बीजाक्षर**—'स्व'; जपादि विधान उपर्युक्त समान;
पूजन-यन्त्र—दो अर्धवृत्त में 'ॐ' लिखे ।

**अष्टसिद्धिदायक यन्त्र**

**भावार्थ**—आपके स्वदेहजनित दिव्य तेज-किरणों तथा आणिमादि अष्ट सिद्धियों द्वारा आवेष्टित जो महासाधक आपके चरणों में अपने अस्तित्व को मिला देने की भावना से आपका सदैव चिन्तन करता है तथा ईश्वर-पद को भी तृणवत् मानता है, क्या आश्चर्य कि उसके सम्मुख प्रलयाग्नि नीराजन-दीपवत् न हो जाय?

१. श्री महाशक्त्यावरण भूपुर में निम्न शक्तियों की पूजा होती है—

**अष्टसिद्धियाँ**—१. अणिमा, २. महिमा, ३. लघिमा, ४. गरिमा, ५. प्राप्ति, ६. प्राकाम्य, ७. ईशित्व, ८. वशित्व ।

**अष्टमातर**—१. ब्रह्माणी, २. माहेश्वरी, ३. कौमारी, ४. वैष्णवी, ५. वाराही, ६. इन्द्राक्षी (माहेन्द्री), ७. चामुण्डा, ८. महालक्ष्मी ।

**दशमुद्रा**—१. सर्वक्षोभिणी, २. सर्वद्राविणी, ३. सर्वाकर्षिणी, ४. सर्ववशङ्करी, ५. सर्वोन्मादिनी, ६. सर्वमहांकुशा, ७. सर्वखेचरी, ८. सर्वबीजा, ९. सर्वयोनि, १०. सर्वत्रिखण्डा ।

**२. षोडशदल में**—१. कामाकर्षिणी, २. बुद्ध्याकर्षिणी, ३. अहङ्काराकर्षिणी, ४. शब्दाकर्षिणी, ५. स्पर्शाकर्षिणी, ६. रूपाकर्षिणी, ७. रसाकर्षिणी, ८. गन्धाकर्षिणी, ९. चित्ताकर्षिणी, १०. धैर्याकर्षिणी, ११. स्मृत्याकर्षिणी, १२. नामाकर्षिणी, १३. बीजाकर्षिणी, १४. आत्माकर्षिणी, १५. अमृताकर्षिणी, १६. शरीराकर्षिणी ।

**३. अष्टदल में**—१. अनङ्गकुसुमा, २. अनङ्गमेखला, ३. अनङ्गमदना, ४. अनङ्गमदनातुरा, ५. अनङ्गरेखा, ६. अनङ्गवेगिनी, ७. अनङ्गकुशा, ८. अनङ्गमालिनी ।

**४. चतुर्दशार में**—१. सर्वसंक्षोभिणी, २. सर्वविद्राविणी, ३. सर्वाकर्षिणी, ४. सर्वाह्लादिनी, ५. सर्वसम्मोहिनी, ६. सर्वस्तम्भिनी, ७. सर्वजृम्भिणी, ८. सर्ववशङ्करी, ९.

सर्वरञ्जिनी, १०. सर्वोन्मादिनी, ११. सर्वार्थसाधिनी, १२. सर्वसम्पत्तिपूरिणी, १३. सर्वमन्त्रमयी, १४. सर्वद्वन्द्वक्षयङ्करी ।

५. **बहिर्दशार में**—१. सर्वसिद्धिप्रदा, २. सर्वसम्पत्प्रदा, ३. सर्वप्रियङ्करी, ४. सर्वमङ्गलकारिणी, ५. सर्वकामप्रदा, ६. सर्वसौभाग्यदा, ७. सर्वमृत्युप्रशमिनी, ८. सर्वविघ्ननिवारिणी, ९. सर्वाङ्गसुन्दरी, १०. सर्वदुःखविमोचिनी ।

६. **अन्तर्दशार में**—सर्वज्ञा, २. सर्वशक्तिप्रदा, ३. सर्वैश्वर्यप्रदा, ४. सर्वज्ञानमयी, ५. सर्वविद्याविकासिनी (सर्वविद्याविशारदा), ६. सर्वाधारस्वरूपा, ७. सर्वपापहरा, ८. सर्वानन्दमयी, ९. सर्वरक्षास्वरूपिणी, १०. सर्वेप्सितफलप्रदा ।

७. **अष्टार में**—१. वशिनी, २. कामेशी, ३. मोदिनी, ४. विमला, ५. अरुणा, ६. जयिनी, ७. सर्वेशी, ८. कौलिनी ।

८. **त्रिकोण में**—१. कामेश्वरी, २. वज्रेशी, ३. भगमाला ।

९. **बिन्दु में**—श्री त्रिपुरसुन्दरी ।

किसी-किसी आचार्य ने कहीं-कहीं श्री पूजन दशावरण माना है । वे श्री चरण का व्यापक भाव त्रिवृत्त में ग्रहण करते हैं ॥ ३० ॥

**चतुष्षष्ट्या तन्त्रैः सकलमतिसन्धाय भुवनं**
**स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः ।**
**पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना-**
**स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥ ३१ ॥**

**लक्ष्मीधरा—चतुष्षष्ट्या** चतुष्षष्टिसङ्ख्याकैः महामायाशम्बरादिभिः, **तन्त्रैः** सिद्धान्तैः। अत्र चतुष्षष्टिशब्दस्य सङ्ख्येयपरत्वात् एकवचनान्तत्वम् । **सकलं** समस्तं, **अतिसन्धाय** अपवाह्य वञ्चयित्वा, **भुवनं** प्रपञ्चं, **स्थितः** निवृत्तव्यापारः; **तत्तत्सिद्धिप्रसवपरतन्त्रैः** ताश्च ताश्च सिद्धयः तत्तत्सिद्धयः चतुष्षष्टितन्त्रेषु एकस्मिन् एकस्मिन् तन्त्रे प्रयोजनभूताः एकैकसिद्धय इत्यर्थः, तासां प्रसवः उत्पत्तिः, तत्र परतन्त्रैः । यद्वा—तेषां तेषां सिद्धयः तत्तत्सिद्धयः, येषां येषां साधकानां स्वस्वाभिमताः सिद्धयः तासां प्रसवपरतन्त्रैः उत्पादकैकनियतैः । **पशुपतिः** पशूनां प्राणिनां पतिः, पश्यन्तीति पशवः यद्वा—इन्द्रियाण्येव पश्यन्तीति व्युत्पत्त्या पशवः, तान् पशून् पाति रक्षतीति पशुपतिः जीवः, शिव एव जीव इति पशुपतिः शिवः, **पुनः** भूयः **त्वन्निर्बन्धात्** त्वया निर्बन्धः तस्मात् । चतुष्षष्टितन्त्रप्रतिपादित—सर्वसिद्धान्तरूपसकलपुरुषार्थसाधनभूततन्त्रान्तरोपदेशस्वीकारव्यग्रया देव्या भवत्या कृतो निर्बन्ध इति यावत् । यद्वा—त्वदिति भिन्नं पदं पञ्चम्यन्तम् । **अखिलपुरुषार्थैकघटनास्वतन्त्रं** अखिलानां पुरुषार्थानां मुख्यत्वेन घटनायां स्वतन्त्रं स्वयमेव प्रधानं, ते भवत्याः, **तन्त्रं, क्षितितलं** भूतलं **अवातीतरत्** । तरतेर्णौ चङि रूपम् । गत्यर्थत्वात् 'गतिबुद्धि' इत्यादिसूत्रेण द्विकर्मकत्वम् । इदं वक्ष्यमाणम् ॥

**अत्रेत्थं पदयोजना**—हे भगवति! पशुपतिः सकलं भुवनं तत्तत्सिद्धिप्रसवपरतन्त्रैः चतुष्षष्ट्या तन्त्रैः अतिसन्धाय स्थितः । पुनस्त्वन्निर्बन्धात् अखिलपुरुषार्थैकघटनास्वतन्त्रं ते तन्त्रमिदं क्षितितलमवातीतरत् ॥

चतुष्षष्टितन्त्राणि चतुश्शत्याम् (वामकेश्वरतन्त्रे)—

चतुष्षष्टिश्च तन्त्राणि मातृणामुत्तमानि च ।
महामायाशम्बरं च योगिनीजालशम्बरम् ॥ १ ॥
तत्त्वशम्बरकं चैव भैरवाष्टकमेव च ।
बहुरूपाष्टकं चैव यामलाष्टकमेव च ॥ २ ॥
चन्द्रज्ञानं मालिनी च महासंमोहनं तथा ।
वामजुष्टं महादेवं वातुलं वातुलोत्तरम् ॥ ३ ॥
हृद्भेदं तन्त्रभेदं च गुह्यतन्त्रं च कामिकम् ।
कलावादं कलासारं तथान्यत् कुब्जिकामतम् ॥ ४ ॥
तन्त्रोत्तरं च वीणाख्यं त्रोतलं त्रोतलोत्तरम् ।
पञ्चामृतं रूपभेदं भूतोड्डामरमेव च ॥ ५ ॥
कुलसारं कुलोड्डीशं कुलचूडामणिं तथा ।
सर्वज्ञानोत्तरं देव महाकालीमतं तथा ॥ ६ ॥
अरुणेशं[1] मोदिनीशं विकुण्ठेश्वरमेव च ।
पूर्वपश्चिमदक्षं च उत्तरं च निरूत्तरम् ।
विमलं विमलोत्थं च देवीमतमतः परम् ॥ ७ ॥

इत्येवं चतुष्षष्टितन्त्राणि पार्वतीं प्रति कथितानि । एतानि तन्त्राणि जगतां अतिसन्धानकारणानि विनाशहेतुभूतानि, वैदिकमार्गदूरवर्तित्वात् । अत एवोक्तं भगवत्पादैः 'चतुष्षष्ट्या तन्त्रैः सकलमतिसन्धाय भुवनम्' सकल—विद्वल्लोकप्रतारकाणि इमानि चतुष्षष्टितन्त्राणि इति । तथाहि—

महामायाशम्बरतन्त्रं मायाप्रपञ्चनिर्माणफलम् । मायाप्रपञ्चनिर्माणं नाम सर्वेषां चक्षुरादीनां अन्यथापदार्थग्रहणकारणं, यथा घटस्य पटाकारेण प्रतिभासनम् ॥

योगिनीजालशम्बरम्—मायाप्रधानतन्त्रं शम्बरमित्युच्यते । तत्र तन्त्रे योगिनीनां जलदर्शनम् । तच्च श्मशानादिकुमार्गेण साध्यते ॥

तत्त्वशम्बरम्—तत्त्वानां पृथिव्यादीनां शम्बरं महेन्द्रजालविद्या । महेन्द्रजालविद्यायां पृथिवीतत्त्वे उदकतत्त्वादीनि उदकतत्त्वं पृथिव्यादीनि तत्त्वानि एवमन्योन्यं प्रतिभासन्ते ॥

भैरवाष्टकं नाम-सिद्धभैरव-वटुकभैरव-कङ्कालभैरव-कालभैरव-कालाग्निभैरव-योगिनी भैरव-महाभैरव-शक्तिभैरवप्रधानानि अष्टतन्त्राणि निध्याद्यैहिकफलसाधनान्यपि कापालिकमतत्वात् वैदिकमार्गदूराणि ॥

---

१. महालक्ष्मीमतं चैव सिद्धयोगेश्वरीमतम् ।
कुरूपिकामतं देवरूपिकामतमेव च ॥
सर्ववीरमतं चैव विमलामतमुत्तमम् ।
पूर्वपश्चिमदक्षं च उत्तरं च निरुत्तरम् ॥
तन्त्रं वैशेषिकं ज्ञानं वीरावलि तथा परम् ।
अरुणेशं मोहिनीशं विशुद्धेश्वरमेव च ॥ —इति वामकेश्वरतन्त्रपाठः ।

स्वर, कवर्ग, चवर्ग, टवर्ग, तवर्ग, पवर्ग, यवर्ग, शवर्ग और क्षवर्ग परस्पर भिन्न जाति से प्रतीयमान होते हैं। उसमें प्रमाण कहते हैं—**भूतलिप्याख्या** अर्थात् मिथ्या रूप से जानी जाने वाली, अतएव मिथ्या रूप इस लिपि की प्रसिद्धि दर्पण में प्रतिबिम्बित होने वाली वस्तु जैसे मुख्य बिम्ब समान भासित होती है उस प्रकार यह भी भिन्न होने पर भी एक जैसी भासित होती है। **आद्या कारणम् अन्या** अर्थात् आद्या सूक्ष्मरूपा मध्यमा स्थूलरूप नववर्गात्मिका मध्यमा का कारण है। ये कार्य कारण रूप है इस कारण यही सूक्ष्मरूप स्थूलरूप में परिवर्त्तित हो जाती है ऐसा कहना चाहिए। इन स्थूल और सूक्ष्मों के ऐक्य अर्थात् अभेद में 'विमर्श दशा' में कोई कारण नहीं है—इस तात्पर्य से कहते हैं **'यतस्ततो हेतोरिति'**। उसी बात को **'न हि भेद'** से कहते हैं। **हेतहेतुमदिति**। हेतुहेतुमत् अर्थात् कार्य कारण भाव का अभेद अभीष्ट है, इनके सर्वत्र अभेद से होने में हेतुहेतुमद्भाव को छोड़कर और कोई कारण है ही नहीं। इसलिये मध्यमा चिच्छक्ति की नवात्मकता सिद्ध हो गई। राग, इच्छा, कृति और प्रयत्नों का कारण आगम शास्त्रों में प्रसिद्ध 'माया, शुद्धविद्या, महेश्वर और सदाशिव' रूप से कहे गये हैं क्योंकि राग, इच्छा, कृति और प्रयत्नों में यही तत्त्वभूत रूप से संगृहीत हैं। इसलिये यहाँ इनकी परा, पश्यन्ती, मध्यमा और वैखरी अधिष्ठानभूता हैं—ऐसा समझना चाहिए।

७. **'बिन्दुव्यूह'**—षट्चक्रों का समुदाय है। ८. **'कलाव्यूह'** वर्ण रूप से विद्यमान पचास कलाओं का समूह है। ९. **'जीवव्यूह'** भोक्ताओं का स्कन्ध है।

इस प्रकार ये नव होने वाले व्यूह भोक्ता, भोग्य और भोग रूप से तीन प्रकार के हैं। आत्मव्यूह यद्यपि भोक्ता है तो भी उसका भोग्य और भोग से तादात्म्य होने से त्रैविध्य है। इसी प्रकार भोग को भी समझना चाहिए। इसका आशय इस प्रकार है—आत्मव्यूह भोक्ता है और ज्ञानव्यूह भोग है तथा शेष कालव्यूहादि भोग्य हैं। इसीलिये आचार्यों ने इन नौ व्यूहों के तीन भेद किये हैं। सभी व्यूहों में सर्वत्र जीवव्यूह अनुस्यूत है। कालव्यूह का उसका अवच्छेदक होने से ऐक्य है। कुल और नामव्यूह निरूपक होने से ऐक्य है। ज्ञानव्यूह का बिन्दु व्यूह में तादात्म्य होने से ऐक्य है। नाद और कलाव्यूह एक ही हैं। इसलिये परमेश्वर की नवव्यूहात्मकता सिद्ध हो गई। इसी से 'भैरवी और भैरव की नव प्रकारों में एकता है'—यह समझ लेना चाहिए। यही कौलमत है। इसीलिये कौलमत वाले परमेश्वर को 'नवात्मा' रूप से व्यवहार करते है। जैसा कि कौल विद्वान् कहते है कि—**नवव्यूहात्मको देव** इति।

'परानन्दपरात्मक देव नौ व्यूहात्मक हैं। भुक्ति एवं मुक्ति प्रदान करने वाले भैरव देव नौ हैं। परानन्दपरात्मक आनन्दभैरव एवं चिद्रूपा पराशक्ति आनन्दभैरवी का जब सामरस्य होता है तब जगत् की उत्पत्ति होती है।'

यह श्लोक हमने निर्दिष्ट करते हुये बहुत थोड़े शब्दों में कहा है। शेष **'तवाधारे मूले'** (द्र० ४१) श्लोक की व्याख्या में कहेंगे। इस श्लोक का यह भाव है आनन्दभैरव और महाभैरवी जिनकी 'परानन्द' और 'परा' संज्ञा है जब इनका अभेद सिद्ध है तब इनकी नवात्मकता में भी अभेद है। इसलिये इनमें शेष और शेषी भाव भी परस्पर सापेक्ष हैं। जब जगत् की सृष्टि, स्थिति और लय की अवस्था में आनन्दभैरव जो परानन्द संज्ञक हैं और महाभैरवी जो परचित्स्वरूपा हैं, उन दोनों में 'प्रयत्न' उत्पन्न होता है। उस समय भैरवी का प्राधान्य होने से प्रकृतिशब्द वाच्या 'महाभैरवी' की प्रधानता रहती हैं। उसका प्राधान्य होने

से उस काल में वह शेषी हो जाती है और आनन्दभैरव अप्रधान अर्थात् गुणभाव होने से शेष कहे जाते हैं। जब सृष्टि का संहार होने का काल आता है तब प्रकृति तन्मात्रा में स्थित हो जाती है और अपनी आत्मा महाभैरव में लीन कर लेती है, तब भैरव शेषी और भैरवी शेष के रूप में व्यवहृत होती हैं ॥ ३४ ॥

**ध्यान—'श'। श्लोकस्थ वर्णबीज 'श' का ध्यान—**

चतुर्भुजां चकोराक्षीं चारुचन्दनचर्चिताम्।
शुक्लवर्णां त्रिनयनां वरदां च शुचिस्मिताम् ॥
रत्नालङ्कारभूषाढ्यां श्वेतमाल्योपशोभिताम्।
देववृन्दैरभिवन्द्यां सेवितां मोक्षकाङ्क्षिभिः ॥
शकारं परमेशानि शृणु वर्णं शुचिस्मिते।
रक्तवर्णं प्रभाकारं स्वयं परमकुण्डली ॥
चतुर्वर्गप्रदं देवि शकारं ब्रह्मविग्रहम्।
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये ॥
रत्नपञ्चतमोद्युक्तं त्रिकूटसहितं सदा।
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ॥

**विद्याबुद्धिप्रद यन्त्र**

**बीजाक्षर**—'श'; जप—१०००; जपस्थान—मणिपूरचक्र; होम—कल्हार कुसुम, मधु, पञ्चमेवा और शर्करा से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोकपाठसंख्या—१०; श्लोकपाठ-आहुति—३; पूजन यन्त्र—त्रिकोण उसके मध्य में 'श्रीं'।

**श्रीविद्यारहस्यार्थ**—हे भागवति ! आप सूर्य-शशि रूप हो कुच-सहित श्री शिव-देह ही हो। आप की दिव्यात्मा कर्तुमकर्तुमन्यथा कर्तुं समर्थ भगवान् शिव की ही आत्मा है। अतः मूलचिच्चैतन्य तथा तत्प्रवाहस्पन्द का परानन्द पर-सम्बन्ध समरस में स्थित है। 'भवात्मानं' के स्थान में कहीं-कहीं 'नवात्मानं' पाठ है। श्री शिव को 'नवात्मा' कहा है। शास्त्रों में श्री भगवान् शिव का नवव्यूह का वर्णन है। यथा—

१. **काल**—निमेष मात्र से अनन्तपर्यन्त समय-लक्ष्य (चन्द्र-सूर्य कलाधीन हैं); २. **कुल**—इन्द्रधनुष के सप्तरङ्ग; ३. **नाम**—पदार्थ संज्ञा (गिरि, वृक्ष, घट-पटादि); ४. **ज्ञान**—स्थूल सूक्ष्मादि पदार्थ-ज्ञान; ५. **चित्त**—अहङ्कार, चित्, बुद्धि, महत्, मन; ६. **नाद**—परा, पश्यन्ती, मध्यमा, वैखरी, स्वर; ७. **बिन्दु**—षट्चक्र मूलाधारादि; ८. **कला**—पञ्चाशल्लिपि, स्वर-वर्णमाला; ९. **जीव**—मन, बुद्धि, चित्त और अहङ्कार की चैतन्य-समष्टि (भोक्ता)। श्री विश्वेश्वरी विश्वमाता भी नवव्यूहात्मिका हैं। यथा—वामा, ज्येष्ठा, रौद्री, अम्बिका—ये श्रीचक्र में निम्न कोण वाले चार त्रिकोणों में स्थित महाशक्तियाँ हैं—ऊर्ध्व कोण वाले पाँच त्रिकोणों की शक्तियों के नाम ये हैं—इच्छा, ज्ञान, क्रिया, शान्ता, परा—इन दोनों, शिवात्मक तथा शक्त्यात्मक नव (४+५) त्रिकोणों के मिलने से सम्पूर्ण श्रीचक्र बनता है, एक से नही। अतः शिव-शक्ति की एकता ही श्री महेश्वर का स्वरूप है। उन दोनों

का अलग-अलग भाव में पूर्णतया वर्णन हो ही नहीं सकता । कोई विद्वान् शिव-शक्ति को आधाराधेय के रूप में वर्णन करते हैं ॥ ३४ ॥

**मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि**
**त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम् ।**
**त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा**
**चिदानन्दाकारं शिवयुवति भावेन बिभृषे ॥ ३५ ॥**

**लक्ष्मीधरा—मनः** मनस्तत्त्वं आज्ञाचक्रस्थितं **त्वं** एव । **व्योम** आकाशतत्त्वं विशुद्धिचक्रान्तस्थितं त्वम् एव । **मरुत्** वायुतत्त्वम् अनाहतनामकसंविच्चक्रान्तर्गतम् । **असि** इति त्वमित्यर्थे अव्ययम् । **मरुत्सारथिः** वायुसखः अग्नितत्त्वं स्वाधिष्ठानगतम् । **असि** इति पूर्ववत् अव्ययम् । **त्वं आपः** अप्तत्त्वं मणिपूरान्तर्गतम् । **त्वं भूमिः** भूमितत्त्वं मूलाधारान्तर्गतम् । एवं रूपेण **त्वयि परिणतायां** परिणतिं तादात्म्यं गतायां, **न हि परं** इतः परं न किञ्चिदस्तीत्यर्थः । **त्वमेव स्वात्मानं** स्वस्वरूपं, **परिणमयितुं** परिणामवन्तं कर्तुं, **विश्ववपुषा** प्रपञ्चरूपेण **चिदानन्दाकारं** चिच्छक्तेः आनन्दभैरवस्य च आकारं, **शिवयुवति!** शिवयुवतिः हरपत्नी, युवतिशब्दात् 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीप् । तस्या सम्बुद्धिः । **भावेन** चित्तेन, **बिभृषे** । यद्वा—**चिदानन्दाकारं च** ब्रह्मस्वरूपं शिवतत्त्वं, **शिवयुवति-भावेन** शिवस्य युवतिर्जाया तस्याः भावः तत्त्वं तेन ॥

**अत्रेत्थं पदयोजना**—हे भगवति ! मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि त्वमापस्त्वं भूमिः । त्वयि परिणतायां परं न हि । त्वमेव स्वात्मानं विश्ववपुषा परिणमयितुं शिवयुवति! भावेन चिदानन्दाकारं बिभृषे ॥

**अयमर्थः**—'मनस्त्वं' इत्यादि 'भूमिः इत्यन्तेन पञ्चभूतात्मकः कार्यरूपः परिणामो विकारः उक्तः । 'त्वयि परिणतायाम्' इत्यनेन निर्विकारात्मकः कारणरूपेणावस्थितिविशेषः प्रकृत्याः परिणामः उक्तः । 'न हि परम्' इत्यनेन अपरिणामिन्याः परिणामो नास्ति अनवस्थापत्तेः इति हि शब्दार्थः । तथोक्तं **चतुश्शत्याम्**—

शृणु देवि महाज्ञानं सर्वज्ञानोत्तमं प्रिये ।
येन विज्ञानमात्रेण भवाब्धौ न निमज्जति ॥
त्रिपुरा परमा शक्तिराद्या जाता महेश्वरि ।
स्थूलसूक्ष्मविभागेन त्रैलोक्योत्पत्तिमातृका ॥
कवलीकृतनिश्शेषतत्त्वग्रामस्वरूपिणी ।
यस्यां परिणतायां तु न किञ्चित्परमिष्यते ॥

**अयमर्थः**—कवलीकृतः आत्मन्यारोपितः कारणात्मतया अवस्थितः, यथा मृदि घट इव निश्शेषं यथा भवति तथा तत्त्वानां पञ्चतत्त्वानां ग्रामः समूहः कवलीकृतनिश्शेषतत्त्वग्रामः, स एव स्वरूपं यस्यास्सा, कार्याणि कारणे उपसंहर्तुं स्वयं कारणात्मना अवस्थितेत्यर्थः, सत्कार्यवादिनां मते कारणे कार्यस्यापि शक्तिरूपेण विद्यमानत्वात् इति । एतदुक्तं भवति—उत्तरकौलमते प्रधानमेव जगत्कर्तृकत्वम् । प्रधानत्वादेव शेषभावो नास्ति, शिवस्या—भावात् । तस्य परिणतिः पञ्चतत्त्वात्मिका । मनस्तत्त्वादिरूपेण प्रधानात्मिका शक्तिः परिणता । अतः

मनःप्रभृतीनां शक्तिपरिणामः, तत्त्वानां स्वरूपपरिणामः । एवं प्रपञ्चं कार्यरूपं स्वस्यामारोप्य कारणरूपेण अवस्थिता । सा च आधारकुण्डलिनीत्यभिधीयते । इतःपरं यद्वक्तव्यमस्ति तदपि 'तवाधारे मूले' इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः ॥ ३५ ॥

*** सरला ***

**मनस्त्वमिति । मनः** मनसतत्त्व जो 'आज्ञाचक्र' में स्थित है वह, **त्वं** आप ही हो, **मरुत्** वायुतत्त्व 'अनाहत' नाम वाले संविच्चक्र में स्थित रहने वाला, **असि** आप हो, यह 'त्वं' इस अर्थ में अव्यय है, **मरुत्सारथिः** वायु का मित्र अग्नितत्त्व जो 'स्वाधिष्ठान' में रहता है, **असि** आप हो, जैसा कि पूर्व में कह आये हैं त्वं के अर्थ में अव्यय है । **त्वं आपः** अप् तत्त्व जो 'मणिपूर' चक्र के अन्तर्गत स्थित है । **त्वं** आप हो, **भूमिः** भूमि तत्त्व जो 'मूलाधार' के अन्तर्गत स्थित है, इस रूप से **त्वयि परिणतायां** परिणति अर्थात् तादात्म्य प्राप्त हो जाने पर, **न हि परं** इसके बाद शेष और किसी की सत्ता नहीं होती, **त्वमेव स्वात्मानं** अपने स्वरूप को, **परिणमयितुं** परिणामवान् बनाने के लिये, **विश्व-वपुषा** प्रपञ्चरूप से, **चिदानन्दाकारं** चिच्छक्ति और आनन्दभैरव के आकार को, **शिवयुवति** हरपत्नि, युव शब्द से 'सर्वतोऽक्तिन्' इससे क्तिन् प्रत्यय होने पर ङीप्, सम्बोधन का रूप है । **भावेन** चित्त से, **बिभृषे** धारण करती हो अथवा चित् और आनन्दाकार ब्रह्मस्वरूप शिवतत्त्व को **शिवयुवतिभावेन** अपनी शिव की जाया के तत्त्व से धारण करती हो ।

**पदयोजना का अर्थ**—हे भगवति ! आप मन हो, आकाश हो, वायु हो, अग्नि हो और आप ही जल तथा भूमि भी हो । यह सब आपकी परिणति के स्वरूप हैं उससे परे और कुछ भी नहीं है । हे शिवयुवति ! आप ही विश्वरूप (प्रपञ्च) में अपने को प्रगट करने के लिये चिच्छक्ति और आनन्दभैरव के आकार को अपने चित्त से धारण करती हो अथवा विश्व शरीर से ब्रह्म स्वरूप शिवतत्त्व को शिवयुवति के भाव से प्रगट करती हो । विश्वरूप में (प्रपञ्चरूप) में आपकी परिणति से परे यह जगत् और कुछ नहीं है । हे शिवयुवति ! आपने ही अपने आप को परिणत करने के लिये 'चिदानन्दाकार ब्रह्मरूप शिवतत्त्व' के चिच्छक्ति और आनन्दभैरव के स्वरूप को अपने चित्त में धारण किया है । अथवा चिदानन्दाकार ब्रह्मस्वरूप शिवतत्त्व को शिवयुवति के भाव रूप तत्त्व से प्रगट किया है ।

इसका **तात्पर्य** इस प्रकार है—यहाँ 'मनस्त्वं' से लेकर 'भूमि' पर्यन्त पञ्चभूतात्मक कार्यरूप विकार कहा गया है और 'त्वयि परिणतायां' इतने से निर्विकारात्मक कारण रूप से, जो अवस्थिति विशेष है उससे, प्रकृति का परिणाम बताया गया है । 'न हि परं' इससे बताया गया है कि अपरिणामिनी का परिणाम होता ही नहीं, अन्यथा अनवस्था दोष उत्पन्न होने लगेगा—यही 'हि' शब्द का तात्पर्य है । जैसा कि चतुःशती में कहा है—शृणु देवीति ।

इसका **अर्थ** इस प्रकार है—जिस प्रकार मिट्टी में समस्त रूप से घट समाया रहता है, उसी प्रकार समस्त पञ्चतत्त्वों रूप कार्य समूहों को अपने में लीन कर कारणात्मक शरीर वाली 'भगवती अम्बा' ही सब कुछ हैं, क्योंकि सत्कार्यवादी ऐसा मानते हैं कि 'कारण में कार्य भी शक्ति रूप से विद्यमान रहती है ।' इसका तात्पर्य यह है कि उत्तर कौलों के मत में जो जगत् का कर्त्ता है वही प्रधान है । उसके प्रधान होने से उसमें शेष भाव की कल्पना नहीं की जा सकती । शिव कोई तत्त्व नहीं है । उस चिच्छक्ति भगवती की परिणति पञ्चतत्वात्मिका है अर्थात्

प्रधानात्मिका शक्ति ही मनस्तत्त्वात्मक रूप में प्रगट हुई है। इसलिये मन: इत्यादि समस्त तत्त्व शक्ति के परिणाम हैं और पञ्चतत्त्व उसके स्वरूप के परिणाम हैं। इस प्रकार के सारे कार्यरूप प्रपञ्च को अपने में आरोपित कर भगवती कारणरूप से स्थित है जिन्हें आधारकुण्डलिनी कहा जाता है। इसके बाद जो कुछ भी कहना है उसे 'तवाधारे मूले' (द्र० ४१) इस श्लोक के व्याख्यान के समय ठीक तरह से उपपादन करेंगे॥ ३५॥

**ध्यान—'म'। श्लोकस्थ वर्णबीज 'म' का ध्यान—**

म— कृष्णां दशभुजां भीमां पीतलोहितलोचनाम्।
कृष्णाम्बरधरां नित्यां धर्मकामार्थमोक्षदाम्॥
एवं ध्यात्वा मकारं तु तन्मन्त्रं दशधा जपेत्।
मकारं शृणु चार्वङ्गि स्वयं परमकुण्डली॥
तरुणादित्यसङ्काशं चतुर्वर्गप्रदायकम्।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं तथा॥

**बीजाक्षर**-म; जप-१०००; जपस्थान—मणिपूरचक्र; होम—कल्हार कुसुम, मधु, पञ्चमेवा और शर्करा से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोक पाठसंख्या—१०; श्लोकपाठआहुति—३; पूजनयन्त्र—त्रिशूल युक्त गोलार्ध में 'क्षां क्षीं क्षुं क्षूं' लिखे।

**क्षयरोगनिवृत्तियन्त्र**

क्षां क्षीं
क्षुं क्षूं

**भावार्थ**—हे विश्वमयी भगवति! आप ही मन हैं, आप ही व्योम, मरुत, अग्नि, जल और पृथ्वी बन जाती हैं। आपके विश्वव्यापी अनेक रूपों के परे कुछ भी नहीं है। आप विश्वरूप धारण करती हैं तथा सूक्ष्मभाव में चिदानन्दाकार-रूप में स्थिर रहती हैं।

**श्रीविद्यारहस्यार्थ**—यहाँ श्री भगवती की व्यापिनी अष्टमूर्ति का भाव है—१. सूर्य, २. चन्द्र, ३. मन और ४-८. पञ्चतत्त्व। इन अष्ट मूर्तियों में श्री विश्वेशी का चिदानन्द व्यापकत्व भाव ओतप्रोत रूप से भरा हुआ है। यही श्री विश्वजननी का विश्वव्यापक स्वरूप है। वह विश्वव्यापिनी भगवती आज्ञाचक्र में मन-बुद्धि-रूप से, विशुद्धचक्र में आकाश और मूलवायु-रूप से, अनाहत में वायु और अग्निरूप से, मणिपूर में अग्निरूप से, स्वाधिष्ठान में जलरूप से तथा मूलाधार में भूरूप से व्याप्त रहती हैं। विश्वरूप-धारण में वह महामाया परिणमन के अणु-अणु में विश्वतैजस, प्राज्ञ, विराट्, हिरण्यगर्भादि में व्यापिनी सर्वमयीं हैं; सर्वविश्वकर्त्री, पालिका तथा संहर्त्री हैं॥ ३५॥

**तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं**
**परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता।**
**यमाराध्यन् भक्त्या रविशशिशुचीनामविषये**
**निरालोकेऽलोके निवसति हि भालोकभुवने॥ ३६॥**

**लक्ष्मीधरा—तव** त्वदीये, **आज्ञाचक्रस्थं** आज्ञाचक्रे स्थितं, **तपनशशिकोटिद्युतिधरं** तपनः सूर्यः शशिः चन्द्रः तयोः कोटयः, अगणितकोटिसङ्ख्याका इत्यर्थः, तासां द्युतिः कान्तिः तां धरतीति धरः, तं **परं शम्भुम्**। पर इति संज्ञा शम्भोः । **परिमिलितपार्श्वं** परिमिलितौ पार्श्वौ दक्षिणोत्तरौ यस्य तम् । परा चासौ चिच्च **परचित्** । परशब्दः चित्संज्ञायां प्रसिद्धः । **यं** परचित्संवलितं परशिवं, **आराध्यन्** प्रसादयन् **भक्त्या** भजनप्रीत्या, **रविशशिशुचीनां** सूर्य-चन्द्राग्नीनां **अविषये** अगोचरे, अत एव **निरालोके** आलोकरहिते, **अलोके** विजने एकान्ते, **निवसति**, त्वत्सायुज्यं प्राप्येति शेषः । **हिः** प्रसिद्धौ । **भालोकभुवने** ज्योत्स्नामये लोके सहस्रकमले ।

**अत्रेत्थं पदयोजना**—हे भगवति ! तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं परं शम्भुं परचिता परिमिलितपार्श्वं वन्दे । यं भक्त्या आराध्यन् रविशशिशुचीनाम् अविषये निरालोके अलोके भालोकभुवने निवसति हि ॥

**अत्रेदमनुसन्धेयम्**—'तवाज्ञाचक्रस्थं' इति चक्रशब्देन साधकस्य भ्रूमध्यान्तरगतश्री-चक्रान्तर्गतशिवचक्रचतुष्टयं कथ्यते । न तु द्विदलं पद्मं, तवेतिपदानन्वयादिति । एवमुत्तर-त्राप्यूह्यम् । अत्र स्वाधिष्ठानाग्रे अग्निमण्डलं, अनाहतचक्राग्रे सूर्यमण्डलं, आज्ञाचक्राग्रे चन्द्रमण्डलमिति पूर्वमेव प्रतिपादितम् । अतश्च अग्निसूर्यचन्द्राणां मयूखाः षष्ट्युत्तरत्रिशत-सङ्ख्याकाः आधारचक्रप्रभृति आज्ञाचक्रपर्यन्तमेव विचरन्ति । एतदपि पूर्वमेव सम्यक् निरूपितम् । आज्ञाचक्रस्थितचन्द्रात् अन्य एव सहस्रकमलस्थितश्चन्द्रः श्रीचक्रात्मकः नित्य-कल इत्यपि पूर्वमेव सम्यक् निरूपितम् ॥ ३६ ॥

## * सरला *

**तवाज्ञाचक्रस्थमित्यादि** । **तव** आपकी, **आज्ञाचक्रस्थं** आज्ञाचक्र में स्थित, **तपन-शशिकोटिद्युतिधरं** असंख्य सूर्य तथा चन्द्रमा की कान्ति धारण करने वाले, **परं शम्भुं** पर नाम से कहे जाने वाले सदाशिव को, **परिमिलितपार्श्वं** जिनके शरीर के दक्षिणोत्तर पार्श्वभाग परस्पर मिले हुये हैं, **परचिता** परारूप चित् शक्ति से मिले हुये, **यं** जिन परशिव को, **आराध्यन्** प्रसन्न करते हुये, **भक्त्या** भजन की प्रीति से, **रविशशिशुचीनां** सूर्य चन्द्रमा और अग्नि के, **अविषये** अगोचर अतएव, **निरालोके** आलोकरहित, **अलोके** निर्जन एकान्त मे, **निवसति** आपका सायुज्य प्राप्त कर निवास करता है, **हि** प्रसिद्धार्थ में प्रयुक्त है, **भालोकभुवने** ज्योत्स्नामय सहस्रकमल रूप लोक में स्थित हैं ।

**पदयोजना का अर्थ**—हे भगवति ! आपके आज्ञाचक्र में स्थित असंख्य सूर्य एवं चन्द्रमा और अग्नि की कान्ति धारण करने वाले उन शम्भु सदाशिव की, जिनके शरीर के वाम-पार्श्व भाग का परा नामक शक्ति के साथ मिला हुआ है उनकी, वन्दना करता हूँ जिन सदाशिव को भक्तिपूर्वक आराधना करने वाला साधक जहाँ सूर्य चन्द्रमा और अग्नि का प्रकाश नहीं है ऐसे आलोकरहित एकान्त स्थान वाले, सहस्र दलात्मक, स्वयं प्रकाश लोक में आपका सायुज्य प्राप्त कर निश्चय रूप से निवास करता है ।

यहाँ यह समझ लेना चाहिए कि 'तवाज्ञाचक्रस्थं' में आये चक्र शब्द से साधक के भ्रूमध्यान्तर्गत श्रीचक्रान्तर्गत शिवचक्र-चतुष्टय को कहा गया है, द्विदल पद्मवाला चक्र नहीं । ऐसा अर्थ करने पर ही 'तव' पद के अन्वय की संगति बैठती है । इसी प्रकार आगे

के श्लोकों में समझना चाहिए। यहाँ स्वाधिष्ठान के अग्रभाग में अग्निमण्डल, अनाहत-चक्र के आगे सूर्यमण्डल, आज्ञाचक्र के आगे चन्द्रमण्डल की अवस्थिति है—यह बात पूर्व में ही कही जा चुकी हैं। इसलिये अग्नि, सूर्य और चन्द्रमा के समस्त ३६० संख्या वाले मयूख आधार चक्र से लेकर आज्ञाचक्र पर्यन्त ही प्रकाश करते हैं। यह बात भी पूर्व में कह चुके हैं। आज्ञा चक्र में रहने वाले चन्द्रमा से भिन्न एक और चन्द्रमा है जो सहस्र-दल कमल में रहने वाला 'श्रीचक्रात्मक' और नित्यकला वाला है। यह भी पूर्व में निरूपित कर आये हैं॥ ३६ ॥

**ध्यान—'त'। श्लोकस्थ वर्ण बीज 'त' का ध्यान—**

त— चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम्।
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम्॥
नानाऽलङ्कारभूषां तां सर्वसिद्धिप्रदायिनीम्।
एवं ध्यात्वा तकारं तु मन्त्ररूपं सदा यजेत्॥
तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा॥
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम्।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम्॥

**भीतिनिवारकयन्त्र**

**बीजाक्षर**—'त'; जप—१०००; जप-स्थान—मणिपूर (नाभिचक्र); होम—कल्हार कुसुम, मधु, पञ्चमेवा और शर्करा से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—३।

**भावार्थ**—हे दिव्यचक्रस्था भगवति! आपके लीलादेहस्थ आज्ञाचक्र में स्थित कोटि सूर्य तथा चन्द्र के समान प्रकाशमान, वामपार्श्वगता पराचिच्छक्ति-सहित उन महाशिव को बारम्बार मैं प्रणाम करता हूँ, जिनकी भक्तिपूर्वक आराधना करने से साधक निरातङ्क होकर सूर्य-शशि'काश'पर महादिव्य लोक में निवास पाता है।

**श्रीविद्यारहस्यार्थ**—आज्ञाचक्र—आपकी आज्ञा में रहने वाले अनन्त विश्वचक्र में आपके साथ व्यापक श्री भगवान् शिव अथवा आज्ञाचक्र— भृकुटि-मध्य में द्विदल चक्र। इस चक्र के देवता हैं—पर शम्भुनाथ चित्पराम्बा-परचिता-चित्पराम्बा।

परशम्भुनाथ चित्पराम्बा की आराधना ६४ मानस मयूखाओं-सहित होती है।

**६४ मानस मयूखायें**—१. पर, २. परा, ३. भर, ४. भरा, ५. चित्, ६. चित्परा, ७. महामाया, ८. महामायापरा, ९. सृष्टि, १०. सृष्टिपरा, ११. इच्छा, १२. इच्छापरा, १३. स्थिति, १४. स्थितिपरा, १५. निरोध, १६. निरोधपरा, १७. मुक्ति, १८. मुक्तिपरा, १९. ज्ञान, २०. ज्ञानपरा, २१. सत्, २२. सत्परा, २३. असत्, २४. असत्परा, २५. सदसत्, २६. सदसत्परा, २७. क्रिया, २८. क्रियापरा, २९. आत्मा, ३०. आत्मपरा, ३१. इन्द्रियाश्रय, ३२. इन्द्रियाश्रयपरा, ३३. गोचर, ३४. गोचरपरा, ३५. लोकमुख्या, ३६. लोकमुख्यपरा, ३७. वेदवत्, ३८. वेदवत्परा, ३९. सम्विद्, ४०. सम्वित्परा, ४१.

कुण्डलिनी, ४२. कुण्डलिनीपरा, ४३. सौषुम्नी, ४४. सौषुम्नीपरा, ४५. प्राणसूत्रा, ४६. प्राणसूत्रापरा, ४७. स्पन्द, ४८. स्पन्दपरा, ४९. मातृका, ५० मातृकापरा, ५१. स्वरोद्भवा, ५२ स्वरोद्भवपरा, ५३. वर्णजा, ५४. वर्णजापरा, ५५. शब्दजा, ५६. शब्दजापरा, ५७ वर्णज्ञा, ५८. वर्णज्ञानपरा, ५९. वर्गजा, ६०. वर्गजापरा, ६१. संयोगजा, ६२ संयोगजापरा, ६३. मन्त्रविग्रहा, ६४. मन्त्रविग्रहापरा।

इस प्रकार ३६वें श्लोक से प्रारम्भ कर ४१ वें श्लोक तक षट्चक्र के ध्यान-क्रम का यहाँ वर्णन किया गया है ॥ ३६ ॥

**विशुद्धौ ते शुद्धस्फटिकविशदं व्योमजनकं**
**शिवं सेवे देवीमपि शिवसमानव्यवसिताम्।**
**ययोः कान्त्या यान्त्याः शशिकिरणसारूप्यसरणे-**
**र्विधूतान्तर्ध्वान्ता विलसति चकोरीव जगती॥ ३७ ॥**

**लक्ष्मीधरा**—**विशुद्धौ** विशुद्धिचक्रे **ते** भवत्याः **शुद्धस्फटिकविशदं** त्रासरहितस्फटिकोपलसदृशं अतिनिर्मलं **व्योमजनकं** व्योम्नः आकाशतत्त्वस्य जनकं उत्पादकं, 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' (तै०उ० २-१) इत्यादिश्रुतेः । आज्ञाचक्रे आत्मतत्त्वात् उत्पन्नं आकाशतत्त्वमित्यर्थः । अत्र आत्मशब्दो मनःपर्यायवचनः । **शिवं** शिवतत्त्वं, **सेवे** उपासे । **देवीं** भगवतीम्, **अपिशब्दः** समुच्चये । **शिवसमानव्यवसितां** शिवेन समानं व्यवसितं व्यवसायः प्रयत्नः यस्याः तां, स्वयमपि शिवशब्दवाच्येत्यर्थः । **ययोः** शिवयोः, **कान्त्याः** प्रभायाः, **यान्त्याः** सरन्त्याः, **शशिकिरणसारूप्यसरणेः** चन्द्रकिरणसादृश्यमार्गात्, **विधूतान्तर्ध्वान्ता** विधूतं अन्तर्ध्वान्तं अज्ञानं यस्यास्सा, **विलसति** प्रकाशते । **चकोरीव** चकोरविहगीव, **जगती** त्रिलोकी ।

**अत्रेत्थं पदयोजना**—हे भगवति ! ते विशुद्धौ शुद्धस्फटिकविशदं व्योमजनकं शिवं । शिवसमानव्यवसितां देवीमपि सेवे; ययोः यान्त्याः शशिकिरणसारूप्यसरणेः कान्त्यास्सकाशात् जगती विधूतान्तर्ध्वान्ता चकोरीव विलसति ।

**अयमर्थः**—यथा ज्योत्स्नापानेन चकोरी सन्तुष्टान्तरङ्गा, एवं शिवयोः ज्योत्स्नासदृशप्रभायाः विधूतान्तर्ध्वान्तः सन्तुष्टान्तरङ्गः साधकलोकः इति ।

**अत्रेदमनुसन्धेयम्**—विशुद्धिचक्रपूजायां सूर्यचन्द्रनिरोधात् षोडशारगतानां श्रीत्रिपुरसुन्दरीप्रभृतीनां षाडशकलानां ज्योत्स्नाशोषणात् तच्चक्रस्थितयोः शिवयोरेव प्रभया ज्योत्स्नाकार्यमिति ॥ ३७ ॥

*** सरला ***

**विशुद्धाविति । विशुद्धौ** विशुद्धिनामक चक्र में, **ते** आप के, **शुद्धस्फटिकविशदं** सर्वथा निर्दोष स्फटिकमणि के समान अत्यन्त निर्मल, **व्योमजनकं** आकाशतत्त्व को उत्पन्न करने वाले, 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इस तैत्तिरीयक उपनिषद् श्रुति से कहा गया है । आज्ञा चक्र में आत्मारूप तत्त्व से उत्पन्न आकाशतत्त्व—यह अर्थ हुआ । यहाँ आत्मशब्द मन का पर्यायवाची है । **शिवं** शिवतत्त्व की, **सेवे** उपासना करता हूँ, **देवीं** भगवती की भी, **अपि** यह समुच्चय अर्थ में प्रयुक्त है, **शिवसमानव्यवसितां** शिव के समान

व्यवहार (प्रयत्न) है जिसका, अर्थात् स्वयं भी शिव शब्द से कही जाने वाली, **ययोः** जिन शिव और शिवा की, **कान्त्याः** प्रभा की, **यान्त्याः** विस्तारपूर्वक प्रकाशित होते रहने से, **शशिकिरणसारूप्यसरणेः** चन्द्रकिरण के समान वाले मार्ग से, **विधूतान्तर्ध्वान्ता** नष्ट हो गया है अज्ञान जिनका, **विलसति** प्रकाशित होती है, **चकोरीव** चकोर नामक पक्षी के समान, **जगती** त्रिलोकी आनन्दित होती है।

**पदयोजना का अर्थ**—हे भगवति ! आपके विशुद्धचक्र में आकाश को उत्पन्न करने वाले शुद्ध-स्फटिक के समान सर्वथा निर्दोष निर्मल शिवतत्त्व को तथा शिव के समान ही कार्य करने वाली उस महादेवी की भी मैं आराधना करता हूँ, जिन दोनों की चन्द्रमा की किरणों के सदृश कान्ति से अन्तःकरण स्थित अन्धकार के नष्ट हो जाने से यह जगती चकोरी पक्षी के समान आनन्दित होती है।

इसका तात्पर्य इस प्रकार है चकोरी पक्षी चन्द्रिका के पान से जिस प्रकार अन्तःकरण से संतुष्ट हो जाती है। उसी प्रकार शिवा-शिव की कान्ति से साधक लोग भी अज्ञान अन्धकार के नष्ट हो जाने से अपने अन्तःकरण में प्रसन्न हो जाते हैं।

यहाँ यह भी समझ लेना चाहिए कि विशुद्धिचक्र की पूजा में सूर्य और चन्द्रमा की गति नहीं है और षोडशार में रहने वाली श्रीत्रिपुरसुन्दरी आदि षोडश कलाएँ वहाँ की ज्योत्स्ना को शुष्क कर देती है। ऐसी स्थिति में उस चक्र में रहने वाले 'शिवा और शिव' की कान्ति से साधक को ज्योत्स्ना उत्पन्न करनी चाहिए ॥ ३७ ॥

**ध्यान—वि = व् + इ। श्लोकस्थ वर्णबीज 'वि' का ध्यान—**

**व—** कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम्।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम् ॥
साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम्।
एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत् ॥
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा।
त्रिबिन्दुसहितं मन्त्रमात्मादितत्त्वसंयुतम् ॥
पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम्।
चतुर्वर्गप्रदं शान्तं सर्वसिद्धिप्रदायकम् ॥

**इ—** इकारं परमानन्दं सुगन्धं कुंकुमच्छविः।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये ॥
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम् ॥
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गता भवेत्।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत् ॥
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम्।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम् ॥
चतुर्भुजां च वरदां हरिचन्दनभूषिताम्।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत् ॥

**ब्रह्मराक्षसबाधा-निवारक यन्त्र**

**बीजाक्षर**—'वि'; जप—१०००; जप-स्थान—मणिपूर-चक्र; होम—कल्हार कुसुम, मधु, पञ्चमेवा और शर्करा से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—३।

**श्रीविद्यारहस्यार्थ**—हे भगवति ! आपके लीलामय देह के विशुद्धि (कण्ठस्थ) चक्र में आकाश (शून्य) के उत्पन्न करने वाले, शुद्ध स्फटिक-सम शुभ्र वर्ण वाले श्री भगवान् महाशिव की आराधना करता हूँ। जिनकी एकान्तमयी सारूप्यता, रूपचन्द्र-ज्योत्स्ना के प्रभाव से निर्मलान्त:करण होकर विश्व चकोरीवत् आनन्दित हो जाता है अर्थात् अर्द्धनारीनटेश्वर भाव है। व्योमेश्वर तथा श्री व्योमेश्वर्यम्बा इसके देवता हैं।

व्योमेश्वरनाथ एवं व्योमेश्वर्यम्बा की आराधना ७२ नाभस मयूखाओं सहित होती है।

**बहत्तर नाभस मयूखायें**—१. हृदया, २. कौलिनी, ३. धरा, ४. कान्ता, ५. भोगा, ६. विश्वा, ७. भया, ८. योगिनी, ९. महा, १०. ब्रह्मसारा, ११. शवा, १२. शाबरी, १३. द्रवा, १४. कालिका, १५. रसा, १६. जुष्टाचाण्डाली, १७. मोहा, १८. अघोरेशी, १९. मनोभवा, २०. हेला, २१. केका, २२. महारक्ता, २३. ज्ञानगुह्या, २४. कुब्जिका, २५. खरा, २६. डाकिनी, २७. ज्वलना, २८. शाकिनी, २९. महाकुला, ३०. लाकिनी, ३१. भियोज्ज्वला, ३२. काकिनी, ३३. तेजसा, ३४. शाकिनी, ३५. मूर्धा. ३६. हाकिनी, ३७. वामू, ३८. पापघ्नी, ३९. कुला, ४०. सिंही, ४१. संहारा, ४२. कुलाम्बिका, ४३. विश्वम्भरा, ४४. कामा, ४५. कौटिला, ४६. कूनमाता, ४७. गालवा, ४८. कङ्काटि, ४९. व्योमा, ५०. व्योमचारा, ५१. श्वसना, ५२. नादा, ५३. खेचरी, ५४. महादेवी, ५५. बहुला, ५६. महत्तरी, ५७. ताटा, ५८. कुण्डलिनी, ५९. कुलातीता, ६०. कुलेशी, ६१. अजा, ६२. ईधिका, ६३. अनन्ता, ६४. दीपिका, ६५. एषा, ६६. रेचिका, ६७. शिखा, ६८. मोचिका, ६९. परमा, ७०. परा, ७१. परपरा, ७२. चित ॥ ३७ ॥

**समुन्मीलत्संवित्कमलमकरन्दैकरसिकं**
**भजे हंसद्वन्द्वं किमपि महतां मानसचरम्।**
**यदालापादष्टादशगुणितविद्यापरिणति:**
**यदादत्ते दोषाद्गुणमखिलमद्भ्य: पय इव ॥ ३८ ॥**

**लक्ष्मीधरा—समुन्मीलत्संवित्कमलमकरन्दैकरसिकं** समुन्मीलत् विकसत् संवित् ज्ञानं, तदेव कमलं, तत्र मकरन्द: पुष्परस:, स चासौ एकश्च, न च एकशब्दस्य पूर्वनिपात:, 'विशेषणं विशेष्येण बहुलम्' इति परनिपातात्, यद्वा एकश्चासौ रसिकश्चेति एकरसिक:, मकरन्देन एकरसिक: इति पश्चात् समास:, तं तथोक्तम्। परमहंसस्वरूपयो: शिवयो: हंसत्वारोपणं संविद: कमलत्वारोपणे निमित्तम्। अत: संविद: कमलत्वे सिद्धे एकदेशरूपेण मकरन्देन चर्व्यमाणतैकप्रमाणो रस आरोप्यते। अत एव मकरन्दैकशब्दस्य तृतीयासमास:। **भजे** सेवे। **हंसद्वन्द्वं किमपि** अनिर्वाच्यं इदन्तया निर्देष्टुं अशक्यं षड्विंशं तत्त्वं शिवशक्ति-सम्पुटितं, **महतां** योगीश्वराणां, **मानसचरम्**। अत्र मानसशब्देन मनसि मानससरस्त्वं

आरोप्यते, मानससरसि हंसानां नित्यवासात् । **यदालापात्** यस्य हंसद्वन्द्वस्य आलापात्, **अष्टादशगुणितविद्यापरिणतिः** अष्टादशविद्याः आलापरूपेण परिणता इत्यर्थः । **यत्** हंसद्वन्द्वं, **आदत्ते** गृह्णाति । **दोषात्**—ल्यब्लोपे पञ्चमी, दोषं अवयुत्य **गुणं** गुणशब्दो दोषाभावस्याप्युपलक्षकः, गुणवत् दोषभावस्यापि ग्राह्यत्वात् **अखिलं**—समस्तं, **अद्भ्यः** उदकेभ्यः, **पय इव** दुग्धमिव ।

**अत्रेत्थं पदयोजना**—हे भगवति ! समुन्मीलत्संवित्कमलमकरन्दैकरसिकं महतां मानसचरं किमपि हंसद्वन्द्वं भजे; यदालापात् अष्टादशगुणितविद्यापरिणतिः, यत् दोषात् अखिलं गुणं अद्भ्यः पय इव आदत्ते ।

**अत्रेदमनुसन्धेयम्**—संवित्कमलं अनाहतचक्रनामकमिति पूर्वमेवोक्तम् । उपासकाः परमहंसमिथुनं संवित्कमले उपासते इति समयैकदेशिमतम् । अत एव महतां मानसचरमित्युक्तम् । भगवत्पादमतं तु—शिखिज्वालारूपः परमेश्वरः शिखिन्या स्वशक्त्या संवलितः अनाहतचक्रे दीपाङ्कुरवत् प्रतिभातीति ।

यथोक्तं भगवत्पादैः **सुभगोदयव्याख्याने**—

शिखिज्वालारूपः समय इह सैवात्र समया
तयोस्सम्भेदो मे दिशतु हृदयाब्जैकनिलयः ॥

इति । एतदेव अस्माकमपि अभिमतम् ॥ ३८ ॥

## * सरला *

**समुन्मीलदिति । समुन्मीलत्संवित्कमलमकरन्दैकरसिकं** विकसित हुये ज्ञान रूप कमल के पुष्प रस के एक मात्र रसिक परमहंस स्वरूप शिव-शिवा में हंसत्व का आरोपज्ञान कमल के आरोपण में निमित्त है । इस प्रकार जब ज्ञान में कमल के आरोप की सिद्धि हो गई तब उसके एकदेश में रहने वाले मकरन्द से चर्व्यमाणता रूप एक प्रमाण रस भी उसमें आरोपित हो गया । इसलिये 'मकरन्दैक' शब्द से तृतीया समास हुआ । **भजे** सेवा करता हूँ, **हंसद्वन्द्वं किमपि** अनिर्वचनीय इदन्तया निर्देश करने में अशक्य २६ वाँ तत्त्व जो शिवशक्ति से सम्पुटित है, **महतां** योगीश्वरों के, **मानसचरम्** मानसरूप सर में विहार करने वाले, यहाँ 'मानस' शब्द से मन में 'मानससर' का आरोप है क्योंकि हंस नित्य मानससरोवर में ही निवास करते हैं, **यदालापात्** जिन हंसद्वन्दों के आलाप से, **अष्टादशगुण विद्या परिणतिः** १८ विद्याएँ आलाप रूप से परिणत हो जाती हैं, **यत्** जो हंस के जोड़े, **आदत्ते** ग्रहण करते हैं, **दोषात्** दोष से, यहाँ ल्यप् के लोप में पञ्चमी विभक्ति हैं अर्थात् दोष को निकाल कर, **गुणं** गुण को, यह 'गुण' शब्द दोषाभाव का भी उपलक्षक है । जैसे गुण ग्रहण करते हैं, उसी प्रकार दोषाभाव भी ग्रहण करते हैं, **अखिलं** समस्त, **अद्भ्यः** जल से **पय इव** दूध के समान ग्रहण करते हैं ।

**पदयोजना का अर्थ**—हे भगवति ! हम हृदयप्रदेश में खिले हुये कमलरूपी ज्ञान के मकरन्द रूपी रस के एकमात्र रसिक योगीश्वरों के मन रूप मानसरोवर में बिहार करने वाले अनिर्वचनीय किन्हीं हंस द्वन्द्वों की सेवा करते हैं, जिनके आलापरूप से अट्ठारह विद्याओं की परिणति हुई हैं जो दोषों से समस्त गुणों को जल से दूध के समान ग्रहण करते हैं ।

यहाँ यह विचारणीय है कि 'संवित्कमल' को 'अनाहतचक्र' भी कहते हैं, यह बात हम

पहले कह आये हैं। उपासक उस संवित्कमल मे परमहंस मिथुन की उपासना करते हैं। यह समयी सम्प्रदाय का एकदेशी मत हैं सार्वभौम मत नहीं है। इसलिये 'महतां मानसचरम्' यह कहा गया है। भगवत्पाद का मत तो यह है कि परमात्मा 'अग्निज्वाला स्वरूप' हैं। परमेश्वर अग्नि की ज्वाला रूप शक्ति से अनाहत चक्र में दीपाङ्कुर के समान दिखाई पड़ता है।

जैसा कि भगवत्पाद ने सुभगोदय व्याख्यान में कहा भी है—शिखी रूप से 'समय' और ज्वाला रूप से 'समया' है। यह हृदय कमल के मध्य में निवास करती है। उनका परस्पर ऐक्य हमारा कल्याण सम्पादन करे। टीकाकार (लक्ष्मीधर) कहते हैं कि यही हमारा भी मत है॥ ३८॥

**ध्यान—'स'। श्लोकस्थ वर्णबीज 'स' का ध्यान—**

**स—** करीषभूषिताङ्गीं च साट्टहासां दिगम्बराम्।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम्॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम्।
सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम्॥
एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत्।
सकारं शृणु चार्वङ्गि शक्तिर्बीजं परात्परम्।
कोटिविद्युल्लताकारं कुण्डलीमयसंयुतम्॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा।
रजस्सत्वतमोयुक्तं त्रिबिन्दुसहितं सदा॥

**बीजाक्षर**—'स'; जप—१०००; जप-स्थान—मणिपूरचक्र; होम—कल्हार कुसुम, मधु, पञ्चमेवा और शर्करा से १०० अथवा १०; मार्जन--१०; तर्पण—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—३; पूजनयन्त्र—वृत्त में 'कं' लिखे।

**बालारिष्टनिवारक यन्त्र**

कं

**भावार्थ**—हे शिव-शक्ति-स्वरूपे! इन दो महाहंसों की मैं आराधना करता हूँ, जो अनन्त ब्रह्माण्ड-रूप खिलते हुए कमलों के बुद्धि-रूप मकरन्द के रसिक हैं; जो श्रेष्ठ महापुरुषों के मन-रूप मानस-सर में निवास करते हैं और जिनके मधुर आलाप से अष्टादश (दश महाविद्यायें तथा अष्टशक्ति) विद्यायें उत्पन्न होती हैं तथा जिनमें प्रकृति के गुण-दोष-मिश्रण रूपगुणपृथक्कारिणी शक्ति है (जैसे हंस में पय-जल पृथक्कारिणी शक्ति होती है)।

**श्रीविद्यारहस्यार्थ**—यहाँ अनाहत चक्र का वर्णन है। **हंसद्वन्द्वं**—हंसः सोऽहं। 'हंसः सोहं' से सम्पुटित त्रिकूट का जप अनाहत चक्र में कहा गया है। **मानस**-मन-मानसरोवर, जिसके किनारे हंस रहते हैं। **यदालापात्**—शिव-शक्ति-वार्ता-रूप से वेदागमादि शास्त्र प्रकट हुए कहे जाते हैं।

**अष्टादश विद्यायें**—१. ऋक्, २. यजु, ३. साम, ४. अथर्व, ५. शिक्षा, ६. कल्प, ७. व्याकरण, ८. निरुक्त, ९. छन्द, १०. ज्योतिष, ११. पूर्वमीमांसा तथा उत्तर मीमांसा, १२. न्याय, १३. सांख्य, १४. धर्मशास्त्र, १५. आयुर्वेद, १६. शिल्प, १७. धनुर्वेद, १८. गान्धर्व वेद।

इस के देवता श्री हंसेश्वरनाथ तथा श्री हंसेश्वर्यम्बा हैं। इनकी आराधना चौवन वायव्य मयूखाओं सहित होती है। यथा—

**चौवन वायव्य मयूखायें**—१. खगेश्वरी, २. भद्रा, ३. कूर्मा, ४. आधारा, ५. मेषा, ६. कोषा, ७. मीना, ८. मल्लिका, ९. ज्ञाना, १०. विमला, ११. महानन्दा, १२. शर्वरी, १३. तीव्रा, १४. लीला, १५. प्रिया, १६. कुमुदा, १७. कालिका, १८. मेनका, १९. डामरा, २०. डाकिनी, २१. कामदा (रामरा), २२. राकिनी, २३. लामरा, २४. लाकिनी, २५. कामरा, २६. काकिणी, २७. सामरा, २८. शाकिनी, २९. हामरा, ३०. हाकिनी, ३१. आधारेशा, ३२ राका, ३३. चक्रेशा, ३४. विन्दुस्था, ३५. कुकुरा, ३६. कुला, ३७. मायाश्रीशा, ३८. कुब्जिका, ३९. हृदीशा, ४०. कामकला, ४१. शिरसा, ४२. कुलदीपिका, ४३. शिक्षेशा, ४४. सर्वेशा, ४५. वरदा, ४६. बहुरूपा, ४७. अश्लेषा, ४८. महत्तरा, ४९. परहा, ५०. मङ्गला, ५१. पराधिष्ठाना, ५२. परकर्मिणी, ५३. देवपूज्या, ५४. रामा (रमा)।

ब्रह्माण्ड अनन्त है अर्थात् इसका आदि-अन्त नहीं है। अत: 'विश्वोत्पत्ति' का अर्थ है क्षय हुए दो-चार सौर-मण्डलों की पुन: सृष्टि। बीजाणुओं तथा अणुओं में उत्पत्ति एवं लय प्रत्येक क्षण ब्रह्माण्ड में हुआ ही करता है। अत: तत्त्वीकरण गतिशक्ति में चित्स्पन्द प्रत्येक क्षण होता रहता है। फिर भी विश्राम करती हुई श्रीविश्वेश्वरी सदा जागृत् और पूर्णगतिमयी हैं। उस अनन्ता महाशक्ति की विचित्र तथा अद्भुत क्रिया का वर्णन करने में वेद भी समर्थ नहीं हैं। अत: वह अवर्णनीया महामायाशक्ति है ॥ ३८ ॥

**तव स्वाधिष्ठाने हुतवहमधिष्ठाय निरतं**
**तमीडे संवर्तं जननि महतीं तां च समयाम्।**
**यदालोके लोकान् दहति महति क्रोधकलिते**
**दयार्द्रा या दृष्टिः शिशिरमुपचारं रचयति ॥ ३९ ॥**

**लक्ष्मीधरा—तव** भवत्याः, **स्वाधिष्ठाने** स्वाधिष्ठानचक्रे, **हुतवहं** अग्नितत्त्वं, **अधिष्ठाय**, आश्रित्य **निरतं**, अनवरतं **तं** प्रसिद्धं, **ईडे** स्तुवे, **संवर्तं** संवर्तनामकं अग्निं, **जननि**! हे मातः! **महतीं** महच्छब्दवाच्यां, **तां** संवर्ताग्निरूपामित्यर्थः, **समयाम्**। **यदालोके** दर्शने, **लोकान्**, भूरादीन् **दहति** सति, **महति क्रोधकलिते**, **दयार्द्रा** कृपाविष्टा, **या दृष्टिः** आलोकः, **शिशिरं** शीतलं, **उपचारं रचयति**।

**अत्रेत्थं पदयोजना**—हे जननि! तव स्वाधिष्ठाने हुतवहं संवर्तमधिष्ठाय निरतं तम् ईडे, समयां तां महतीं च ईडे। महति, क्रोधकलिते यदालोके लोकान् दहति सति या दयार्द्रा दृष्टिः शिशिरमुपचारं रचयति, सा त्वदीया दृष्टिरिति शेषः।

**अत्रेदमनुसन्धेयम्**—स्वाधिष्ठानं अग्नितत्त्वोत्पत्तिस्थितम्। तत्र उत्पन्नं अग्निं संवर्ताग्नितया आरोप्य तत्रैव महासंवर्ताग्निज्वालाकारशक्तिरूपतया अवस्थिता शक्तिः सम्भाव्या। ततः तयोः आलोकेन जगन्ति दग्धानि। तानि जगन्ति पुनः प्रसन्नायाः भगवत्या एव कृपारसपूरिता दृष्टिः मणिपूरप्रतिपादिता शिशिरोपचारं रचयतीति स्तुतिमात्रं, न वस्तुत इति ॥ ३९ ॥

## ❀ सरला ❀

हे देवि ! **तव** आपके, **स्वाधिष्ठाने** स्वाधिष्ठान में रहने वाले, **हुतवह** अग्नि का, **अधिष्ठाय** आश्रय लेकर, **निरतं** अनवरत, **तं** उसकी प्रसिद्ध, **ईडे** मैं स्तुति करता हूँ, **संवर्त्त** सवर्त्त नामक अग्नि की, **जननि** हे मातः, **महतीं** महत् शब्द से वाच्य संवर्त्ताग्नि स्वरूपा, **समयां** समया के, **यदालोके** दर्शन में, **लोकान्** भू आदि के, **दहति** सति जलाये जाने पर, **महति क्रोधकलिते** क्रोध से भरे हुये, **दयार्द्रा** कृपाविष्टा, **या दृष्टि** जो इष्टि का आलोक है, **शिशिरं** शीतल, **उपचारं रचयति** उपचार से उसे शान्त करती है ।

**पदयोजना का अर्थ**—हे मातः ! आपके स्वाधिष्ठान में रहने वाले संवर्त्ताग्नि का तथा वहाँ रहने वाली उस 'महती' नाम वाली 'समया' की मैं स्तुति करता हूँ । क्रोध से परिपूर्ण जिस महान् संवर्त्ताग्नि की शक्ति से भू आदि त्रिलोकी के जलाये जाने पर जिसकी महती दयार्द्रादृष्टि अत्यन्त शीतल उपचार से उसे शान्त करती है ऐसी है आपकी दयार्द्र दृष्टि ।

यहाँ यह विचारणीय है कि स्वाधिष्ठान अग्नितत्त्व की उत्पत्ति का स्थान है । वहाँ उत्पन्न हुई उस अग्नि में 'संवर्त्ताग्नि' (= प्रलय की अग्नि) का आरोप कर वहीं महा संवर्त्ताग्निज्वालाकार शक्तिरूपतया अवस्थित शक्ति भी सम्भावित है । जब उन दोनों के आलोक से जगत् जल जाता है तब उस जले हुये जगत् को भगवती की कृपापूर्ण दृष्टि मणिपूर में रहने वाले 'जलतत्त्व' से शान्त करती हैं । यह मात्र स्तुति है, वस्तुतत्त्व नहीं है ॥ ३९ ॥

**ध्यान—'त' । श्लोकस्थ वर्ण बीज 'त' का ध्यान—**

त— चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम् ।
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम् ॥
नानाऽलङ्कारभूषां तां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा तकारं तु मन्त्ररूपं सदा यजेत् ॥
तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा ॥
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम् ॥

**बाधानिवारक यन्त्र**

**बीजाक्षर**—'त'; जप-संख्या—१०००; जप स्थान—मणिपूरचक्र; होम—कल्हार कुसुम, मधु, पञ्चमेवा और शर्करा से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोकपाठसंख्या—१०; श्लोक पाठ आहुति—३ ।

**श्रीविद्यारहस्यार्थ**—उक्त ३९वें और ४०वें श्लोक को कुछ अदल-बदल कर अर्थ करना ठीक होगा । क्योंकि श्री शङ्कर भगवत्पाद ने स्वाधिष्ठान चक्र में अग्नितत्त्व और मणिपूर में जलतत्त्व का भाव कहा है । परन्तु योगाभ्यासी

को इससे विपरीत अनुभव होता है। वे मणिपूर में अग्नितत्त्व और स्वाधिष्ठान में जलतत्त्व के भाव का अनुभव करते हैं। अतः इन दोनों श्लोकों को निम्न रूप में रहस्यार्थ जानना चाहिए—

हे भगवति ! मणिपूर चक्र में अग्नितत्त्व के स्वामी भागवान् श्री सम्वर्त का स्थान है और श्री समयाम्वा उनके वाम भाग की शोभा बढ़ाती हैं। जब श्री संवर्त भगवान् अपनी क्रोधमयी दृष्टि से ब्रह्माण्डों का दहन करते हैं तब श्री समयाम्बा रूप से स्थित आप की दयार्द्र दृष्टि उन लोकों को शिशिरवत् ठण्डक पहुँचाती है। अतः आप श्री के सेवकों को प्रलयाग्नि भी शिशिर ऋतु में अग्निसेवनवत् सुखकर हो जाती है। श्री भगवान् सम्वर्तेश्वर-नाथ तथा श्री समयाम्वा की आराधना निम्न ६२ तैजस मयूखाओं सहित की जाती है।

**बासठ तैजस मयूखायें**—१. परापरा, २. चण्डेश्वरा, ३. परमा, ४. चतुष्मर्ता, ५. तत्परा, ६. गुह्यकाली, ७. उपरा, ८. सम्वर्ता, ९. चिदानन्दा, १०. नीलकुब्जा, ११. अघोरा, १२. गन्ध, १३. समररसा, १४. रसा, १५. ललिता, १६. समरा, १७. स्वच्छज्ञ, १८. स्पर्शा, १९. भूतेश्वरा, २०. शब्दा, २१. आनन्दा, २२. डाकिनी, २३. प्रभानन्दा, २४. आलस्या, २५. रत्नडाकिनी, २६. चक्रडाकिनी, २७. योगानन्दा, २८. पद्मडाकिनी, २९. अतीता, ३०. कुब्जडाकिनी, ३१. सादा, ३२. प्रचण्डाडाकिनी, ३३. योगेश्वरा, ३४. चण्डा, ३५. पीठेश्वरा, ३६. कोशला, ३७. कुलकोलेश्वरा, ३८. पावनी, ३९. कुक्षेश्वरा, ४०. समया, ४१. श्रीकण्ठा, ४२. कामा, ४३. अलल्लर, ४४. रेवती, ४५. शाङ्कग, ४६. ज्वाला, ४७. पिङ्गला, ४८. कराला, ४९. मदाख्या, ५०. कुब्जिका, ५१. करालरात्रिगुरु, ५२. परा, ५३. सिद्धगुरु, ५४. शान्त्यातीता, ५५. रत्नगुरु, ५६. शान्ता, ५७. शिवगुरु, ५८. विद्या, ५९. मेलगुरु, ६०. प्रतिष्ठा, ६१. समयागुरु, ६२. निवृत्ति ॥ ३९ ॥

**तडित्त्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया**
**स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम्**
**तव श्यामं मेघं कमपि मणिपूरैकशरणं**
**निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम् ॥ ४० ॥**

**लक्ष्मीधरा—तडित्त्वन्तं** तडित् सौदामिनी सा अस्यास्तीति तटित्त्वान् तं, **शक्त्या** तटिद्रूपा, **तिमिरपरिपन्थिस्फुरणया** तिमिरस्य मणिपूरगतस्य—मणिपूरचक्रं तामिस्रलोक इति प्रागुक्तः—तस्य परिपन्थि विरोधि स्फुरणं यस्यास्सा। अनेन स्थिरसौदामिनीत्वं भगवत्याः सूचितम्। इदमपि मेघस्य प्रावृषेण्यत्वसूचकं विशेषणम्। **स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषं** स्फुरन्ति च तानि रत्नानि नानाविधानि, तैः निर्मितानि आभरणानि भूषणानि, तैः परिणद्धं निर्मितं इन्द्रधनुः यस्य तम्। 'वा संज्ञायाम्' इति नानङ्। नानाविधरत्नकान्तिसंवलिता स्थिरसौदामिनी इन्द्रचापभ्रान्तिं जनयतीति प्रावृषेण्यत्वे हेत्वन्तरम्। यथोक्तं **सिद्धघुटिकायाम्**—

मणिपूरैकवसतिः प्रावृषेण्यः सदाशिवः।
अम्बुदात्मतया भाति स्थिरसौदामिनी शिवा ॥ इति ॥

**तव** भवत्याः, **श्यामं** श्यामवर्णं, **मेघं** मेघात्मना अवस्थितं पशुपतिं, **कमपि** इयत्तया निर्देष्टुमशक्यं, **मणिपूरैकशरणं** मणिपूरमेवं एकं शरणं गृहे यस्य तम् । मणिशब्देन मणिधनुरुच्यते, मणिधनुस्स्वरूपत्वात् भगवत्याः, तया पूर्यते शरणं मणिपूरमिति रहस्यम् । **निषेवे** नितरां सेवे । **वर्षन्तं** वृष्टिं कुर्वन्तं **हरमिहिरतप्तं** हर एव मिहिरः सूर्यः महासंवर्ताग्नि-रिति यावत्, तेन तप्तं दग्धं **त्रिभुवनम्** ।

**अत्रेत्थं पदयोजना**—हे भगवति! तव मणिपूरैकशरणम् तिमिरपरिपन्थिस्फुरणया शक्त्या तटित्वन्तं स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषं श्यामं हरमिहिरतप्तं त्रिभुवनं वर्षन्तं कमपि मेघं निषेवे ।

**अत्रेदमनुसन्धेयम्**—मणिपूरस्थाने जलतत्त्वं उत्पन्नमिति प्राक् प्रतिपादितम् । तत् प्रकारः—सूर्यकिरणा एव अग्निसम्भिन्नाः मेघत्वमापन्नाः जलरूपेणेति मणिपूरस्य आधार-स्वाधिष्ठानयोर्मध्ये निवेशः । अनाहतोपरि स्थितसूर्यकिरणाः स्वाधिष्ठानाग्निना संवलिताः सन्तः मणिपूरं प्रविश्य जलत्वमापन्नाः, तेन जलेन स्वाधिष्ठानाग्निना दग्धं जगत् आप्लव-यन्तीति आगमरहस्यम् । अत्र 'स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम्' इत्यनेन मौर्वीरहितं धनुरित्याहुः आगमविदः । तच्च श्रूयते **अरुणोपनिषदि**—

**तदिन्द्रधनुरित्यज्यम् । अभ्रवर्णेषु चक्षते ।**
**एतदेव शंयोर्बार्हस्पत्यस्य । एतद्रुद्रस्य धनुः ॥**

—इति । (तै०आ० १.५)

**अस्यार्थः**—रुद्रस्य मेघात्मकस्य, धनुः अज्यं ज्यया मौर्व्या रहितमिति । अवशिष्टानि श्रुतिस्थपदानि **सुभगोदयव्याख्याने** व्याख्यातानि । एतत्सर्वं **अरुणोपनिषदि** 'योऽपां पुष्पम्' (तै०आ० १.२२) इत्यनुवाके 'योऽपाम्' इत्यारभ्य 'इमे वै लोका अप्सु प्रतिष्ठिताः' इत्यन्तेन प्रतिपादितम् । उदकात् चन्द्रोत्पत्तिः सूर्योत्पत्तिः अग्न्युत्पत्तिश्च दिवसानां चन्द्रकला-त्मकानां तदंशानां नक्षत्राणां च उत्पत्तिः प्रतिपादिता तदनन्तरं सम्मतित्वेन ऋगप्युक्ता—

**तदेषाऽभ्युक्ता । अपाꣳ रसमुदयꣳ सन् ।**
**सूर्ये शुक्रꣳसमाभृतम् । अपाꣳ रसस्य यो**
**रसः । तं वो गृह्णाम्युत्तमम् ॥** इति (तै.सं० १.५.११)

**ऋचोऽयमर्थः**—अपां रसं चन्द्रं उदयंसन्, योगीश्वराः प्राप्नुवन्नित्यर्थः । सूर्ये सूर्य-मण्डले शुक्रं अमृतं, समाभृतं सम्यक् आसमन्तात्पूरितम् । चन्द्रमण्डलगलत्पीयूषधाराभिरेव सूर्यस्य निर्वाह इत्यर्थः । अपां रसस्य पुष्परूपस्य चन्द्रमसः, यो रसः बैन्दवस्थानस्थितः' नित्यकलात्मकः, ते नित्यकलात्मकं रसं वः युष्मत्सकाशात् । उदकानां प्रस्तुतत्वात् वः इति उदकानामाभिमुख्यं मणिपूरे उदकमुत्पन्नमिति । ता आपः स्वाधिष्ठानाग्नेः उत्पादिकाः, आज्ञाचक्रस्थितस्य चन्द्रस्य उत्पादिकाः, अनाहतचक्रोपरि स्थितसूर्यस्यापि उत्पादिकाः । अत उक्तं 'तं वो गृह्णाम्युत्तमम्' इति । तं उत्तमं चन्द्रं सहस्रकमलस्थितं वः सकाशात् जानामीत्यर्थः ॥

अस्मिन्नेव अनुवाके—

**योऽप्सु नावं प्रतिष्ठितां वेद । प्रत्येव तिष्ठति ।** (तै०आ० १.२२)

इति श्रुतम् । अप्सु उदकतत्त्वात्मके मणिपूरे प्रतिष्ठितां नावं श्रीचक्रात्मिकाम् ॥

तथा च श्रुत्यन्तरम्—

> सुत्रामाणं पृथिवीं द्यामनेहसꣳ सुशर्मा-
> णमदितिꣳ सुप्रणीतिम् । दैवीं नावꣳस्वरि-
> त्रामनागसमस्रवन्तीमारुहेमा स्वस्तये ॥ (तै०सं० १.५.११)

**अस्या ऋचोऽयमर्थः**—षुञ् अभिषवे । सुनोतीति सुत्रामा अग्निः अग्नितत्त्वं स्वाधिष्ठानगतमित्यर्थः, पृथिवीं मूलाधारस्थितां, द्यां गगनं विशुद्धिस्थितां, अनेहसं कालं मनस्तत्त्वं अज्ञाचक्रस्थितं, सुशर्माणं वायुतत्त्वं, अदितिं अदित्यात्मकं जलतत्त्वं, सुप्रणीतिं सुमार्गे मोक्षे प्रणीतिं प्रकर्षेण नयन्तीम् । दैवीं देव्या चक्रविद्यामित्यर्थः, नावं नौकां संसारसागरतरणोपायभूतां, स्वरित्रां सुदृढानि अरित्राणि लाङ्गलानि यस्याः सा तां, दुष्कर्मझञ्झापवनैः अचलमिति यावत् । अनागसं अस्रवन्तीं (अरन्ध्राम्) स्वयं दृढां आरुहेम तत्प्रवणा भवेम तदेकनिरताः तदुपासनपराः स्यामेत्यर्थः । स्वस्तये मोक्षाय, निरतिशयसुखावाप्तय इति । अवशिष्टं श्रुतिजातं **सुभगोदयव्याख्यानावसरे** सम्यक् निरूपितमस्माभिः ॥ ४० ॥

## * सरला *

**तडित्वन्तमिति** । **तडित्वन्तं** तडित् सौदामिनी जिसमें रहती है वह हुआ तडित्वान् उसका, **शक्त्या** तडिद्रूपा शक्ति से, **तिमिरपरिपन्थिस्फुरणया** तिमिरस्य = मणिपूर में रहने वाला मणिपूर चक्र—तामिस्र लोक है यह बात पहले कह आये हैं, तस्य परिपन्थि = उस घने अन्धकार को नष्ट करने के लिये स्फुरण है जिसका, इससे भगवती को स्थिर सौदामिनी के रूप में कहा गया है, यह मेघ का जो वर्षाकाल का सूचक है उसका विशेषण है । **स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषं** देदीप्यमान अनेक रत्नों से बने हुये आभूषणों से निर्मित इन्द्र धनुष है जिसका, यहाँ अनङ् की प्रवृत्ति 'वा संज्ञायाम्' इस सूत्र से विकल्प होने के कारण नहीं हुई है । वह स्थिरसौदामिनी इन्द्र धनुष की भ्रान्ति उत्पन्न करती है । इसलिये वर्षाकालीन मेघ के होने में यह दूसरा हेतु कहा गया है । पहले स्थिरसौदामिनी यह हेतु कहा जा चुका है जैसा कि सिद्धघुटिका में कहा गया है—

मणिपूर में निवास करने वाले सदाशिव प्रावृट् काल के बादल हैं और उसमें जलात्मक स्थिरसौदामिनी शिवा हैं ।

**तव** उस आप की, **श्यामं** श्याम वर्ण वाले, **मेघं** मेघ रूप से स्थित पशुपति को, **कमपि** जिन्हें 'इस प्रकार के हैं' इस रूप से निर्देश नहीं किया जा सकता, **मणिपूरैकशरणं** मणिपूर ही जिनका एकमात्र निवास स्थान है । यहाँ मणि शब्द से मणिधनु कहा गया है क्योंकि भगवती स्वयं ही मणिधनुःस्वरूपा हैं, मणि से जिनका घर परिपूर्ण है वह है 'मणिपूर' ऐसा यहाँ रहस्य है । **निषेवे** निरन्तर सेवा करता हूँ, **वर्षन्तं** वृष्टि करते हुये, **हरमिहिरतप्तं** शिव रूप महासंवर्त्ताग्नि से संतप्त दग्ध, **त्रिभुवनम्** इस त्रिभुवन को ।

**पदयोजना का अर्थ**—हे भगवति ! मणिपूर में निवास करने वाले अन्धकार की प्रतिबन्धिका चमकती हुई शक्ति वाली स्थिरसौदामिनी से युक्त, देदीप्यमान नाना रत्नों से

निर्मित आभूषणों वाले, इन्द्र धनुष के समान श्याम वर्ण वाले और शिवरूप सूर्य से संतप्त त्रिभुवन में वर्षा करने वाले किसी अनिर्वचनीय मेघ की मैं उपासना करता हूँ।

यहाँ यह समझ लेना चाहिए कि मणिपूर स्थान में जल की उत्पत्ति है। यह बात पहले कही जा चुकी है वह इस प्रकार है—सूर्य किरण ही अग्नि से मिलकर मेघ बन जाते हैं। जल रूप होने से मणिपूर का आधार और अधिष्ठान के मध्य में सन्निवेश हैं, अनाहत चक्र पर रहने वाली सूर्य की किरणें स्वाधिष्ठान में रहने वाली अग्नि के संयोग से मणिपूर में प्रविष्ट हो कर जल का रूप धारण कर लेती हैं और उसी जल से भगवती स्वाधिष्ठान की अग्नि से जले हुये जगत् को आप्लावित करती हैं। यहाँ वही आगम रहस्य का प्रतिपादन किया गया है। आगमशास्त्र के वेत्ताओं ने यहाँ 'स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम्; को मौर्वीरहित बताया है। जैसा कि **अरुणोपनिषद्** में कहा गया है तदिति।

इसका अर्थ इस प्रकार जानना चाहिए। **तदिति**—उस मेघात्मक रुद्र का धनुष् अज्या एवं मौर्वीरहित है यहाँ के शेष श्रुतियों के पद की व्याख्या **सुभगोदय** में की गई हैं। यह सब बातें **अरुणोपनिषद्** में 'योऽपां पुष्पं' इस अनुवाक में 'योऽपां' यहाँ से आरम्भ कर 'इमे वैं लोका अप्सु प्रतिष्ठिता: यहाँ तक की श्रुतियों में प्रतिपादित हैं। जल से चन्द्रमा की उत्पत्ति, सूर्य की उत्पत्ति और अग्नि की उत्पत्ति, दिन चन्द्र कलाएँ तथा उनके अंशों की एवं नक्षत्रों की उत्पत्ति भी वहीं बताई गयी है। उसको सिद्ध करने के लिये वहाँ श्रुतियों की ऋचाएँ भी कही गई हैं। तदेषेति—

इन ऋचाओं का अर्थ इस प्रकार है—जल के रसभूत उदीयमान चन्द्रमा को योगीश्वरों ने प्राप्त किया। सूर्ये = सूर्यमण्डल में रहने वाले, शुक्रं = अमृत तत्त्व को जो वहाँ चारों ओर से परिपूर्ण है। इसका अर्थ यह है कि चन्द्रमण्डल की गिरती हुई अमृतधारा से सूर्य का निर्वाह होता है, जल के रसभूत पुष्परस वाले चन्द्रमा का जो रस बैन्दवस्थान में स्थित है वह नित्यकलात्मक है उस नित्यकलात्मक रस को आप के सन्निधान (द्वारा) जानता हूँ। वह उदक रूप रस मणिपूर में उत्पन्न हुआ है। वही जल स्वाधिष्ठान में रहने वाली अग्नि का उत्पादक है। आज्ञाचक्र में स्थित चन्द्रमा का उत्पादक है तथा अनाहत चक्र के ऊपर रहने वाले सूर्य का भी उत्पादक है। इसके बाद कहते हैं 'तं वो गृहणाम्युत्तनम्' उस उत्तमचन्द्रमा को जो सहस्रदल कमल पर स्थित है उसे आप के द्वारा जानता हूँ।

पुनः इसी अनुवाक के प्रसङ्ग में यो अप्स्विति यह श्रुति हैं। अप्सु = उदक तत्त्वात्मक मणिपूर में, वह श्री चक्रात्मक नाव प्रतिष्ठित है।

जैसा कि अन्य श्रुतियों में कहा गया है—**सुत्रामाणं पृथ्वीमिति**। इसका **अर्थ**—षुञ् अभिषवे सुनोतीति सुत्रामा = अग्नि अर्थात् स्वाधिष्ठान में रहने वाला अग्नितत्त्व। पृथिवीं = मूलाधार में रहने वाली पृथ्वीतत्त्व। द्याम् = विशुद्धि चक्र में स्थित गगन (आकाशतत्त्व)। अनेहसं = काल मनस्तत्त्व जो आज्ञाचक्र में स्थित है। सुशर्माणं = वायु तत्त्व, अदितिं = जलतत्त्व, सुप्रणीतिं = सुप्रणीति सुमार्ग अर्थात् मोक्ष मार्ग में प्रणीति अर्थात् प्रकर्ष रूप से ले जाती हुई, देवी = देवी सम्बन्धिनी अर्थात् चक्रविद्या को, नावं = नौका जो संसारसागर के पार करने की उपायभूता है स्वरित्राम् = जिसमें अत्यन्त सुदृढ़ डाँड़े लगे हुये हैं। जिसके कारण दुष्कर्म रूप झञ्झावात से वह डूब नहीं सकती। अनागसम् = सर्वथा उपद्रव रहित।

अस्रवन्ती आरुहेम = ऐसी दृढ़ नाव पर हमें स्वयं आरोहण करना चाहिए अर्थात् उसकी उपासना में संलग्न रहना चाहिए, स्वस्तये = मोक्ष के लिये एवं निरतिशय सुख की प्राप्ति के लिये । अवशिष्ट श्रुतियों का व्याख्यान **सुभगोदय** की व्याख्या के अवसर पर भलीभाँति निरूपण करेंगे ।

**ध्यान—'त' । श्लोकस्थ वर्ण बीज 'त' का ध्यान—**

**त—** चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम् ।
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम् ॥
नानाऽलङ्कारभूषां तां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा तकारं तु मन्त्ररूपं सदा यजेत् ॥
तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा ॥
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम् ॥

**अभीष्टलक्ष्मीप्राप्ति यन्त्र**

ठं

**बीजाक्षर**—'त'; जप-संख्या—१०००; जप-स्थान—मणिपूरचक्र; होम—कल्हार कुसुम, मधु, पञ्चमेवा और शर्करा से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—३ ।

**श्रीविद्यारहस्यार्थ**—हे भगवति ! मैं आपके उस स्वरूप की बारम्बार वन्दना करता हुआ आराधना करता हूँ, जो श्याम मेघवत् है और आप के स्वाधिष्ठान चक्र में जो सदा निवास करता है तथा जिसमें शक्तिरूपा ऐसी विद्युत् चमकती हैं, जिसकी स्फुरणा तिमिरहारिणी है । श्री महाकुण्डलिनी के सिर पर जटित दिव्य रत्नों का प्रकाश उस स्थान में दिव्य इन्द्रधनुषवत् चमक रहा है और वहाँ से अग्नि-सूर्य-प्रतप्त त्रिभुवन पर अमृत की धारा बरसती है ।

यहाँ के देवता श्री भगवान् मेघेश्वरनाथ और श्री अमृतेश्वर्यम्बा हैं । इनकी आराधना ५२ आप्यमयूखाओं सहित की जाती है ।

**बावन आप्य मयूखायें**—१. सद्योजाता, २. माया, ३. वामदेवा, ४. श्री, ५. अघोरा, ६. पद्मा, ७. तत्पुरुषा, ८. अम्बिका, ९. अनन्ता, १०. निवृत्ति, ११. अनाथा, १२. प्रतिष्ठा, १३. जनाश्रिता, १४. विद्या, १५. अचिन्त्या, १६. शान्ता, १७. शशिशेखरा, १८. उमा, १९. तीक्ष्णा, २०. गङ्गा, २१. मणिवाहा, २२. सरस्वती, २३. अम्बुवाहा, २४. कमला, २५. तेजोधीरा, २६. पार्वती, २७. विद्यावागीश्वरा, २८. चित्रा, २९. चतुर्विधेश्वरा, ३०. सुकमला, ३१. उमागङ्गेश्वरा, ३२. मन्मथा, ३३. कृष्णेश्वरा, ३४. श्रेया, ३५. श्री कान्ता, ३६. लया, ३७. अनन्ता, ३८. सती, ३९. शङ्करा, ४०. रत्नमेखला, ४१. पिङ्गला, ४२. यशोवती, ४३. साध्याख्या, ४४. हंसानन्दा, ४५. परदिव्यायुगा, ४६. वामा, ४७. मारदिव्यायुगा, ४८. ज्येष्ठा, ४९. पीठायुगा, ५०. रौद्री, ५१. सर्वेश्वरा, ५२. सर्वमयी । ये जलतत्त्व की बावन मयूखायें हैं ॥ ४० ॥

**तवाधारे मूले सह समयया लास्यपरया**
**नवात्मानं मन्ये नवरसमहाताण्डवनटम् ।**
**उभाभ्यामेताभ्यामुदयविधिमुद्दिश्य दयया**
**सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ॥ ४१ ॥**

**लक्ष्मीधरा**—**तव** भवत्याः, **आधारे** (आधारचक्रे) **मूले** मूलाधारचक्र इत्यर्थः । **सह** साकं, **समयया** समयसंज्ञया, **लास्यपरया** लास्ये नृत्ये परं तात्पर्यं यस्याः तया । स्त्रीकर्तृकं नृत्यं लास्यमित्युच्यते । **नवात्मानं** आनन्दभैरवं, **मन्ये** जानामि । **नवरसमहाताण्डवनटं** नवभिः शृङ्गारादिभिः रसैः महत् अद्भुतं ताण्डवं—पुंकर्तृकं नृत्यं ताण्डवमित्युच्यते—तत्र नटं अभिनेतारम् । **उभाभ्यां एताभ्यां** आनन्दभैरवीमहाभैरवाभ्यां, **उदयविधिं** (जगद्) उत्पत्तिं **उद्दिश्य** । कुत इत्याह—**दययेति** । दग्धलोकस्य पुनरुत्पादननिमित्तं **दयया सनाथाभ्यां** मिलिताभ्यां, **जज्ञे** उत्पन्नम् । **जनकजननीमत्** मातापितृमत्, **जगत्** प्रपञ्चं **इदं** पूर्वोक्तम् । लास्यनाट्यसंविधानप्रतिपादनात् प्रकृतिपुरुषयोः दर्शने जगदुत्पत्तिः । लास्यनृत्तावसानमेव जगत्संहृतिरिति कौलसिद्धान्तः ।

**अत्रेत्थं पदयोजना**—हे भगवति! तव मूले आधारे लास्यपरया समयया सह नवरस-महाताण्डवनटं नवात्मानं मन्ये । उदयविधिमुद्दिश्य एताभ्यां उभाभ्यां दयया सनाथाभ्यां इदं जगत् जनकजननीमत् जज्ञे ।

**अयं भावः**—आधारस्वाधिष्ठानयोः तामिस्रलोकत्वात्, तत्र कौलानां अधिकारात् समयिनां आराधनाभावेऽपि स्वमतानुसारेण सहस्रकमले निषेव्यैव भगवती आधारस्वाधिष्ठा-नयोः सेव्येति महाभैरवी समयापदेन उच्यत इति ।

**अत्रेदमनुसन्धेयम्**—आधारचक्रं त्रिकोणम्, आधारे विन्दुः तिष्ठतीति च तावत् प्रसि-द्धम् । अत्र कौलमते त्रिकोणमेव बिन्दुस्थानम् । स एव बिन्दुः तत्र आराध्यः । अत एव कौलाः त्रिकोणे बिन्दुं नित्यं समर्चयन्ति । तत् त्रिकोणं द्विविधं, श्रीचक्रान्तर्गतनव-योनिमध्यवर्तिनी योनिः, सुन्दर्याः तरुण्याः प्रत्यक्षयोनिश्च । श्रीचक्रस्थितनवयोनिमध्य-गतयोनिं भूर्जहेम-पट्टवस्त्रपीठादौ लिखितां पूर्वकौलाः पूजयन्ति । तरुण्याः प्रत्यक्षयोनिं उत्तरकौलाः पूजयन्ति । उभयं योनिद्वयं बाह्यमेव, न आन्तरम् । अतः तेषां आधारचक्रमेव पूज्यम् । तत्र स्थिता कुण्डलिनी शक्तिः कौलिनी इत्युच्यते । सैव उपास्या त्रिकोणपूजकानां इति रहस्यम् । एषा कुण्डलिनी शक्तिः बिन्दुरूपिणी निद्राणैव सम्पूज्या, तस्याः सदा निद्राणस्वाभाव्यात् । सा पूजा तामिस्रा । कुण्डलिनीप्रबोधो यदा स्यात्, तत्क्षणमेव मुक्तिः कौलानाम् । अत एव क्षणमुक्ताः कौला इति व्यवहारः[१] । तत्र सुरामांसमधुमत्स्यादिद्रव्यैः समाराधनं वामाचारप्रवृत्त्या । प्रत्यक्षत्रिकोणे बिन्दुस्थानं मन्मथच्छत्रं कृत्वा सम्पूजयन्ति, अधोमुखं त्रिकोणं अधोमुखमेव छत्रं पूजयन्ति । दिगम्बरक्षपणकादयस्तु स्त्रियं उत्तानां कृत्वा ऊर्ध्वं त्रिकोणं पूजयन्तीति रहस्यम् । अत्र बहु वक्तव्यमस्ति; तत्तु अवैदिकमार्गत्वात्

---

१. 'तस्मात् कौलानां त्रिकोणे आनन्दभैरवीमहाभैरवौ सम्पूज्यौ । साधकानां ताभ्यां तादात्म्ये-नावस्थानम् । अत एव कौलाः बिन्दुपूजावसरे भैरवाकारं दिगम्बरत्वमाश्रित्य समर्चयन्ति स्त्री पुरुषाः' अधिकोऽयं पाठः ।

स्मरणार्हमपि न भवति । तथापि दिङ्मात्रं निषेध्यत्वेन समयमतमार्गप्रदर्शनोपयोगितया उक्तमिति अलं विस्तरेण ।

**अत्र समयिमतं निरूप्यते**—त्रिकोणादिषट्चक्रं आधारदिषट्चक्रात्मना परिणतमिति प्रागेव प्रतिपादितम् । तत्र श्रीचक्रे त्रिकोणं बैन्दवस्थानमिति तावत् सुप्रसिद्धम् । तत्र त्रिकोणत्रयेण अष्टकोणनिर्माणे त्रिकोणादेव बिन्दुस्थानं भवति । तच्च चतुष्कोणमेव । तत्तु सहस्रकमलान्तर्गतं चन्द्रमण्डलमिति पूर्वमेव बहुधा प्रपञ्चितम् । एतत् चतुष्कोणमध्यं बैन्दवस्थान 'सुधासिन्धु' (श्लोक ८) 'सरघा' इति बहुधा प्रपञ्चितं पूर्वमेव । एतत् चतुष्कोणमध्यं बिन्दुस्थानमिति बाह्यपूजा तरुणीत्रिकोणपूजा च दूरत एव निरस्तेति ध्येयम् । अत एव समयिनां सहस्रकमले समयायाः समयस्य च शम्भोः पूजा । समया नामशम्भुना साम्यं पञ्चविधं यातीति समया । 'समयत्वं शम्भोरपि पञ्चविधं साम्यं देव्या सह यातीति । अतः उभयोः समप्राधान्येनैव साम्यं विज्ञेयम् । पञ्चविधसाम्यं तु—अधिष्ठानसाम्यं, अवस्थानसाम्यं, अनुष्ठानसाम्यं, रूपसाम्यं, नामसाम्यं चेति पञ्चविधं समप्रधानयोरेव शिवयोः । यथा—'तवाधारे' (श्लोक ४१) इति अधिष्ठानसाम्यमुक्तम्, उभयोः आधारचक्रस्य अधिष्ठानरूपत्वात् । अनुष्ठान साम्यं 'जनकजननीमज्जगदिदम्' (श्लोक ४१) इत्यनेन प्रतिपादितम्, उत्पादनक्रियायां उभयोः व्याप्रियमाणत्वात् । अवस्थानसाम्यं लास्यताण्डवशब्दाभ्यां प्रतिपादितम् । लास्यताण्डवयोः नृत्यरूपेण एकत्वं उक्तं प्राक् । रूपसाम्यं तु आरुण्यं उभयोः तन्त्रान्तरसिद्धम्—

**जपाकुसुमसङ्काशौ मदघूर्णितलोचनौ ।**
**जगतः पितरौ वन्दे भैरवीभैरवात्मकौ ॥** इति ॥

यद्वा—**नवात्मानमिति** रूपसाम्यं नामसाम्यं च प्रतिपादितमिति ध्येयम् । एवमेव इतरत्रापि ऊह्यम् । यथा—'तटित्त्वन्तम्' इत्यादौ तटित्त्वान् तटित्त्वती इति **नामरूपसाम्ये** । यद्यपि स्थिरसौदामिनीरूपायाः तटिद्रूपत्वात् तद्वत्त्वं नास्ति, तथापि सौदामिन्याः स्थिरत्वमेव सर्वदा तटिद्युक्तत्वमिति तटित्त्वतीति उक्तिः युक्ता इति अनुसन्धेयम् । मणिपूरस्थानं अधिष्ठानमिति 'मणिपूरैकशरणं' इत्यनेन **अधिष्ठानसाम्यम् उक्तम्** । 'स्फुरन्नानारत्नाभरण—परिणद्धेन्द्रधनुषम्' इत्यनेन 'वर्षन्तं' इत्यनेन च प्रावृषेण्यत्वावस्थानसाम्यं प्रतिपादितम्' । 'तव स्वाधिष्ठाने' इत्यादिश्लोके 'स्वाधिष्ठाने' इत्यनेन **अधिष्ठानसाम्यम्** उक्तम् । 'महती' इत्यनेन महासंवर्तात्मकरूपनामसाम्ये प्रतिपादिते । स्वाधिष्ठानगताग्निसंश्रयणं **अवस्थानसाम्यम्** । लोकान् दहतीति अनुष्ठानसाम्यं प्रतिपादितम् । अनाहतचक्रे अनाहतं अधिष्ठानमिति **अधिष्ठानसाम्यम्** उक्तम् । हुतभुक्कणिकारूपतया **रूपसाम्यं नामसाम्यं** च । निवातदीपत्वोक्त्या **अवस्थानसाम्यम्** । वायुतत्त्वोत्पादकत्वं **अनुष्ठानसाम्यमिति** रहस्यम् । विशुद्धिचक्रं अधिष्ठानमिति **अधिष्ठानसाम्यं** उक्तम् । 'शुद्धस्फटिकविशदं' इत्यनेन **रूपसाम्यं** उक्तम् । 'व्योमजनकं इत्यनेन **अनुष्ठानसाम्यं** उक्तम् । 'शिवं सेवे' इत्यनेन **नामसाम्यम्** । 'शशिकिरणसारूप्यसरणेः' इत्यनेन **अवस्थानसाम्यमिति** । 'तवाज्ञाचक्रस्थं' इत्यनेन **अधिष्ठानसाम्यम्** उक्तम् । 'तपनशशिकोटिद्युतिधरं' इत्यनेन **रूपसाम्यम्** उक्तम् । 'परं शम्भुं' इत्यनेन **नामसाम्यम्** उक्तम् । 'यमाराध्यन् भक्त्या' इत्यनेन **अवस्थानसाम्यम्** उक्तम् । मुक्तिप्रदत्वमनुष्ठानसाम्यमिति साम्यपञ्चकं विज्ञेयम् । एतत् अतिरहस्यं शिष्यानुजिघृक्षया प्रकाशितम् ।

अतः समयपूजकाः समयिनः । तेषां षट्चक्रपूजा न नियता, अपि तु सहस्रकमल एव पूजा । सहस्रकमलपूजा नाम सहस्रकमलस्य बैन्दवस्थानत्वेन तन्मध्यगतचन्द्रमण्डलस्य चतुरश्रात्मना, तन्मध्यबिन्दोः पञ्चविंशतितत्त्वातीतषड्विंशात्मकशिवशक्तिमेलनरूपसादाख्यात्मना च अनुसन्धानम् । अत एव समयिमते बाह्याराधनं दूरत एव निरस्तम् । षोडशोपचाररूपपूजाङ्गकलापश्च ततोऽपि दूरत एव ।

तथा हि—आधारादिषट्चक्राणां त्रिकोणादिषट्चक्रत्वेन तादात्म्यम्, बिन्दुस्थानस्य चतुरश्रसहस्रकमलत्वेन तादात्म्यं बिन्दुशिवयोस्तादात्म्यम्, एवं देवी शिवयोस्तादात्म्यमिति तादात्म्यत्रयम् । चक्रमन्त्रयोः ऐक्यं पूर्वमेवोक्तमिति, तेन सह चतुर्धा ऐक्यं समयिनां समयाराधनमिति महत्रहस्यम् ॥

**अत्र किञ्चित् उच्यते**—समयिनां चतुर्विधैक्यानुसन्धानमेव भगवत्याः समाराधनमित्येतत् सर्वसम्मतम् । केचित्तु षोढा ऐक्यमाहुः । यथा—नादबिन्दुकलातीतं भागवतं तत्त्वमिति सर्वागमरहस्यम् । नादः परापश्यन्तीमध्यमाबैखरीरूपेण चतुर्विधः इति प्रागेवोक्तम् । परा = त्रिकोणात्मिका, पश्यन्ती = अष्टकोणचक्ररूपिणी, मध्यमा = द्विदशाररूपिणी, बैखरी = चतुर्दशाररूपिणी । शिवचक्राणां अत्रैव अन्तर्भावः प्रतिपादित इति चतुश्चक्रात्मकं श्रीचक्रं नादशब्दवाच्यम् । बिन्दुर्नाम षट्चक्राणि मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्ध्याज्ञात्मकानि बिन्दुशब्दवाच्यानि पूर्वमेव उक्तानि । कलाः पञ्चाशत्, षष्ट्युत्तरत्रिशतसंख्याका वा । एवं नादबिन्दुकलातीता भगवतीति । सहस्रकमलं बिन्द्वतीतं बैन्दवस्थानात्मकं सुधासिन्ध्वपरपर्यायं सरघाशब्दवाच्यम् । नादातीततत्त्वं तु त्रिपुरसुन्दर्यादिशब्दाभिधेयम् 'दर्शा दृष्टा दर्शता' इत्याद्यपरपर्याय 'क ए ई ल ह्रीं' इत्यादि मन्त्रवर्णनामक पञ्चाशद्वर्णात्मक षष्ट्युत्तरत्रिशतसङ्ख्यापरिगणितमहाकालात्मक पञ्चदशकलातीता सादाख्या श्रीविद्यापरपर्याया चित्कलाशब्दवाच्या ब्रह्मविद्यापरपर्याया भगवती नादबिन्दुकलातीतं भागवतं तत्त्वमिति तत्त्वविद्रहस्यम् । अत्र नादबिन्दुकलानां परस्परैक्यानुसन्धानं षोढा भवतीति षोढा ऐक्यमाहुः । एवं भगवतीं षड्विधैक्येन सम्भाव्य पूजयित्वा सादाख्यायां विलीनो भवति । तदनन्तरं षड्विधैक्यानुसन्धानमहिम्ना गुरुकटाक्षसञ्जातमहावेधमहिम्ना च भगवती झडिति मूलाधारस्वाधिष्ठानात्मकचक्रद्वयं भित्वा मणिपूरे प्रत्यक्षं प्रतिभाति । **महावेधप्रकारः**—पूर्वं अभ्यासदशायां गुर्वेकपरतन्त्रः महाविद्यां गुरुमुखादेव स्वीकृत्य ऋषिच्छन्दोदेवतापूर्वकं मूलमन्त्रस्य शुष्कजपं गुरूपदिष्टमार्गेण कुर्वन् आश्वयुजशुक्लपक्षे महानवमीशब्दाभिधेया-ष्टम्यां निशीथसमये गुरोः पदोपसङ्ग्रहणं कर्तव्यम् । तन्महिम्ना गुरोः तदानीं कर्त्तव्यहस्त-मस्तकसंयोगपुनर्मन्त्रोपदेशषट्चक्रपूजाप्रकारोपदेशषड्विधैक्यानुसन्धानोपदेशवशात् महावेधः शैवः सादाख्यायाः प्रकाशरूपो जायते इति गुरुरहस्यम् ।

एवं महावेधे जाते भगवती मणिपूरे प्रत्यक्षा भवति । सा समाराध्या । अर्घ्यपाद्यादिभूषणप्रतिपादनपर्यन्तं पूजाकलापं मणिपूरे निर्वर्त्य अनाहतमन्दिरं भगवतीं नीत्वा, धूपादिनैवेद्यहस्तप्रक्षालनान्तं कर्मकलापं तत्रैव समाप्य, विशुद्धौ भगवतीं सिंहासनासीनां सखीभिः सल्लापात् सम्भाषमाणां शुद्धस्फटिकसदृशैः मणिभिः पूजयेत् । शुद्धस्फटिकसदृशमणयो न मौक्तिकादयः, किन्तु तदीयषोडशदलगतषोडशचन्द्रकला इति रहस्यम् । एवं सम्पूज्य आज्ञाचक्रं नीत्वा देवीं कामेश्वरीं नीरा जनविधिभिः अनेकैः सम्प्रीणयेत् । अत एव उक्तं **कर्णावतंसस्तुतौ** मदीयायाम्—

**आज्ञात्मकद्विदलपद्मगते तदानीं**
**विद्युन्निभे रविशशिप्रयतोत्कटाभे ।**
**गण्डस्थलप्रतिफलत्करदीपजाल-**
**कर्णावतंसकलिके कमलायताक्षि ॥ इति ॥**

एतमाज्ञाचक्रे नीराजनविधिं कृत्वा सम्प्रीणयेत् । तदनन्तरं झडिति विद्युल्लतेव सहस्र-कमलं अनुप्रविष्टा सुधाब्धौ पञ्चकल्पतरुच्छायायां मणिद्वीपे सरघामध्ये सदाशिवेन सार्धं विहरमाणा वर्तते । तदा तिरस्करिणीं प्रसार्य समीपे मन्दिरे स्वयं निवसेत् । यावत् भगवती विनिर्गता पुनः मूलाधारकुण्डं प्रविशति तावत्पर्यन्तं स्थातव्यमिति समयमततत्त्वरहस्यम् ।

अत्र शङ्करभगवत्पादानां चतुर्विधैक्यानुसन्धानानन्तरं मणिपूरे प्रत्यक्षायाः भगवत्याः स्वरूपं 'क्वणत्काञ्चीदामा' इत्यादिध्यानप्रतिपादितं चतुर्भुजं धनुर्बाणपाशाङ्कुशयुक्तरहस्यम् । तन्मतानुसारिणामपि तथैव प्रतिभाति भगवती ।

अस्माकं तु षड्विधैक्यानुसन्धानानन्तरं मूलाधारद्विकं भित्वा मणिपूरे प्रसन्ना भगवती दशभुजा धनुर्बाणपाशाङ्कुशवरदाभयपुस्तकाक्षमालवीणाहस्ता मन्मतैकदेशिनाम्, पाशाङ्कुश-पुण्ड्रेक्षुचापपुष्पबाणजपमालिकाशुकाभयवरदकरा करद्वयवक्षस्स्थलस्थापितवीणा । उभय-मस्माकं सम्मतमेव । **कर्णावतंसस्तुतौ** मदीयायाम्—

**भवानि श्रीहस्तैर्वहसि फणिपाशं सृणिमथो**
**धनुः पौण्ड्रं पौष्पं शरमथ जपस्रक्शुकवरम् ।**
**अथ द्वाभ्यां मुद्रामभयवरदानैकरसिके**
**क्वणद्वीणां द्वाभ्यामुरसि च कराभ्यां च बिभृषे ॥**

समयिनां प्रत्यक्षं परिदृश्यमाना आस्ते भगवती । समयिनां सहस्रकमलपर्यन्तं आन्तरपूजा कर्तव्या । सहस्रकमले तु तिरस्करिणीप्रसारणपर्यन्तं दर्शनमेव समाराधनम् । यदुक्तं **सुभगोदये—**

**सूर्यमण्डलमध्यस्थां देवीं त्रिपुरसुन्दरीम् ।**
**पाशाङ्कुशधनुर्बाणहस्तां ध्यायेत्सुसाधकः ॥**
**त्रैलोक्यं मोहयेदाशु वरनारीगणैर्युतम् ॥ इति ।**

**चर्चास्तोत्रे**ऽपि कालिदासकृते—

**ये चिन्तयन्त्यरुणमण्डलमध्यवर्ति**
**रूपं तवाम्ब नवयावकपङ्करम्यम् ।**
**तेषां सदैव कुसुमायुधबाणभिन्न-**
**वक्षस्स्थला मृगदृशो वशगा भवन्ति ॥ इति ।**

अत्र समयिनां बाह्यपूजानिषेधात् सूर्यमण्डलान्तर्गतत्वेन पूजनं निषिद्धमित्याहुः । तत्र, ब्रह्माण्डस्थितपिण्डाण्डस्थितचन्द्रसूर्ययोः ऐक्यात् सूर्यस्य चन्द्रकलामृतनिष्यन्दवशात् उज्जी-वनात् । यतः **'अपां रसमुदयंसन्'** (तै०आ० १-२२) इत्यादिश्रुत्या प्रतिपादितमिति प्राक् प्रतिपादितम्, अतः चन्द्रकलाविद्यायाः सूर्यसम्पर्कात् तेजस्तिरोधानं स्यादिति केचन सङ्गि-रन्ते; तदपि अपास्तं वेदितव्यम् । अत एव पिण्डाण्डब्रह्माण्डचन्द्रयोरैकयात् चन्द्रमण्डला-

न्तर्गतत्वेन चन्द्रकलाविद्यायाः पूजनं युज्यते । यत्तु पूर्वोक्तं चन्द्रबिम्बगतत्वेन देव्याः पूजननिषेध वचनं, तत्तु आन्तरचन्द्रस्य आज्ञाचक्रोपरि स्थितस्य सहस्रकमलान्तर्गतचन्द्रकलामृतनिष्यन्दैः उज्जीवनमिति तत्र तस्याः पूजानिर्बन्धो नास्तीति, अत एव पिण्डाण्डब्रह्माण्डचन्द्रयोरैक्यात् ब्रह्माण्डस्थितचन्द्रमण्डलेऽपि पूजानिर्बन्धो नास्तीत्येवं परम् ।

एवं हृदयकमल एव समाराधिता भगवती ऐहिकानि फलानि सर्वाणि ददाति । यदा वशिन्यादियुक्ता ध्याता सारस्वतं ददाति । यावकरसाप्लुता ध्याता वशीकरणं ददाति । 'मुखं बिन्दुं कृत्वा' इत्यादिना ध्याता तादृशं फलं ददाति । हृदयकमले एव होमादिकं तर्पणादिकं च कार्य ऐहिकफलसाधनमिति 'स्मरं योनिं लक्ष्मीम्' (३३) इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादितम् । अतः समयिनां ऐहिकामुष्मिकफलसाधनोपायः आन्तरपूजेति समयमततत्त्वम् ।

अत्र भगवत्पादैः आधारकमलादिक्रमं विहाय आज्ञाचक्रादिक्रमेण अवरोहक्रमेण पूजाप्रकारः कथितः । अयमाशयः—**'आत्मन आकाशस्सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी'** (तै०उ० २-१) । इति श्रौतक्रममवलम्ब्य अवरोहक्रम उक्तः । अत एव स्वाधिष्ठानानन्तरभाविनः मणिपूरस्य तदधःप्रदेशे निरूपणं युज्यते । आधारस्वाधिष्ठानानन्तरं मणिपूरकावस्थानमिति सर्वयोगशास्त्रसिद्धम् । तदपि संवर्ताग्निदग्धस्य जगतः उज्जीवनानन्तरं उत्पत्तिं वक्तुमित्यवगन्तव्यम् । एतच्च **शुकसंहितायां** 'शृणु देवि प्रवक्ष्यामि' इत्यारभ्य एकनवतिश्लोकैः, श्रीचक्रस्य षट्चक्राणि प्रस्तुत्य 'इदानीं सम्प्रवक्ष्यामि' इत्यारभ्य सार्धशत्या श्लोकैश्च सप्रपञ्चं प्रतिपादितम् । तत् तत एवावधार्यम् ।

न च **'ऊर्ध्वमूलमवाक्छाखं वृक्षं यो वेद सम्प्रति'** तै०आ० १-११ । इति श्रुतेः देहरूपवृक्षस्य शिर एव मूलं, करचरणाद्यवयवाश्शाखाः, अतश्च षट्कमलानां कदलीकुसुमोपमानानां अधोमुखानां अवरोहक्रमेण कमलान्युक्तानीति तत्र पूजा सुकरेति तदानुगुण्येन भगवत्पादैरुक्तमिति वाच्यम्; तादात्म्यध्यानव्यतिरेकेण पूजायाः असम्भवात् । सम्भवे वा श्रीचक्रगतत्रिकोणादिषट्चक्राणां अधोमुखत्वाभावात्, 'मूलाधारस्थितामेव देवीं सुप्तां प्रबोधयेत्' इति ।

तत्रैव प्रबोधनियमात्, मूलाधारादिक्रमेणैव पूजा समयिनां कौलादीनां च कार्येति परमगुरुमुखादेव अवगतं रहस्यम् । **वामकेश्वरतन्त्रे** आत्मपूजायां विशेष उक्तः—

**पाशाङ्कुशौ तदीयौ तु रागद्वेषात्मकौ स्मृतौ ।**
**शब्दस्पर्शादयो बाणाः नस्तस्याभवद्धनुः ॥**
**करणेन्द्रियचक्रस्थां देवीं संवित्स्वरूपिणीम् ।**
**विश्वाहङ्कारपुष्पेण पूजयेत्सर्वसिद्धिभाक् ॥** इति ॥

इयम् उपासना विधिः क्रियात्मको नादरणीयः ॥ ४१ ॥

*** सरला ***

**तवाधारे । तव** आपके, **आधारे मूले** आधारचक्र जिसे मूलाधार कहते हैं उसमें, **सह** साथ-साथ, **समयया** समया नाम से कही जाने वाली महाशक्ति, उसके साथ, **लास्यपरया**

लास्य नृत्य, उसमें है तात्पर्य जिसका, स्त्री के नाच को लास्य नृत्य कहते हैं । **नवात्मानं** आनन्द भैरव को, **मन्ये** जानता हूँ, **नवरसमहाताण्डवनटं** नवों रसों से अद्भुत ताण्डव है जिसका । पुरुषकर्त्तृक नृत्य को ताण्डव कहते हैं उसमें रहने वाला नट अभिनेता को । **उभाभ्यामेताभ्यां** आनन्दभैरवी एवं महाभैरव इन दोनो से, **उदयविधिं उद्दिश्य** उत्पत्ति के उद्देश्य से, **दयया** दग्ध लोक के पुनः उत्पादन के लिये दयाकर, **सनाथाभ्यां** मिले हुये **जनक जननीमत्** माता और पिता वाला जगत् यह सारा प्रपञ्च, जिसे पहले कहा जा चुका है, यहाँ लास्य और नाट्य के संविधान का प्रतिपादन किया गया है जिसका तात्पर्य यह है कि प्रकृति और पुरुष के एकत्र होने से जगत् की उत्पत्ति होती है और जब लास्य एवं ताण्डव नृत्य का अवसान हो जाता है तव इस जगत् का प्रलय हो जाता है । यह कौल सिद्धान्त है ।

**पदयोजना का अर्थ**—हे भगवति ! आपके मूलाधार में लास्य करती हुई समया के साथ नवरस युक्त महाताण्डव के अभिनेता साक्षात् आनन्दभैरव ही हैं ऐसा मैं मानता हूँ । संसार की उत्पत्ति के लिये दयापूर्वक उन दोनों के एक साथ मिल जाने से माता और पिता समस्त प्रपञ्चात्मक इस जगत् की उत्पत्ति हुई है ।

**इसका भाव** इस प्रकार है—आधार और स्वाधिष्ठान दोनों चक्र तामिस्र लोक है जहाँ कौल मतावलम्बियो का अधिकार है । यद्यपि समय मत वालों के लिये वहाँ अधिकार नहीं हैं । किन्तु यदि पूजा करनी ही हो तो सहस्रदल कमल में रहने वाली भगवती का प्रथम पूजन कर ही मूलाधार और स्वाधिष्ठान में महाभैरवी की उपासना करनी चाहिए । जिसे यहाँ समया पद से कहा गया है—

यहाँ यह समझना चाहिए—आधार चक्र त्रिकोण है और यह प्रसिद्ध ही है कि आधार चक्र में बिन्दु का स्थान है । यहाँ कौलमत के अनुसार बिन्दु का स्वरूप त्रिकोण है । उसी बिन्दु की त्रिकोण में आराधना करनी चाहिए । इसीलिये कौलमतावलम्बी त्रिकोण में ही बिन्दु की नित्य अर्चना करते हैं । वह त्रिकोण दो प्रकार का है—प्रथम चक्र में रहने वाली नवयोनियों के मध्य में स्थित योनि और दूसरी सुन्दरी तरुणी की प्रत्यक्ष योनि । श्रीचक्र में रहने वाली नवयोनि के मध्य में रहने वाली योनि को भोजपत्र, सुवर्णपत्र, वस्त्र एवं पीठ में लिख कर पूर्व कौल पूजन करते हैं । सुन्दरी तरुणी की प्रत्यक्ष योनि में उत्तरकौल पूजन करते हैं । दोनों ही योनियाँ बाह्य हैं, आन्तरिक नहीं । इस प्रकार उनका आधार चक्र ही पूजा का स्थान है । वहाँ रहने वाली कुण्डलिनी शक्ति को कौलिनी कहा जाता है । वही त्रिकोणपूजा वालों के लिये उपास्य हैं—यह रहस्यार्थ है । इस बिन्दुस्वरूपिणी में उस कुण्डलिनी शक्ति का पूजन निद्रावस्था में ही करना चाहिए, क्योंकि निद्रा में पड़े रहना ही उसका स्वभाव है । वह पूजा तामिस्रा नाम वाली है जब कुण्डलिनी का प्रबोध होता है तत्क्षण साधक की मुक्ति हो जाती है—ऐसा कौलसिद्धान्तियों का कथन भी है । इसलिये कौलों को क्षणमुक्त भी कहा जाता है । वहाँ जो सुरा, मत्स्य, मांस, मद्य आदि द्वारा समाराधन किया जाता है वह वामाचार मत के अनुसार किया जाता है । प्रत्यक्ष योनि त्रिकोण में बिन्दुस्थान पर काम का छाता लगा कर पूजा की जाती है । अधोमुख त्रिकोण में भी अधोमुख छत्र लगा कर पूजा की जाती है । अतः दिगम्बर क्षपणकादि मत वाले स्त्रियों को उत्तान कर ऊर्ध्व त्रिकोण में पूजा करते हैं यह रहस्य है । इस विषय में बहुत कहा जा सकता है किन्तु अवैदिक मार्ग के होने से कहने की बात तो दूर यह स्मरणार्ह भी नहीं है । फिर भी इसे निषेध करने के लिये हमने

थोड़ा कह दिया हैं जो समय सम्प्रदायवादियों के लिये उपयोगी भी है। विस्तारपूर्वक इसे नहीं कहते है।

अब **समयसम्प्रदायवादियों का मत** निरूपण करते हैं—त्रिकोण से लेकर षट्चक्र आधारादि षट्चक्रों के परिणत स्वरूप है—यह पहले कहा जा चुका है। उस श्रीचक्र में रहने वाला त्रिकोण बिन्दु का स्थान है—यह प्रायः सुप्रसिद्ध है ही। तीन त्रिकोण से अष्टकोण के निर्माण की अवस्था में त्रिकोण से ही बिन्दुस्थान माना जाता है। वह बिन्दुस्थान चतुष्कोण है, जो सहस्त्र कमलान्तर्गत चान्द्रमण्डल ही है। इसे भी पूर्व में अनेक जगह कहा गया है। इसी चतुष्कोण के मध्य में रहने वाले बिन्दुस्थान को 'सुधासिन्धु' (सरघा) आदि अनेक रूपों में विस्तारपूर्वक पहले ही कहा गया है। यह जो चतुष्कोण का मध्यस्थानभूत बिन्दुस्थान हैं, वहाँ बाह्यपूजा और तरुणीत्रिकोणपूजा दूर से ही निषिद्ध है—इसे सोच लेना चाहिए। इसलिये समय सम्प्रदाय वालों के लिये सहस्त्रदलकमल में समया की तथा समयरूप सदाशिव की पूजा विहित है। सदाशिव के साथ पाँच प्रकार का साम्य रखने वाली पूजा का नाम 'समया' है। समया के साथ सदाशिव का पाँच प्रकार का साम्य सम्बन्ध देवी के साथ होता है इसलिये उन्हें 'समय' कहा जाता है। इसीलिये दोनों में समता का प्राधान्य समझना चाहिए। पाँच प्रकार के साम्यों का नाम है—(१) अधिष्ठान साम्य, (२) अवस्थान साम्य, (३) अनुष्ठान साम्य, (४) रूप साम्य और (५) नाम साम्य। इस प्रकार शिवा एवं शिव दोनों में एक समान समता का प्राधान्य है। इस प्रकार—'तवाधारे' इससे **अधिष्ठान साम्य** हुआ क्योंकि दोनों का निवास आधारचक्र में है। **अनुष्ठान साम्य** 'जनकजननीमज्जगत्' इससे बतलाया गया है। क्योंकि उत्पादनक्रिया में दोनों का ही समान रूप से योग है। **अवस्थान साम्य** 'लास्यताण्डव' शब्द से प्रतिपादित किया गया है क्योंकि लास्य और ताण्डव का नृत्य रूप से ऐक्य ही है—जो पहले कहा गया है। दोनों अरुण वर्ण के हैं। इसलिये **रूपसाम्य** भी है। जैसा कि अन्य तन्त्रों में कहा गया है—

जपा कुसुम के समान आभा वाले तथा मद से घूर्णित (=आनन्दित) नेत्रों वाले भैरवी भैरवात्मक जगत् के माता पिता को नमस्कार है।

अथवा, 'नवात्मानं' यह **रूप साम्य** है और **नाम साम्य** भी है—ऐसा प्रतिपादित समझना चाहिए। इसी प्रकार अन्य बातें भी समझ लेनी चाहिए। जैसे 'तडित्वन्तम्' इसमें दोनों में तडित्वान् और तडित्वती है। इसलिये नाम और रूप का साम्य है। यद्यपि यहाँ स्थिर सौदामिनी रूप से तडिद् रूप का प्रतिपादन किया गया है इसलिये तडिद्रूपता नहीं हुई तथापि सौदामिनी का स्थिरत्व ही सर्वदा तडिद् से युक्त है इसलिये तडित्वती ऐसी उक्ति उचित ही है—यह समझ लेना चाहिए। दोनों का मणिपूर में अधिष्ठान है। 'मणिपूरैक-शरणं' इस पद से **अधिष्ठान साम्य** बताया गया है। 'स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम्' इससे और 'वर्षन्तं' इससे भी वर्षाकालीन मेघ होने से **अवस्थान साम्य** कहा गया है। 'तव स्वाधिष्ठाने' इत्यादि श्लोक में 'स्वाधिष्ठाने' इस शब्द से **अधिष्ठान साम्य** कहा गया है। 'महतीं' इस पद से महासंवर्त्तात्मिक **रूप साम्य** और **नाम साम्य** प्रतिपादित किया गया है। दोनों के स्वाधिष्ठान गत अग्नि का आश्रय होने से **अवस्थान साम्य** है ही। 'लोकान् दहतीति' से **अनुष्ठान साम्य** कहा गया है। अनाहतचक्र में 'अनाहत में दोनों का अधिष्ठान

है'—इससे भी **अधिष्ठान साम्य** कहा गया है। हुतभुक्कणिका रूप से भी **रूपसाम्य** और **नाम साम्य** कहा गया है। 'निवातदीप' इस उक्ति से **अवस्थान साम्य** कहा गया है। वायु-तत्त्वोत्पादकत्व ही **अनुष्ठान साम्य** है यहाँ यह रहस्यार्थ है। विशुद्धिचक्र में रहने का स्थान है इसलिये **अधिष्ठान साम्य** कहा गया है। 'शुद्धस्फटिकविशदं' से **रूप साम्य** कहा गया है। 'व्योमजनकं' इससे **अनुष्ठान साम्य** कहा गया है। 'शिवं सेवे' से **नाम साम्य** कहा गया है। 'शशिकिरणसारूप्यसरण:' इससे **अवस्थान साम्य** कहा गया है। 'तवाज्ञाचक्रस्थं' इससे **अधिष्ठान साम्य** कहा गया है। 'तपनशशिकोटिद्युतिधरं' से **रूप साम्य** कहा गया है। 'परं शम्भुं' से **नाम साम्य** कहा गया है। 'यमाराध्यन् भक्त्या' से **अवस्थान साम्य** कहा गया है। 'मुक्तिप्रदत्व' से **अनुष्ठान साम्य** कहा गया है। इस प्रकार साम्यपञ्चक समझना चाहिए, यह सब अत्यन्त गूढ रहस्य है। शिष्यों की जानकारी के लिये हम(लक्ष्मीधर)ने प्रकाशित किया।

इसलिये समय की पूजा करने वाले ही समयी (साधक) हैं। उनके लिये षट्चक्र की पूजा का विधान नहीं है। उन्हें सहस्रदलकमल में ही पूजा करने का विधान है। सहस्रकमल पूजा उसे कहते हैं जो सहस्रदलकमलस्थ के बिन्दुस्थान होने से उसमें रहने वाले चन्द्रमण्डल चतुष्कोण हैं। उसमें रहने वाला बिन्दु २५ तत्त्वों से परे शिवशक्ति का सम्मिलित रूप है, जिसे 'सादा' नाम की कला कहते हैं। वही २६ वाँ तत्त्व है वह निश्चित है। इसलिये समयी मत वालों के लिये बाह्य आराधना दूर से ही त्याग देनी चाहिए। षोडशोपचार रूपपूजाङ्गकलाप तो उससे भी दूर से त्याज्य हैं।

इस प्रकार आधारादि षट्चक्रों का त्रिकोण से लेकर षट्चक्र से तादात्म्य है और बिन्दु स्थान का सहस्रदल कमल से तादात्म्य ही बिन्दु का और शिव का तादात्म्य है। इस प्रकार देवी में और शिव में तादात्म्य है, यह तीन तादात्म्य हुए। चक्र और मन्त्र की एकता हम पहले भी कह आये हैं। इस प्रकार कुल चार प्रकार की एकता हुई। यह ही समयी सम्प्रदाय वालों का समय की आराधना क्रम जानना चाहिए यह अत्यन्त रहस्य का विषय है।

यहाँ **कुछ और विशेष कथन** है। चार प्रकार से एकता का अनुसन्धान ही भगवती की समाराधना है। यह सर्वसम्मत है। किन्तु कोई कोई ६ प्रकार की एकता कहते हैं। जैसे नाद बिन्दु और कला से परे भागवत तत्त्व है इसे सभी आगमों ने स्वीकार किया है। जैसे नाद, परा, पश्यन्ती, मध्यमा और बैखरीरूप से चार प्रकार का कहा गया है, यह बात पूर्व में कही जा चुकी है। परा त्रिकोणात्मिका, पश्यन्ती अष्टकोणरूपिणी, मध्यमा द्विदशार-रूपिणी, बैखरी चतुर्दशाररूपिणी है। इन्हीं चारों में चार शिव चक्रों का अन्तर्भाव है। वह भी पहले कहा जा चुका है। अत: चतुश्चक्रात्मक श्रीचक्र को 'नाद' शब्द से भी कहा जाता है। इस प्रकार १. बिन्दु मूलाधार, २. स्वाधिष्ठान, ३. मणिपूर, ४. अनाहत, ५. विशुद्ध और ६. आज्ञाचक्र—इन ६ चक्रों को बिन्दु शब्द से कहा गया है। यह बात भी पूर्व में कह चुके हैं। कलाएँ ५० हैं अथवा ३६० हैं। इस प्रकार भगवती नाद, बिन्दु और कलाओं से परे हैं। सहस्रकमल से बिन्दु से परे, बैन्दवस्थान सुधासिन्धु जिसका अपर पर्याय सरधा भी कहा गया है वही नाद से अतीत तत्त्व त्रिपुरसुन्दरी शब्द से कहा जाता है जो दर्शा दृष्टा दर्शता इत्यादि का अपर पर्याय है **'क ए ई ल ह्रीं'** इत्यादि मन्त्र वर्णात्मक, पञ्चाशद् वर्णात्मकं, तीन सौ साठ संख्या के द्वारा परिगणित महाकालात्मक है। वही पञ्चदश कलातीता विद्या 'सादा' नाम से कही जाती है, जिसका पर्याय श्री विद्या है जो चित्कलाशब्द

से कही जाती है, उसे ब्रह्मविद्या भी कहते हैं । ऐसी भगवती ही नाद बिन्दु कला से अतीत होने के कारण भागवत तत्त्व हैं ऐसा **तत्त्ववेत्ताओं द्वारा प्रतिपादित रहस्य** है । यहाँ नाद, बिन्दु और कलाओं का परस्पर ऐक्य का अनुसन्धान हो जाने पर छः प्रकार का ऐक्य हो जाता है । इस प्रकार भगवती में ही उक्त छः प्रकार की एकता सम्भावित कर उनका पूजन कर साधक सादा नाम वाली महाविद्या में लीन हो जाता है । इसके बाद षड्विध ऐक्य के अनुसन्धान की महिमा से और गुरु के कटाक्ष से उत्पन्न महावेध की महिमा से भगवती शीघ्र ही मूलाधार और स्वाधिष्ठान चक्र को भेदकर मणिपूर में प्रत्यक्ष प्रगट हो जाती है । महावेध की यह प्रक्रिया अभ्यास काल में मात्र गुरु के परतन्त्र हैं । अतः उस महाविद्या को गुरु के मुख से उपदेश द्वारा सुनकर ऋषि छन्द देवतापूर्वक मूलमन्त्र का शुष्क जप गुरु प्रदेश मार्ग से करते हुये साधक को आश्विन मास के शुक्ल पक्ष में महानवमी शब्द से कही जाने वाली अष्टमी की अर्धरात्रि में गुरु के चरण कमलों को पकड़ना चाहिए । इस प्रकार गुरु के चरण पकड़ने की महिमा से उनके हस्त कमल का मस्तक से संयोग हो जाने पर पुनः मन्त्रोपदेश षट्चक्र पूजा प्रकारोपदेश षड्विधैक्यानुसन्धानोपदेश की महिमा से महावेध सादाख्या के शैव प्रकाशरूप में प्रकट होता है । अतः यह **रहस्य गुरु से समझना** चाहिए ।

इस प्रकार महावेध हो जाने पर भगवती मणिपूर में प्रकट हो जाती हैं । अतः वही आराध्य है, अर्घ्य, पाद्यादि भूषण प्रतिपादन पर्यन्त' पूजा कलाप मणिपूर में कर—अनाहत मन्दिर में भगवती को पधरा कर धूपादि, नैवेद्य हस्तप्रक्षालनान्त क्रिया कलाप सम्पादन कर भगवती को विशुद्ध चक्र में ले जाना चाहिए । उस विशुद्धि चक्र में सिंहासन पर आसीन कर उनके द्वारा सखियों के साथ प्रेमालाप की कल्पना कर शुद्धस्फटिक के समान मणियों से भगवती की पूजा करनी चाहिए । यहाँ शुद्ध स्फटिक सदृश मणियों का तात्पर्य मौक्तिक आदि नहीं हैं । किन्तु उनके षोडश दल में रहने वाली षोडश चन्द्रकलाएँ ही है ऐसा समझना चाहिए । इस प्रकार विशुद्धि चक्र में पूजा कर उन्हें आज्ञाचक्र में पधराना चाहिए । वहीं उन कामेश्वरी भगवती की आरती कर उन्हें अनेक उपचारों से प्रसन्न करे । यही बात मेरे द्वारा रची गई **कर्णावतंस स्तुति** में आज्ञात्मकेत्यादि श्लोक से कही गई है—

हे आज्ञात्मक द्विदल पद्म में निवास करने वाली देवि ! हे विद्युत् के समान देदीप्यमान ! हे सूर्य तथा चन्द्रमा के समान प्रकाशवाली ! हे कर्णावतंसकलिके ! हे कमल के समान विशाल नेत्रों वाली भगवति ! अपने कर्णावतंस के प्रकाश को जो गण्डस्थल में प्रतिबिम्बित होने के कारण हाथ में धारण की गई दीप समूह रूप आरती के समान है उसे ग्रहण कीजिए ।

इस प्रकार आरती कर भगवती को प्रसन्न करे । इसके बाद वही भगवती विद्युल्लता के समान चमकती हुई भगवती सहस्रकमल में प्रविष्ट हो कर अमृत समुद्र में, जहाँ पाँच संख्या में कल्पवृक्ष लगे हुये हैं, उसकी छाया में, मणिद्वीप में, सरधामध्य में, सदाशिव के साथ विहार करने में प्रवृत्त हो जाती हैं । ऐसी स्थिति में पर्दा लगाकर समीप के मन्दिर में स्वयं तब तक स्थिर रहें, जब तक भगवती वहाँ से निकल कर पुनः अपने मूलाधार कुण्ड में प्रवेश करती हैं यही समयमतवादियों का रहस्य है ।

यहाँ भगवत्पाद के मतानुसार चार प्रकार के ऐक्यों के अनुसन्धान के बाद मणिपूर में प्रगट होने वाली भगवती का स्वरूप 'क्वणत्काञ्चीदामा'—इत्यादि श्लोक में, जो ध्यान के

लिये कहे गये हैं, चतुर्भुज तथा उन हाथों में धनुष, बाण, पाश और अङ्कुश रूप में कहा गया है। यही रहस्य है जो शङ्करमतानुयायि लोगों के लिये उसी प्रकार मान्य है।

हम लोग षड्विधैक्य के अनुसन्धान के बाद मूलाधार और स्वाधिष्ठान इन दो चक्रों का भेदन कर मणिपूर में प्रसन्न हुई भगवती का प्रत्यक्ष दशभुजात्मक स्वरूप मानते हैं जिनमें १. धनुष्, २. बाण, ३. पाश, ४. अङ्कुश, ५. वरद, ६. अभय, ७. पुस्तक, ८. अक्षमाला और ९. वीणा हैं। हमारे मत वाले एकदेशियों की दृष्टि में १. पाश, २. अङ्कुश, ३. पुण्ड्रेक्षुचाप, ४. पुष्पबाण, ५. जप, ६. माला, ७. शुक, ८. अभय, ९. वरद तथा दोनों हाथों में धारण की गई वक्षःस्थल पर स्थापित १०. वीणा है। अस्तु चाहे जो भी हो, हमें दोनों ही मत मान्य है। कर्णावतंस स्तुति में भी 'भवानि' इत्यादि स्तुति में भी इसी बात का प्रतिपादन है—

हे भवानि ! आप श्रीभगवती के हाथों में १. फणि, २. पाश, ३. सृणि, ४. धनुष-बाण, ५. पुण्ड्रेक्षुचाप, ६. पुष्पवाण, ७. जपमाला, ८. शुक, ९. वरद और दोनों हाथों में वक्षस्थल पर झङ्कार करती हुई १०. वीणा है। अतः अभय एवं वरद दोनों मुद्राओं से भक्तों को निर्भय करने वाली हे रसिके ! आप हम लोगों का कल्याण करें।

इस प्रकार समयमतावलम्बियों के द्वारा भगवती का स्वरूप प्रत्यक्ष किया जाता है। अतः समयी मत वालों को सहस्रकमलपर्यन्त आन्तरपूजा करनी चाहिए। सहस्रकमल में पूर्वोक्त विधि से पर्दा गिराने तक उनका ध्यान ही समाराधन है। जैसा कि **सुभगोदय स्तुति** में कहा है—

सूर्येति। जो साधक सूर्यमण्डल के मध्य में पाश, अङ्कुश, धनुष बाण लिये हुये भगवती त्रिपुरसुन्दरी का ध्यान करता है वह नर नारी समेत समस्त त्रिलोकी को शीघ्रता से मोहित कर लेता है।

कालिदास ने **चर्चास्तोत्र** में कहा है—

य इति। हे अम्ब! जो साधक अरुण मण्डल मध्य में रहने वाली नवीन लाक्षा रस के पङ्क के समान रमणीय स्वरूप का चिन्तन करता है। उसके वश में काम के बाणों से पीड़ित हुई अनेकानेक युवती सुन्दरियाँ वश में हो जाती हैं।

कुछ लोग कहते हैं कि समयी मत वालों के लिये सूर्यमण्डल मध्य में की जाने वाली यह पूजा निषिद्ध है ऐसी बात नहीं है। ब्रह्माण्ड स्थित और पिण्डाण्ड स्थित दोनों में रहने वाले चन्द्रमा और सूर्य के एक होने के कारण सूर्य का उज्जीवन चन्द्रकलामृत से निष्यन्द अमृत द्वारा ही हैं इस बात को हमने 'अपां रसमुदयंसन्' इस श्रुति की व्याख्या के अवसर पर प्रतिपादित कर दी है। इससे सूर्य कला के सम्पर्क से चन्द्रकला विद्या के तेज का तिरोधान हो जाता है यह बात भी अपास्त हो गई। इसलिये पिण्डाण्ड और ब्रह्माण्ड में रहने वाले दोनों चन्द्रमा में एकता होने से चन्द्रमण्डलान्तर्गत चन्द्रकला विद्या का पूजन युक्ति-युक्त ही है। जो पूर्व में हमने कहा है कि चन्द्रविम्ब में होने से देवी का पूजन निषिद्ध है वहाँ आन्तर में रहने वाले चन्द्रमा, जो आज्ञाचक्र में स्थित हैं और जिनका उज्जीवन एवं प्राणन सहस्र-कमलान्तर्गत चन्द्रकला से निष्यन्द अमृत बिन्दुओं से होता है, उनके पूजन का निषेध

नहीं है इसलिये पिण्डाण्ड और ब्रह्माण्ड में रहने वाले दोनों चन्द्रमा एक ही हैं । इस दृष्टि से ब्रह्माण्ड स्थित चन्द्रमण्डल में पूजा का निषेध नहीं समझना चाहिए ।

इस प्रकार हृदयकमल में आराधना से भगवती समस्त ऐहिक फल प्रदान करती है । जब वह 'वशिनी' आदि अपनी महाशक्तियों के साथ ध्यान की जाती हैं तो सारस्वत सम्पत्ति (विद्या कविता) प्रदान करती है । लाक्षारस से समाप्लुता भगवती ध्यान करने पर वशीकरण प्रदान करती है । (मुखं बिन्दुं १९) में वर्णित भगवती का स्वरूप ध्यान करने से जैसा वहाँ कहा हैं (वनिता वर्ग में संक्षोभ एवं त्रिलोकी का भ्रमण) वैसा फल प्रदान करती है—यहाँ यह समझ लेना चाहिए कि भगवती की होमादि क्रिया तथा तर्पणादि क्रिया हृदय-प्रदेश में ही करनी चाहिए । समस्त ऐहिक फल का साधन स्मरं योनिं लक्ष्मीं (३३) श्लोक की व्याख्या में भलीभाँति उपपादन कर दिया गया है । अतः समयमताविलम्बियों के लिये ऐहिक एवं आमुष्मिक फल की साधना का उपाय आन्तरपूजा ही है और यही समय मत का रहस्य है ।

यहाँ **भगवत्पाद** ने आधारकमलादि क्रम का परित्याग कर आज्ञाचक्रादि से अवरोह क्रम से पूजा का प्रकार कहा है । इसका आशय इस प्रकार है—आत्मा से आकाश, आकाश से वायु, वायु से अग्नि, अग्नि से जल और जल से पृथ्वी उत्पन्न हुई है । यहाँ जिस प्रकार श्रुति में सृष्टि का अवरोह क्रम कहा गया हैं उसी प्रकार भगवत्पाद ने चक्रों का वर्णन भी अवरोह क्रम से किया है, इसीलिये स्वाधिष्ठान के बाद होने वाले मणिपूर चक्र का प्रकृत में स्वाधिष्ठान के बाद उसके नीचे वर्णन उचित ही जान पड़ता है । आधार और स्वाधिष्ठान के बाद मणिपूर चक्र की स्थिति सभी योगशास्त्रों में प्रसिद्ध है । यहाँ जो स्वाधिष्ठान के बाद मणिपूर का वर्णन है उसका तात्पर्य यह है कि जब जगत् स्वाधिष्ठान में रहने वाली संवर्त्ताग्नि (प्रलयाग्नि) से दग्ध हो जाता है तव भगवती जगत् के उज्जीवन (= प्राणन) के लिये अथवा उसकी उत्पत्ति के लिये मणिपूर स्थित जल की वर्षा करती है । यह बात **शुकसंहिता** में 'शृणु देवि प्रवक्ष्यामि' इस श्लोक से आरम्भ कर ९१ श्लोकों से श्री चक्र के षट्चक्रों का वर्णन प्रस्तुत करते हुए 'इदानीं सम्प्रवक्ष्यामि' से १५० श्लोकों के द्वारा विस्तारपूर्वक प्रतिपादित किया गया है इन सब बातों को वहीं से (अर्थात् शुकसंहिता से) समझने का कष्ट करें ।

यदि कोई शङ्का करे कि 'ऊर्ध्वमूलमधः शाखं वृक्षं यो वेद सम्प्रति' इस श्रुति में देहरूप वृक्ष का मूल शिर हैं । कर चरणादि उसके अवयव शाख में है इसलिये षट्चक्र कमल जो केला के पुष्प के समान अधोमुख है, इस अवरोह क्रम से भगवत्पाद ने षट्चक्र कमलों का वर्णन किया है । इस शङ्का का समाधान इस प्रकार है—तादात्म्य ध्यान के बिना आन्तरपूजा का होना सम्भव नहीं है । यदि सम्भव हो भी जाय तो भी चक्र में रहने वाले त्रिकोणादि षट्चक्रों का मुख ऊपर है, इसलिये यह सम्भव नहीं ।

दूसरी बात यह है कि मूलाधार में सुप्त भगवती को जगाना चाहिए । इस प्रबोध नियम से मूलाधार क्रम से ही पूजा का विधान समयी मतावलम्बियों के लिये तथा कौल मत वालों के लिये भी विहित है । यह रहस्य परम गुरु के मुख से हमने सुना है । **वामकेश्वरतन्त्र** में 'आत्मपूजा' के विषय में विशेष बात कही गई है—

पाशाङ्कुशौ इत्यादि । भगवती के हाथ में रहने वाले पाश एवं अङ्कुश राग-द्वेषात्मक हैं । शब्द स्पर्शादि विषय पञ्चबाण हैं । मन उनका धनुष है । अतः करणेन्द्रिय चक्र में

रहने वाली ज्ञान स्वरूपिणी भगवती का विश्व के अहंकार पुष्प से पूजन करने वाला साधक सारी सिद्धियाँ प्राप्त कर लेता है। किन्तु यह उपासना विधि क्रियात्मक होने से आदरणीय नहीं है ॥ ४१ ॥

**ध्यान**—'त'। **श्लोकस्थ वर्ण बीज 'त' का ध्यान**—

त— चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम्।
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम्॥
नानाऽलङ्कारभूषां तां सर्वसिद्धिप्रदायिनीम्।
एवं ध्यात्वा तकारं तु मन्त्ररूपं सदा यजेत्॥
तकारं चञ्चलापाङ्गि स्वयं परमकुण्डलीं।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा॥
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम्।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम्॥

**उदरपीड़ा शान्त्यर्थ यन्त्र**

**बीजाक्षर**—'त'; जप-संख्या—१०००; जप-स्थान—मणिपूरचक्र; होम—कल्हार कुसुम, मधु, पञ्चमेवा और शर्करा से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—३; पूजनयन्त्र—चतुष्कोण के मध्य में 'यं ह्रीं' लिखे।

**श्रीविद्यारहस्यार्थ**—हे भगवति ! आप श्री के मूलाधार चक्र में नवरस-मय महाताण्डव नृत्य करते हुये श्री आदि नट भगवान् सदाशिव तथा उनके साथ लास्य नृत्य करती हुई श्री समयाम्बा भगवती को नमस्कार है, बारम्बार नमस्कार है। इस विश्व को ये दो माता-पिता जगदुत्पत्ति-हेतु से उनकी विश्वकल्याणकारिणी दया से ही मिल गये हैं।

**विमर्श—सह समयया**—शिव-शक्ति-एकता का वाचक है। भगवती तथा भगवान् शिव अधिष्ठान, अवस्थान, अनुष्ठान, रूप, गुण, नामादि सब प्रकार से एक ही हैं। **समय**-समय की उपासना-विधि को समय मत कहते हैं। जब श्री भगवान् आदि-नट ताण्डव नृत्य में मग्न हो जाते हैं और श्री लास्येश्वरी महाशक्ति परमाम्बा लास्य नृत्य में मग्न होती हैं एवं नृत्य करते-करते दोनों सामरस्य में तल्लीन हो जाते हैं तब उस मिथुनानन्द से विश्वसृष्टि की क्रिया प्रतिपादित होती है। कौल मतानुसार बिन्दु आज्ञाचक्र के त्रिकोण में है। इससे कौल त्रिकोण में बिन्दु का पूजन करते हैं। कौल महाशक्ति कुण्डलिनी को 'कौलिनी' भी कहते हैं। पिण्डवत् यह ब्रह्माण्ड और यह सौरमण्डल षट्चक्र तथा श्रीचक्र के लक्ष्य से बँटा हुआ है। यथा—

| | |
|---|---|
| भू = मूलाधार | पृथ्वी = भूपुर |
| भुवः = स्वाधिष्ठान | बुध = १६ दल पद्म |
| स्वः = मणिपूर | मङ्गल = ८ दल पद्म |
| महः = अनाहत | बृहस्पति = १४ त्रिकोण चक्र |

जनः = विशुद्ध
तपः = आज्ञा
सत्यं = सहस्रार
बिन्दु = व्यापिका चिच्छक्ति

हर्षल = दोनों दशार
नेप्चून = अष्टार
शुक्र = मूल त्रिकोण

श्री शङ्कर भगवत्पाद का मत है (श्लोक ७) कि श्री महापरा विद्या माँ भगवती मणिपूर चक्र में ही अमुक रूप से प्रकट होती हैं। कुछ भी हो, माँ अनन्त अमोघा सर्वमयी हैं। वह अपने भक्तों की इच्छानुसार कहीं किसी भी रूप में प्रकट होती हैं। इस चक्र के दिव्य दैवत भगवान् श्री आदि नटनाथ तथा श्री लास्येश्वर्यम्बा हैं। इनकी आराधना ५६ पार्थिव मयूखाओं सहित होती है।

ये छप्पन पार्थिव मयूखाएँ इस प्रकार हैं—१. उड्डीश्वर, २. उड्डीश्वरी, ३. जलेश्वर, ४. जलेश्वरी, ५. पूर्णेश्वर, ६. पूर्णेश्वरी, ७. कामेश्वर, ८. कामेश्वरी, ९. श्रीकण्ठ, १०. गङ्गा, ११. अनन्ता, १२. स्वरसा, १३. शङ्करा, १४. मति, १५. पिङ्गला, १६. पाताल देवी, १७. नारदाख्या, १८. नादा, १९. आनन्दा, २०. डाकिनी, २१. आलस्या, २२. शाकिनी, २३. महानना, २४. लाकिनी, २५. योग्या, २६. काकिनी, २७. अतीता, २८. साकिनी, २९. त्रिपदा, ३०. हाकिनी, ३१. आधरारेशा, ३२. रक्ता, ३३. चक्रीशा, ३४. चण्डा, ३५. कुरङ्गीशा, ३६. कराला, ३७. मदधृशा, ३८. महोच्छुष्मा, ३९. अनादि. विमला, ४०. मानङ्गी, ४१. सर्वज्ञा. विमला, ४२. पुलिन्दा, ४३. योगविमला, ४४. शम्बरी, ४५. सिद्धविमला, ४६. वाचापरा, ४७. समयविमला, ४८. कुलालिका, ४९. मित्रेशा, ५०. कुब्जा, ५१. उड्डीशा, ५२. लब्धा, ५३. खड्गीशा, ५४. कुलेश्वरी, ५५. चर्याधीशा, ५६. अजा।

**ताण्डव नृत्य** = लयात्मक नृत्य भगवान् शङ्कर ने किया।

**लास्य नृत्य** = सृष्ट्यात्मक नृत्य भगवती ने किया। इन दोनों नृत्यों में एक शिवात्मक तथा एक शक्त्यात्मक है ॥ ४१ ॥

एवं समयमतं सम्यक्प्रपञ्च्य समयाया: भगवत्या: किरीटप्रभृति पादान्तं वर्णयति—

**गतैर्माणिक्यत्वं गगनमणिभिस्सान्द्रघटितं**
**किरीटं ते हैमं हिमगिरिसुते कीर्तयति यः।**
**स नीडेयच्छायाच्छुरणशबलं चन्द्रशकलं**
**धनुः शौनासीरं किमिति न निबध्नाति धिषणाम् ॥ ४२ ॥**

**लक्ष्मीधरा**—**गतैः** प्राप्तैः, **माणिक्यत्वं** रत्नभावं, **गगनमणिभिः** द्वादशादित्यैः। तेषां अत्यन्तसन्निकृष्टसेवार्थं भूषणगतमणित्वं युज्यते। **सान्द्रघटितं** सान्द्रं नीरन्ध्रं यथा भवति तथा घटितं खचितं, **किरीटं** मकुटं, **ते हैमं** हेम्नो विकारं, **हिमगिरिसुते**! हे पार्वति! **कीर्तयति** वर्णयति, **यः**, **स** कवीन्द्रः, **नीडेयच्छायाच्छुरणशबलं** नीडं गोलं तत्र खचितं नीडेयं रत्नजातं तस्य छाया तया छुरणेन व्यापनेन शबलं शबलवर्णं, **चन्द्रशकलं** चन्द्रखण्डं, **धनुः** कोदण्डं, **शौनासीरं** शुनासीरः इन्द्रः तस्य सम्बन्धि शौनासीरं, **किमिति न निबध्नाति धिषणां** बुद्धिम्।

**अत्रेत्थं पदयोजना**—हे हिमगिरिसुते ! माणिक्यत्वं गतैः गगनमणिभिः सान्द्रघटितं हैमं ते किरीटं यः कीर्तयति सः नीडेयच्छायाच्छुरणशबलं चन्द्रशकलं शौनासीरं धनुरिति धिषणां किं न निबध्नाति ॥

**अयं भावः**—किरीटवर्णनां कर्तुमुद्युञ्जानः कवीश्वरः तत्र स्थितां चन्द्ररेखां नानारत्नमणिकान्तिच्छुरितां दृष्ट्वा इन्द्रचापत्वेन कथं नाशङ्कते ? अवश्यं तस्य तच्छङ्का जायत एवेति ।

अत्र उत्प्रेक्षालङ्कारः, चन्द्रशकलस्य इन्द्रचापत्वेनोत्प्रेक्षणात् । यद्वा—अपह्नवालङ्कारः, इदं चन्द्रशकलं न भवति, अपि तु इन्द्रचाप इत्यपह्नवस्य प्रतिभानात् । यद्वा—सन्देहालङ्कारः, अयमिन्द्रचापः उत चन्द्रशकलमिति संशयात् । यद्वा—अतिशयोक्तिरलङ्कारः, इन्दुशकलस्य इन्द्रचापत्वेन अध्यवसानात्; स्वाधिषणां इन्द्रचापे किमिति न निबध्नाति इति सामान्योक्तेः । एतेषां मध्ये एकस्य प्राधान्यं इतरस्योपसर्जनत्वमिति विनिगमकप्रमाणाभावात् सन्देहसङ्करः । (उत्प्रेक्षातिशयोक्ती स्पष्टे । अपह्नवस्तु तल्लिङ्गाभावादपि किमिति धिषणां न निबध्नाति इत्यपह्नवोल्लेखस्य शक्यत्वात् । सन्देहस्तु चन्द्रशकले दृष्टे इन्द्रचापस्य स्मृत्यारूढत्वात् उल्लेखयितुं शक्य एवेति सन्देहसङ्कर एव ज्यायान्) ॥ ४२ ॥

## * सरला *

इस प्रकार समयमत को विस्तारपूर्वक बतला कर अब समया भगवती के किरीट से लेकर पादान्त पर्यन्त वर्णन का उपक्रम करते हैं—

**गतैरिति । गतैः** प्राप्त होने से, **माणिक्यत्वं** रत्नभाव के, **गगनमणिभिः** द्वादशादित्यों के अत्यन्त सन्निकट होने से उनके भूषण की मणि होना उचित ही है, **सान्द्रघटितं** अत्यन्त छिद्ररहित जटित होने वाला, **किरीटं** मुकुट, **ते हैमं** सुवर्णनिर्मित, **हिमगिरिसुते** हे पार्वति ! **कीर्त्तयति** वर्णन करता है, **यः** जो, **सः** कवीन्द्रः, **नीडेयच्छायाच्छुरणशबलं** गोल-गोल जड़े हुये रत्नों की कान्ति से व्याप्त होने के कारण कर्बुर रंग वाले, **चन्द्रशकलं** चन्द्रखण्ड, **धनुः** कोदण्ड, **शौनासीरं** इन्द्रसम्बन्धि **किमिति न निबध्नाति धिषणाम्** बुद्धि ।

**पदयोजना का अर्थ**—हे पर्वतराजपुत्रि ! रत्न रूपता को प्राप्त होने वाले द्वादशादित्यों से अत्यन्त सघन रूप (निश्छिद्र) से जड़ा हुआ सुवर्णनिर्मित आपके किरीट का जो कवीन्द्र वर्णन करते हैं वह कवीश्वर उसमें रहने वाली चन्द्ररेखा को अनेक वर्ण वाले रत्नों की कान्ति से व्याप्त, अतएव कर्बुर (चितकबरे) वर्ण वाली उस चन्द्र रेखा को देखकर उसमें इन्द्र धनुष की आशङ्का क्या नहीं करता है? अर्थात् करता ही है ।

इसका **भाव** यह है कि आपके किरीट का वर्णन करने के लिये उद्यत हुआ कवीन्द्र किरीट में लगी हुई चन्द्ररेखा को अनेक वर्ण वाले रत्नों से जड़ी हुई देख कर क्या उसमें इन्द्र धनुष की आशङ्का नहीं करता अर्थात् अवश्य ही वह शङ्का करता ही है ।

यहाँ उत्प्रेक्षा अलङ्कार है क्योंकि चन्द्रखण्ड में इन्द्रचाप की उत्प्रेक्षा की गई है, अथवा अपह्नवालङ्कार भी सम्भव है अर्थात् यह चन्द्रशकल नहीं है किन्तु इन्द्र धनुष है, अथवा सन्देहालङ्कार है अर्थात् यह इन्द्र धनुष् है अथवा चन्द्र कला है ऐसा सन्देह भी सम्भव है, अथवा अतिशयोक्ति है, चन्द्रखण्ड में इन्द्रचाप का अध्यवसाय होने से, अपनी

वृद्धि में इन्द्र धनुष् को क्यों नहीं सोच लेता इस सामान्योक्ति का विषय होने से यह अतिशयोक्ति है । इन अलङ्कारों में एक का प्राधान्य है और अन्य उपसर्जन हैं, किसी विनिगमना (= प्रमाण) के न होने से सन्देह सङ्कर अलङ्कार समझना चाहिये । उत्प्रेक्षा अतिशयोक्ति स्पष्ट ही है । अपह्नव तो उसके लिङ्ग (चिन्ह) के न होने पर भी, 'किमिति धिषणां न निबध्नाति' इस वाक्य से अनुमानित है । सन्देह इसलिये है कि चन्द्ररेखा के देख लेने पर इन्द्र धनुष् की स्मृति बुद्धि में आरूढ हो जाती है । इसलिये सन्देह सङ्कर अलङ्कारं मान लेना ही सर्वश्रेष्ठ निर्णय है ॥ ४२ ॥

**ध्यान—'ग' । श्लोकस्थ वर्णबीज 'ग' का ध्यान—**

ग— दाडिमीपुष्पसङ्काशां चतुर्बाहुसमन्विताम् ।
रक्ताम्बरधरां नित्यां रक्तालङ्कारभूषिताम् ॥
एवं ध्यात्वा गकारं तु तन्मन्त्रं दशधा जपेत् ।
पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये ॥
तरुणादित्यसङ्काशां कुण्डलीं प्रणमाम्यहम् ।
अग्राकुञ्चितरेखा या गणेशी सा प्रकीर्त्तिता ॥
ततो दक्षगता या तु कमला तत्र संस्थिता ।
अधोगता गता या तु तस्यामीशः सदा वसेत् ॥

**महोदरव्याधिनिवारक यन्त्र**

**बीजाक्षर**—'ग'; जप-संख्या—१०००; जप-स्थान—मणिपूरचक्र; होम—कल्हार कुसुम, मधु, पञ्चमेवा और शर्करा से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—३ ।

**भावार्थ**—हे माँ ! हे हिमगिरिसुते ! आप श्री के अनेक कोटि आदित्य माणिक्य मणियों से जटित काशमय शिरमुकुट का जो व्यक्ति कीर्तन (ध्यान) करता है, उसे यह मुकुट क्यों न दिखेगा कि वृद्धि पाते हुये चन्द्रमा के फैलते हुये प्रकाश के समान दिव्य मुकुट के मणि-प्रकाश से बना हुआ यह इन्द्र-धनुष है ।

इकतालिसवें श्लोक में श्री शङ्कर भगवत्पाद ने मनोनिरोधानन्द योगोपासना का वर्णन किया हे । श्री कैवल्याश्रम और श्री मत्स्येन्द्र के मतानुसार श्री किरीट मुकुटमणि मन्त्र यह है—'श्रीं ह्रीं श्रीं हिरण्यकिरीटाय, कोट्यादित्यतेजसे नमः ।' अब उक्त ४२वें श्लोक से श्री महासुन्दरी माँ के शिख-नख का वर्णन प्रारम्भ होता है ॥ ४२ ॥

**धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनं**
**घनस्निग्धश्लक्ष्णं चिकुरनिकुरुम्बं तव शिवे ।**
**यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो**
**वसन्त्यस्मिन्मन्ये बलमथनवाटीविटपिनाम् ॥ ४३ ॥**

**लक्ष्मीधरा—धुनोतु** अपनुदतु, **ध्वान्तं** अन्तस्तिमिरं, **नः** अस्माकं, **तुलितदलितेन्दीवरवनं** तुलितं सदृशीकृतं दलितं भिन्नं, विकसितमित्यर्थः, इन्दीवराणां नीलोत्पलानां

वनं यस्य । तत् । **घनस्निग्धश्लक्ष्णं** घनं सान्द्रं अविरलं स्निग्धं स्नेहयुक्तमिव स्थितं श्लक्ष्णं मृदु। एवमेतेषां विशेषणानां समासः । **चिकुरनिकुरुम्बं** चिकुराणां केशानां निकुरुम्बं समूहः केशपाशः धम्मिल्ल इत्यर्थः । **तव** भवत्याः, **शिवे!** भगवति! **यदीयं** यस्य धम्मिल्लस्य सम्बन्धि, **सौरभ्यं** परिमलं, **सहजं** स्वभावसिद्धं **उपलब्धुं** समाक्रष्टुं, **सुमनसः** पुष्पाणि, **वमन्ति** आसते । **अस्मिन्** धम्मिल्ले, **मन्ये** ध्रुवं, **बलमथनवाटीविटपिनां** बलमथनः बलारिः, वबयोरभेदोपचारः अनुप्रासार्थमङ्गीकृतः—तस्य वाटी उद्यानं तत्र विटपिनः कल्पवृक्षाः तेषाम् ।

**अत्रेत्थं पदयोजना**—हे शिवे ! तुलितदलितेन्दीवरवनं घनस्निग्धश्लक्ष्णं तव चिकुरनिकुरुम्बं नः ध्वान्तं धुनोतु । यदीयं सहजं सौरभ्यं उपलब्धुं अस्मिन् बलमथनवाटीविटपिनां सुमनसः वसन्तीति मन्ये ।

अत्र उत्प्रेक्षालङ्कारः, केशपाशवासनार्थमेव धृतायां कल्पवृक्षकुसुमानां अन्यथात्वेनोत्प्रेक्षणात् । तल्लक्षणम्—

सम्भावनमथोत्प्रेक्षा प्रकृतस्य परेण यत् ।। इति ।

तुलितदलितेन्दीवरवनमित्यत्र उपमालङ्कारः अनयोस्संसृष्टिः, तिलतण्डुलवत् संसृज्यमानत्वात् । क्षीरनीरवत् सम्बन्धः सङ्करः ।। ४३ ।।

## * सरला *

**धुनोत्विति** । **धुनोतु** दूर करे, **ध्वान्तं** अन्तःकरण में स्थित अन्धकार को, **नः** हम लोगों के, **तुलितदलितेन्दीवरवनं** जिसने खिले हुये नील कमलों को अपने सदृश बनाया है, **घनस्निग्धक्ष्लक्ष्णं** अत्यन्त घना, चिकना और कोमल ये सभी विशेषण हैं और समस्त पद है, **चिकुरनिकुरुम्बं** केशों के समूह, केश पाश अथवा धम्मिल्ल, **तव** आपके, **शिवे** हे भगवति, **यदीयं** जिस धम्मिल में रहने वाले, **सहजं** स्वभावसिद्ध, **सौरभ्यं** सुगन्धि को, **उपलब्धुं** ग्रहण करने के लिये, खींचने के लिये, **सुमनसः** पुष्पसमुदाय, **वसन्ति** निवास करते हैं, **अस्मिन्** इस धम्मिल में, **मन्ये** निश्चित रूप से, **बलमथनवाटीविटपिनां** इन्द्र के कल्पवृक्ष के वनों में रहने वाले निवास करते हैं । यहाँ ब एवं व का अनुप्रास के लिए प्रयोग है ।

**पदयोजना का अर्थ**—हे शिवे ! विकसित नील कमल के सदृश घने, चिकने एवं कोमल आपके केशपाश हमारे अन्तःकरण के अज्ञानान्धकार को दूर करें जिसकी स्वाभाविक सुगन्धि ग्रहण करने के लिये इन्द्र के नन्दन वन में निवास करने वाले पुष्प समुदाय कल्पवृक्ष की वसति को छोड़कर आपके उस धम्मिल वन में ही निवास करते हैं ।

यहाँ उत्प्रेक्षालंकार है । केशों में सुगन्धि के लिये धारण किये गये कल्पवृक्ष के पुष्पों की अन्यथा रूप में उत्प्रेक्षा की गई हैं । जैसा की लक्षण इस प्रकार है—प्रस्तुत वर्णन की अन्य सम्भावना उत्प्रेक्षा कही जाती है ।

'तुलितदलितेन्दीवरवनम्' इस पद में उपमा है । दोनों से संसृष्टि है क्योंकि दोनों ही तिल एवं तण्डुल के समान अलग अलग है । क्षीर-नीरवत् सम्बन्ध होने से सङ्कर भी है ।। ४३ ।।

**ध्यान**—धु = ध् + उ ।

**श्लोकस्थ वर्णबीज 'धु' का ध्यान—**

ध— षड्भुजां मेघवर्णां च रक्ताम्बरधरां पराम् ।
वरदां शुभदां रम्यां चतुर्वर्गप्रदायिनीम् ॥
एवं ध्यात्वा धकारं तु मन्त्रं च दशधा जपेत् ।
त्रिकोणरूपरेखायां त्रयो देवा वसन्ति च ।
विश्वेश्वरी विश्वमाता विश्वधारिणीति च ॥

उ— पीतकर्णां त्रिनयनां पीताम्बरधरां पराम् ॥
द्विभुजा जटिलां भीमां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
उकारं परमेशानि अधः कुण्डलिनी स्वयम् ।
पीतचम्पकसङ्काशं पञ्चदेवमयं सदा ॥
पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम् ।

**सर्वजनवशीकरण यन्त्र**

**बीजाक्षर**—'धु'; जपसंख्या—१०००; जपस्थान—मणिपूरचक्र; होम—कल्हार कुसुम, मधु, पञ्चमेवा और शर्करा से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—३ ।

**भावार्थ**—हे शिवे, हे जननि ! आप के काले, घने, चिकने और चमकते हुये बालों का जूड़ा, जो खिलते हुये नील-कमल के समान है, हमारे मन के महान्धकार को दूर करे । आपके परम सुन्दर केशों के इस जूड़े में बलमथन (इन्द्र) के नन्दनवन के कल्पवृक्ष कुसुमों की उत्तमोत्तम सुगन्धि भरी हुई है ॥ ४३ ॥

**तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी-**
**परीवाहस्त्रोतस्सरणिरिव सीमन्तसरणिः ।**
**वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-**
**द्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् ॥ ४४ ॥**

**लक्ष्मीधरा—तनोतु** विस्तारयतु दिशत्वित्यर्थः । **क्षेमं** योगक्षेमात्मकं शुभं **नः** अस्माकं, **तव वदनसौन्दर्यलहरीपरीवाहस्त्रोतस्सरणिरिव**—इदमेकं पदम्, 'इवेन सह नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति नियमात् । वदनं मुखं तस्य सौन्दर्यस्य सुन्दरभावस्य लहरी उत्सेकः तस्य परीवाहः प्रवाहः 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति परिशब्देकारस्य दीर्घः । तत्र स्त्रोतस्सरणिरिव स्रोतसः प्रवाहस्य सरणिरिव मार्ग इव स्थिता, **सीमन्तसरणिः** सीमन्ते धमिल्लमध्यप्रदेशे सरणिः सरण्याकाराकारिता रेखा, **वहन्ती** धारयन्ती, **सिन्दूरं** सिन्दूरपरागं, **प्रबलकबरीभारतिमिरद्विषां** प्रबलाः केशपाशात्मना लब्धजन्मतया प्रबलाः ते च ते कबरीभाराः, त एव केशपाशनिचया एव तिमिराणि तान्येव

द्विषः शत्रवः तेषां **वृन्दैः** समूहैः, **बन्दीकृतं** बन्दीग्रहणावरुद्धम् । इव इति सम्भावनायाम् । कविप्रौढोक्तिस्थले इवशब्दस्य सम्भावनैवार्थः अन्यत्र सादृश्यमिति विवेकः । **नवीनार्ककिरणं** नवीनः प्रातःकालीनः अर्कः सूर्यः तस्य किरणः तम् ।

**अत्रेत्थं पदयोजना**—हे भगवती ! तव वदनसौन्दर्यलहरीपरिवाहस्रोतस्सरणिरिव स्थिता तव सीमन्तसरणिः प्रबलकबरीभारतिमिरद्विषां वृन्दैः बन्दीकृतं नवीनार्ककिरणमिव सिन्दूरं वहन्ती नः क्षेमं तनोतु ।

अत्र उत्प्रेक्षालङ्कारः; सीमन्तसरणेः स्रोतस्सरणित्वेनोत्प्रेक्षणात् । न चायमुपमालङ्कारः; स्वतसिद्धमनुपजीव्य कविप्रौढोक्तिमेवोपजीव्योत्थानात् । न च सम्भावनापरस्येवशब्दस्य समासविधानाभावात् उपमैवेति वाच्यम् । 'इवेन सह' इति समान्येनोभयार्थस्य इवशब्दस्य ग्रहणात् उभयत्रापि समसोऽस्तीति ध्येयम् । उत्तरार्धेऽप्युत्प्रेक्षालङ्कारः; सिन्दूरस्य सूर्य-किरणात्मना सम्भावनात् । कबरीभारस्य तिमिरत्वारोपणात् रूपकालङ्कारोऽपि वर्तते । एवमन-योरङ्गाङ्गिभावेन सङ्करः; सम्भावनां प्रति रूपकस्य निमित्तत्वात् ॥ ४४ ॥

*** सरला ***

**तनोत्विति । तनोतु** फैलावे विस्तृत करे देव, **क्षेमं** योगक्षेमात्मक कल्याण, **नः** हम लोगों का, **तव वदन सौन्दर्यलहरी परीवाहस्रोतस्सरणिरिव** 'इवेन सह नित्य-समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इस नियम से इतना एक पद है । वदन अर्थात् मुख के सुन्दर भाव की लहरी, उस 'लहरी' का प्रवाह = परीवाह । यहाँ 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' से परिशब्द के इकार को दीर्घ होने से परीवाह बना है । **स्रोतस्सरणिरिव** प्रवाह के मार्ग के समान स्थित, **सीमन्त-सरणिः** धम्मिल (= केश) के मध्य प्रदेश में सरणि के आकार की रेखा, **वहन्ती** धारण करती हुई, **सिन्दूरं** सिन्दूर का पराग, **प्रबलकबरी-भारतिमिरद्विषां** अत्यन्त प्रबल केश पाश समूह रूपी अन्धकार रूप शत्रुओं के द्वारा, **बन्दीकृतं** बन्दी बनाकर रोके गये, यहाँ **इव** सम्भावनार्थक प्रयुक्त है । वस्तुतः कवि के प्रौढोक्तिस्थल में इव शब्द सम्भावनार्थक होता है, इसके अतिरिक्त स्थल में सादृश्यार्थक होता है ऐसा समझना चाहिए । **नवीनार्ककिरणं** प्रातःकालीन सूर्य की किरणों को मानो अन्धकाररूपी शत्रुओं ने बन्दी बना लिया हो ।

**पदयोजना का अर्थ**—हे भगवति ! आपके मुख के सौन्दर्य लहरी का प्रवाह धारण करने वाली, अतएव स्रोत प्रवाह मार्ग की तरह स्थित सीमन्त-सरणि, जिसने अत्यन्त प्रबल अन्धकार रूपी शत्रुओं के द्वारा बन्दी बनाकर अवरुद्ध किये गये उदीयमान नवीन सूर्य किरण के समान सिन्दूर धारण किया है वह सीमन्तसारणि हमारा योग-क्षेम वहन करें ।

यहाँ उत्प्रेक्षालङ्कार है । सीमन्तसरणि में स्रोतः सरणि की उत्प्रेक्षा की गई है । यदि कहो कि 'इव' शब्द के होने से यहाँ उपमालङ्कार है तो ठीक नहीं है । यहाँ 'इव' स्वतः सिद्ध का उपजीव्य न होकर कविप्रौढोक्ति का ही उपजीव्य है । यदि कहो कि सम्भावना परक 'इव' शब्द से समास होने के कारण 'उपमा' ही है तो यह ठीक नहीं है । 'इवेन सह समासः' यहाँ दोनों प्रकार के इव शब्द से सामान्य एवं सम्भावनार्थक दोनों प्रकार के समास का विधान है । पद्य के उत्तरार्ध में भी उत्प्रेक्षालङ्कार ही है, क्योंकि सिन्दूर में सूर्य के किरणों की उत्प्रेक्षा की गई है । कवरी भार में तिमिरत्व के आरोप से रूपकालङ्कार भी है । इस

प्रकार दोनों का अङ्गाङ्गिभाव होने से सङ्करालङ्कार है, क्योंकि सम्भावना के प्रति रूपक निमित्त बन गया है ॥ ४४ ॥

**ध्यान—'व' । श्लोकस्थ वर्णबीज 'व' का ध्यान** इस प्रकार है—

कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम् ।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम् ॥
साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम् ।
एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत् ॥
वकारं चञ्चलापाङ्गि कुण्डलीमोक्षमव्ययम् ।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ।
त्रिबिन्दुसहितं मन्त्रमात्मादितत्त्वसंयुतम् ॥
पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम् ।
चतुर्वर्गप्रदं शान्तं सर्वसिद्धिप्रदायकम् ॥

**कल्याणप्रद यन्त्र**

**बीजाक्षर**—'व'; जप—१०००; जपस्थान—स्वाधि-ष्ठान; होम—करवीर पुष्प, बिल्व और पय से १०० अथवा १०; मार्जन—१०; तर्पण—१०, श्लोकपाठ-संख्या—१०; श्लोकपाठ-आहुति—१; पूजन यन्त्र—चार त्रिशूल के मध्य में 'क्लीं' लिखे ।

**भावार्थ**—हे भगवति ! आपके दिव्य शिर की दिव्य माँग, जिसमें सिन्दूर भरा हुआ है, इस प्रकार शोभा दे रही है मानो घने केश रूप प्रबल अन्धकार में शत्रुवृन्द द्वारा कैद किए हुए किसी सूर्य की नवीन किरण अन्धकार को भेद कर बाहर फूट निकली हो । आप श्री की दिव्य माँग (= सीमन्त) तथा परम दिव्य मुख की सुन्दर लहर हमारा शुभ कल्याण करने वाली हो ॥ ४४ ॥

**अरालैः स्वाभाव्यादलिकलभसश्रीभिरलकैः**
**परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् ।**
**दरस्मेरे यस्मिन् दशनरुचिकिञ्जल्करुचिरे**
**सुगन्धौ माद्यन्ति स्मरदहनचक्षुर्मधुलिहः ॥ ४५ ॥**

**लक्ष्मीधरा—अरालैः** कुटिलैः **स्वाभाव्यात्** स्वभावतः **अलिकलभसश्रीभिः** अलिकलभैः भ्रमरपोतैः सश्रीभिः समानाभैः । समासान्तविधेरनित्यत्वात् कप्रत्ययाभावः । **अलकैः** चूर्णकुन्तलैः, **परीतं** परितः इतं परीतं व्याप्तं **ते** तव, **वक्त्रं परिहसति**, तत्तुल्यं न भवतीत्यर्थः । **पङ्केरुहरुचिं** पङ्केरुहस्य कमलस्य रुचिं सौभाग्यं, **दरस्मेरे** दरमीषत् स्मेरो विकासः यस्य तादृशे, **यस्मिन् दशनरुचिकिञ्जल्करुचिरे** दशनानां रुचय एव किञ्जल्काः केसराः तैः रुचिरे सुभगे, **सुगन्धौ** सुपद्मगन्धौ, **माद्यन्ति** नन्दन्ति । **स्मरदहनचक्षुर्मधुलिहः** स्मरदहनस्य स्मरारेः ईश्वरस्य चक्षूंष्येव मधुलिहः भ्रमराः । जितमन्मथस्यापि वदनसौन्दर्यदर्शनं मादनहेतुरिति किमु वक्तव्यं त्वद्वदनसौन्दर्यस्वरूपमिति भावः ।

**अत्रेत्थं पदयोजना**—हे भगवति ! स्वाभाव्यादरालैः अलिकलभसश्रीभिः अलकैः परीतं ते वक्त्रं पङ्केरुहरुचिं परिहसति । दरस्मेरे दशनरुचिकिञ्जल्करुचिरे सुगन्धौ यस्मिन् स्मरदहनचक्षुर्मधुलिहः माद्यन्ति ।

अत्र उपमालङ्कारः, पङ्केरुहरुचिं परिहसतीत्यनेन वक्त्रस्य कमलसादृश्यप्रतीतेः । अलिकलभसश्रीभिरित्यत्र उपमालङ्कारः । अनयोरङ्गाङ्गिभावेन सङ्करः। दशनरुचिकिञ्जल्करुचिरे इत्यत्र रूपकालङ्कारः, दशनरुचीनां किञ्जल्कत्वेनारोपणात् । स्मरदहनचक्षुर्मधुलिहः इत्यत्र रूपकालङ्कारः; चक्षुषां मधुलिट्त्वेनारोपणात् । अनयोरङ्गाङ्गिभावेन सङ्करः, सङ्करद्वयस्य संसृष्टिः ॥ ४५ ॥

## * सरला *

**अरालैः** इति । **अरालैः** कुटिल, **स्वाभाव्यात्** स्वभाव से ही, **अलिकलभसश्रीभिः** भ्रमरपोत के समान आभा वाले । समासान्त विधि के अनित्य होने से यहाँ क प्रत्यय नहीं हुआ है । **अलकैः** घुँघराले बालों से, **परीतं** चारों ओर से घिरा हुआ, **ते** आपका, **वक्त्रं** मुख, **परिहसति** उसके समान नही होता है । **पङ्केरुहरुचिं** कमल के सौभाग्य को, **दरस्मेरे** यहाँ दर शब्द ईषदर्थ में प्रयुक्त है, स्मेरे अर्थात् कुछ विकास हुआ है जिसका, **यस्मिन् दशनरुचिकिञ्जल्करुचिरे** दाँतों की शोभा, जो केशर के समान है उससे रुचिर अर्थात् सौन्दर्य युक्त, **सुगन्धौ** सुन्दर कमल के गन्ध पर, **माद्यन्ति** प्रसन्न हो जाते हैं, **स्मरदहनचक्षुर्मधुलिहः** भगवान् सदाशिव के चक्षुरूप भ्रमर, जब कामदेव को भी नष्ट करने वाले सदाशिव आपके मुख के सौन्दर्य को देखते ही कामातुर हो जाते हैं, तब उस मुख की सुन्दरता का बखान कौन करे ?

**अर्थ**—हे भगवति ! स्वभावतः घुँघराले भ्रमरपोतक के समान कान्तियुक्त आपके केश पाशों से चारों ओर से घिरा हुआ आपका यह मुख मण्डल कमल की शोभा का परिहास कर रहा है जिसके दातों के प्रकाश रूपी केशर से मनोहर ईषद् मन्द स्मित विकास युक्त सुगन्धि पर कामदेव का भी दहन करने वाले शिवजी के नेत्र रूपी भौंरे मस्त हो जाते हैं ।

यहाँ उपमालङ्कार है । 'पंकेरुहरुचिं परिहसति' इस शब्द से वक्त्र का कमल सादृश्य प्रतीत हो रहा है । 'अलिकलभसश्रीभिः' यहाँ भी उपमा अलङ्कार है । दोनों में अङ्गाङ्गिभाव होने से संकरालङ्कार है । 'दशनरुचि किञ्जल्करुचिरे, दशनरुचि को किञ्जल्क रूप से आरोपित करने के कारण यहाँ रूपकालङ्कार है । नेत्रों को भ्रमर रूप से आरोपित करने के कारण 'स्मरदहनचक्षुर्मधुलिहः' यहाँ भी रूपकालङ्कार है । दोनों के अङ्गाङ्गिभाव होने से दो सङ्कर के कारण संसृष्टि अलङ्कार है ॥ ४५ ॥

**ध्यान**—'अ' । **श्लोकस्थ वर्णबीज 'अ' का ध्यान** इस प्रकार है—

**अ**— केतकीपुष्पगर्भाभां द्विभुजां हंसलोचनाम् ।
शुक्लपट्टाम्बरधरां पद्ममालाविभूषिताम् ॥
चतुर्वर्गप्रदां नित्यं नित्यानन्दमयीं पराम् ।
वराभयकरां देवीं नागपाशसमन्विताम् ॥
शृणु तत्त्वमकारस्य अतिगोप्यं वरानने ।
शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा ॥

पञ्चदेवमयं वर्णं शक्तिद्वयसमन्वितम् ।
निर्गुणं सगुणोपेतं स्वयं कैवल्यमूर्तिमान् ।
बिन्दुद्वयमयं वर्णं स्वयं प्रकृतिरूपिणी ॥

**वाक्सिद्धिप्रदायक यन्त्र**

सं
नं
सं

**बीजाक्षर**—'अ'; जप-संख्या—१०००; जप-स्थान—मणिपूरचक्र; होम—कल्हार कुसुम, मधु, पञ्च मेवा और शर्करा से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—३ ।

**भावार्थ**—हे भगवति ! आपके घुँघराले बाल आपके मुख कमल पर बहुत से मधुकर-समूहवत् शोभा पा रहे हैं । आप श्री का अति सुन्दर मुख-कमल मानों दूसरे सुन्दर कमलों के सौन्दर्य पर हास्य कर रहा है । आप श्री के किञ्चित् हास्ययुक्त, सुगन्धिमय सुन्दर दन्तपंक्ति वाले श्री सरोज वदन पर भगवान् श्री स्मरहर के नेत्ररूप भ्रमर मदमस्त हैं । वस्तुतः 'कलभ' का अर्थ हाथी का बच्चा होता है । यहाँ उसका अर्थ है नवीन मधुकर ॥ ४५ ॥

**ललाटं लावण्यद्युतिविमलमाभाति तव यत्**
**द्वितीयं तन्मन्ये मकुटघटितं चन्द्रशकलम् ।**
**विपर्यासन्यासादुभयमपि सम्भूय च मिथः**
**सुधालेपस्यूतिः परिणमति राकाहिमकरः ॥ ४६ ॥**

**लक्ष्मीधरा । ललाटं** निटिलं **लावण्यद्युतिविमलं** लावण्यं तारल्यमेव द्युति-ज्योंत्स्ना तया विमलं स्निग्धं, **आभाति** आ समन्ताद्भाति । **तव यत् द्वितीयं तत् मन्ये** शङ्के । **मकुटघटितं** किरीटकलितं **चन्द्रशकलं** चन्द्रार्धखण्डम्, **विपर्यासन्यासात्**—ललाटै अवाक्-कोणं वर्तते; चन्द्रशकलं ललाटस्योपरि ऊर्ध्वशृङ्गं वर्तते; उभयोर्विपर्यासन्यासः शृङ्गचतुष्क-सम्मेलनं, तस्मात् **उभयमपि** ललाटचन्द्रशकले, **सम्भूय** मिलित्वा, चकारोऽतिशयवाची । **मिथः** अन्योन्यं **सुधालेपस्यूतिः** सुधायाः अमृतस्य लेपः विलेपनं तस्य स्यूतिः सीवनं यस्य सः अमृतरससान्द्र इत्यर्थः । **परिणमति** ताद्रूप्यं भजति, तदा-काराकारित इत्यर्थः । **राका-हिमकरः** राकायां पूर्णिमायां हिमकरश्चन्द्रः ।

**अत्रेत्थं पदयोजना**—हे भगवति! तव यत् ललाटं लावण्यद्युतिविमलं आभाति तत् मकुटघटितं द्वितीयं चन्द्रशकलं मन्ये । यद्यस्मात्कारणात् उभयमपि विपर्यासन्यासात् मिथः सम्भूय च सुधालेपस्यूतिः राकाहिमकरः परिणमति ।

पूर्णिमायां सम्पूर्णता चन्द्रस्य कथं भवेत्, किरीटे अर्धदेहाविष्टतया चन्द्रः परिदृश्यत इति पूर्णिमाचन्द्रं निमित्तीकृत्य ललाटमुत्प्रेक्ष्यते ॥

अत्र उत्प्रेक्षालङ्कारः, ललाटस्य अर्धचन्द्रत्वेनोत्प्रेक्षणात् ।

यद्वा, द्वितीयार्धे अतिशयोक्तिरलङ्कारः, राकाहिमकरस्य ललाटकिरीटघटितचन्द्ररेखा-द्वितयनिर्माणासम्बन्धेऽपि सम्बन्धकथनात् । अत्र कविकल्पितवस्तुवृत्तसौन्दर्ययोरभेदाध्यव-सायः । उत्प्रेक्षातिशयोक्त्योः अङ्गाङ्गिभावेन सङ्करः । 'अध्यवसायव्यापारप्राधान्ये उत्प्रेक्षा'

'अध्यवसितप्राधान्ये त्वतिशयोक्तिः' । सूत्रद्वयस्यायमर्थः—'अध्यवसायविषयभूते अध्यवसानक्रियारूपस्य व्यापारस्य प्राधान्यं यत्र तत्रोत्प्रेक्षोत्थानम् । यदा अध्यवसायविषयभूते अध्यवसितस्यैव प्राधान्यं प्रतीयते, तदा अतिशयोक्तेरुत्थानम् । अध्यवसायो नामनिश्चयज्ञानम् । तच्च कविप्रौढोक्तिसिद्धम्, न वास्तवम् । उत्प्रेक्षास्तू अध्यवसानक्रियाप्राधान्यस्य द्योतकाः । 'मन्ये शङ्के ध्रुवम्' इत्येवमादयः स्वरूपोत्प्रेक्षाद्योतकाः । हेतूत्प्रेक्षायां हेतुरेव । फलोत्प्रेक्षायां फलमेव द्योतकम् । अत एव स्वरूपोत्प्रेक्षायां इवाद्यभावे हेतुफलयोरसम्भवात्, अतिशयोक्त्युत्प्रेक्षयोः भेदाभावात् सैवोत्प्रेक्षा अतिशयोक्तौ अन्तर्भूतेति दिङ्मात्रमुक्तम् ॥४६॥

## * सरला *

**ललाटमिति—ललाटं** निटिलप्रदेश, **लावण्यद्युतिविमलं** अत्यन्त सौन्दर्य की ज्योत्स्ना से विमल दिखाई पड़ने वाला, अतएव अत्यन्त स्निग्ध, **आभाति** चारों ओर से शोभित हो रहा है, **तव यत् द्वितीयं तन्मन्ये** शङ्का करता हूँ, **मुकुटघटितं** किरीट से कलित, **चन्द्रशकलं** चन्द्रार्धखण्ड, **विपर्यासन्यासात्** ललाट को जिसका मुख नीचे की ओर है, चन्द्रशकल जो ललाट के ऊपर ऊर्ध्वशृङ्ग जैसा प्रतीत हो रहा है दोनों को उलट कर रखने से चार शृङ्गों के सम्मेलन से, **उभयमपि** ललाट और चन्द्रखण्ड दोनों ही, **सम्भूय** मिल कर **च** यहाँ चकार अतिशय वाचक है, **मिथः** एक दूसरे में परस्पर, **सुधालेपस्यूतिः** अमृत रस के लेप से सिला गया अर्थात् अमृत रस से अत्यन्त घना, **परिणमति** ताद्रूप्य को प्राप्त हो जाता है अर्थात् उसके आकार के समान आकारित हो जाता है जो **राका हिमकर** पूर्णिमा का चन्द्रमा बन गया है ।

**पदयोजना का अर्थ**—हे भगवति ! आपका जो ललाट अत्यन्त सौन्दर्य की ज्योत्स्ना से विमल दिखाई पड़ रहा हैं उसे मैं मुकुट में जड़ी हुई चन्द्रमा की दूसरी कला मानता हूँ जो एक दूसरे पर उलट कर रखने से दोनों के एक रूप हो जाने से अमृत के लेप से समन्वित पूर्ण चन्द्रमा बन गया है ।

पूर्णिमा में चन्द्रमा की सम्पूर्णता किस प्रकार होगी ? जबकि किरीट (= मुकुट) में आधे देह वाला चन्द्रमा दिखाई पड़ रहा है । अतः इसी पूर्ण चन्द्र को निमित्त बना कर यहाँ ललाट में भी अर्धचन्द्र की उत्प्रेक्षा की गई है ।

यहाँ पर उत्प्रेक्षालङ्कार है क्योंकि ललाट के अर्धचन्द्र में उत्प्रेक्षा की गई है । अथवा श्लोक के द्वितीयार्ध में अतिशयोक्ति अलंकार है । पूर्णमासी के चन्द्रमा का ललाट किरीट घटित दो अर्ध चन्द्र के सम्बन्ध न होने पर भी उनमें सम्बन्ध कहा गया है इसलिये यहाँ उत्प्रेक्षा अलङ्कार है । यहाँ पर कवि की कल्पना से दो वृत्तों के सौन्दर्य का अभेद अध्यवसाय कहा गया है । अतः उत्प्रेक्षा और अतिशयोक्ति के अङ्गाङ्गीभाव होने से सङ्कर अलङ्कार है । **'अध्यवसायव्यापापरप्राधान्ये उत्प्रेक्षा'** और **'अध्यवसितप्राधान्ये त्वतिशयोक्तिः'** इन दो सूत्रों का अर्थ इस प्रकार है—जहाँ अध्यवसाय के व्यापार का प्राधान्य होता है वहाँ उत्प्रेक्षालङ्कार होता है और जहाँ अध्यवसित का प्राधान्य होता है वहाँ अतिशयोक्ति अलङ्कार होता है । निश्चय ज्ञान को 'अध्यवसाय' कहते हैं जो कि कवियों की प्रौढोक्ति से सिद्ध किया जाता है, वस्तुतः है नहीं । उत्प्रेक्षा अध्यवसान क्रिया की प्रधानता का द्योतक है । मन्ये शङ्के ध्रुवमित्यादि स्वरूपोत्प्रेक्षा के द्योतक शब्द होते हैं । हेतूत्प्रेक्षा

में हेतु तथा फलोत्प्रेक्षा में फल द्योतक शब्द होते हैं। इसलिये जहाँ स्वरूपोत्प्रेक्षा होती है वहाँ इवादि के न होने से हेतूत्प्रेक्षा और फलोत्प्रेक्षा असम्भव है। अतिशयोक्ति और उत्प्रेक्षा में भेद न होने से वह उत्प्रेक्षा अतिशयोक्ति के अन्तर्भूत रहती है। इस प्रकार यह केवल दिङ्मात्र निर्देश किया गया है ॥ ४६ ॥

**ध्यान—'ल'। श्लोकस्थ वर्णबीज 'ल' का ध्यान—**

चतुर्भुजां पीतवस्त्रां रक्तपङ्कजलोचनाम्।
सर्वदा वरदां भीमां सर्वालङ्कारभूषिताम् ॥
योगीन्द्रसेवितां नित्यां योगिनीं योगरूपिणीम्।
चतुर्वर्गप्रदां देवीं नागहारोपशोभिताम् ॥
एवं ध्यात्वा लकारं तु तन्मन्त्रं दशधा जपेत्।
लकारं, चञ्चलापाङ्गि कुण्डलीत्रयसंयुतम् ॥
पीतविद्युल्लताकारं सर्वरत्नप्रदायकम्।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ॥
त्रिशक्तिसहितं देवि त्रिबिन्दुसहितं परम्।
आत्मादितत्त्वसहितं हृदि भावय पार्वति ॥

**बीजाक्षर**—'ल'; जप-संख्या—१०००; जप-स्थान—अनाहत चक्र; होम—मधुरत्रय, दाड़िमी कुसुम, सिद्ध चरु से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—४।

**गर्भधारण यन्त्र**

**भावार्थ**—हे भगवति! आप श्री के ललाट को, जो विमल लावण्यमयी ज्योति से चमक रहा है, मैं आप के दिव्य मुकुट का कलायुक्त दूसरा चन्द्रखण्ड समझता हूँ। ललाटस्थ चन्द्रार्द्ध और मुकुटस्थ चन्द्रार्द्ध दोनों के संयोग से (विश्व के मोहरूप महातमान्धकार में प्रशान्त प्रकाश देने वाला) अमृतमय पूर्णचन्द्र बन गया है ॥ ४६ ॥

**भ्रुवौ भुग्ने किञ्चिद्भुवनभयभङ्गव्यसनिनि**
**त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणम्।**
**धनुर्मन्ये सव्येतरकरगृहीतं रतिपतेः**
**प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमुमे ॥ ४७ ॥**

**लक्ष्मीधरा**—**भ्रुवौ** भ्रूवल्ली, **भुग्ने** अवाक्छृङ्गतया वलयिते, **किंचित्** नात्यन्तं **भुवनभयभङ्गव्यसनिनि!** भुवनानां जगतां भयस्य उपद्रवस्य भङ्गे नाशकरणे व्यसनं तदेकप्रवणता अस्या अस्तीति भुवनभयभङ्गव्यसनिनि तस्याः सम्बुद्धिः। **त्वदीये** भवत्सम्बन्धिन्यौ, **नेत्राभ्यां** अक्षिभ्यां, **मधुकररुचिभ्यां** मधुकराणां भ्रमराणामिव रुचिःशोभा ययोस्ताभ्यां मधुकराकाराकारिताभ्यामित्यर्थः। **धृतगुणं** धृतः सम्पादितः गुणः ज्यावल्ली यस्य तत्, **धनुः**, चापं **मन्ये** शङ्के। **सव्येतरकरगृहीतं** सव्यो दक्षिणः तदितरो वामः स चासौ करश्च तेन गृहीतम्: सव्येतरशब्देन एकनैव हस्तेन सर्वदा धृतम्, न तु बाणप्रयोगार्थमिति सूच्यते। **रतिपतेः**

मन्मथस्य, **प्रकोष्ठे** मणिबन्धे, **मुष्टौ** अङ्गुलीनां ग्रन्थौ, अयं मुष्टिशब्दः अनुशासनवशात् स्त्रीलिङ्गोऽपि प्रयोगबाहुल्यात् पुल्लिङ्गतामापन्नः, गण्डूषशब्दवत् । यथा 'उदरं परिमाति मुष्टिना' इति नैषधे प्रयोगः । **स्थगयति** स्थगनं छादनं कुर्वति सति, **निगूढान्तरं** निगूढे अन्तरे मौर्विदण्डयोर्यस्य तत्, **उमे** ! हे पार्वति ।

**अत्रेत्थं पदयोजना**—हे उमे ! भुवनभयभङ्गव्यसनिनि । त्वदीये किञ्चिद्भुग्ने भ्रूवौ मधुकररुचिभ्यां नेत्राभ्यां धृतगुणं रतिपतेः सव्येतरकरगृहीतं प्रकोष्ठे मुष्टौ च स्थगयति सति निगूढान्तरं धनुर्मन्ये ॥

अत्र भ्रुवौ धनुरिति रूपकम्, भ्रुवोः धनूरूपेण निरूपणात् । अत एव द्विवचनैक-वचनयोः सामानाधिकरण्यं भ्रुवौ धनुरिति ।

**अयं भावः**—विशेषणं चतुर्विधम्—व्यावर्तकविशेषणं, उपरञ्जकविशेषणं, उपलक्षण-विशेषणं, उपधानविशेषणं चेति । तत्र व्यावर्तकविशेषणं नीलोत्पलमित्यादौ, तत्र नैल्यस्य श्वेतादिव्यावर्तकत्वात् । उपरञ्जकविशेषणं द्विविधम्—उपरञ्जनस्य आरोपविषयगोचरत्वेन, आरोप्यमाणगोचरत्वेन चेति । तत्र आरोपत्रिषयगोचरत्वं 'मुखं चन्द्रः' इत्यादौ । तत्र चन्द्रत्वेन मुखस्य उपरञ्जनम् । अत एव लिङ्गभेदेऽपि विशेषणविशेष्यभावः सिद्धः । 'स तदुच्चकुचौ भवन्' इति नैषधे । तत्र सः इति कलश एकः, द्वौ कुचौ, उभयोर्विशेषणविशेष्यभावः । आरोप्यमाणविशेषणं तु—'तिरस्करिण्यो जलदा भवन्ति' अत्र आरोप्यमाणतिरस्करिणीत्वम् आरोपविषयात्मतया स्थितम् । एतच्च पूर्वमेव निरूपितम् । उपलक्षणविशेषणम्-काकवद्देव-दत्तगृहम् । पृथक् स्थिते (तिः) हि धर्मिणि उपलक्षणमिति उपलक्षणविदः । काकत्वादिजात्या-विष्टस्यैव उपलक्षणत्वात् विशेषणतो भेदः । उपाधानविशेषणम्—'रक्तं स्फटिकम्' इति । धर्मात्मना उपाधायकत्वात् उपलक्षणतो भेदः । व्यवर्तकत्वात् नीलोत्पलादेर्व्यावृत्तिः ।

**अत्रेदं तत्त्वम्**—उपरञ्जकविशेषणस्थले—'मुखं चन्द्रः' 'कलशः स्तनौ' 'भ्रुवौ धनुः' इत्यादिस्थले—चन्द्रकलशाद्युपरञ्जकविशेषणानि आश्रितलिङ्गसङ्ख्यान्येव मुखादिकं स्तना-दिकं च विशिंषन्तीति, न स्तनादेः मुखादेर्वा लिङ्गं सङ्ख्यां वा भजन्ते । नियतलिङ्गतया विशेष्यनिघ्नत्वाभावात् इतरेभ्यो विशेषणेभ्यो व्यावृत्तिः । मन्येशब्दप्रयोगात् सम्भावनोत्था-नात् उत्प्रेक्षालङ्कारोऽपि । अनयोः अनुसृष्टिः, अपृथक्स्थितयोः अलङ्कारयोः अङ्गाङ्गिभावात् । अपृथक्स्थितयोः अलङ्कारयोरङ्गाङ्गिभावोऽनुसर्जनम्, पृथक्स्थितयोस्तु सङ्करः इत्यालङ्कारिक-रहस्यम् । अतिशयोक्तिरपि, भ्रूमध्यनासिकामध्ययोः मुष्टिप्रकोष्ठस्थगितत्वेनाध्यवसानात् । अत्र नासिकायाः सव्येतरकरत्वेनारोपणप्रतीतेः रूपकालङ्कारो ध्वन्यते । यद्वा—सव्येतरकर-त्वेन नासिकायाः अध्यवसानप्रतीतेः अतिशयोक्तिः । अनयोः सन्देहः सङ्करः ॥ ४७ ॥

## * सरला *

**भ्रुवौ भुग्ने** इति । **भ्रुवौ** भ्रूवल्ली, **भुग्ने** टेढ़े शृङ्ग होने के कारण अर्थात् वलयित, **किञ्चित्** अधिक नहीं, **भुवनभयभङ्गव्यसनिनि** संसार के भय को नाश करने में अत्यन्त संलग्न चित्त है जिसका, यह सम्बोधन का रूप है । **त्वदीये** आप से सम्बन्धित, **नेत्राभ्यां** दोनों नेत्रों से, **मधुकररूचिभ्यां** मधुकर अर्थात् भ्रमर समूहों के समान शोभा है जिसकी अर्थात् मधुकर के आकार के समान आकार वाली, **धृतगुणं** सम्पादित प्रत्यञ्चा वाली, **धनुः** चाप, **मन्ये** समझता हूँ, **सव्येतरकरगृहीतं** एक मात्र बाएँ हाथ से सर्वदा ग्रहण किया गया

है। अर्थात् वह भी बाण प्रयोग करने के लिय नहीं है, **रतिपतेः** कामदेव के, **प्रकोष्ठे** मणिबन्ध में, **मुष्टौ** अङ्गुलियों की ग्रन्थि में, यह 'मुष्टि' शब्द अनुशासन के कारण स्त्रीलिङ्ग भी है, किन्तु अनेक स्थानों पर प्रयोग होने से यह पुल्लिङ्ग में परिवर्त्तित दिखाई पड़ता है। 'गण्डूष' शब्द की तरह। जैसा कि नैषध में 'उदरं परिमाति मुष्टिना' यह पुल्लिङ्ग प्रयोग है। **स्थगयति** स्थगन अर्थात् आच्छादन करते हुये, **निगूढान्तरं** प्रत्यञ्चा और दण्ड के बीच का भाग जिसके द्वारा छिपा दिया गया है, **उमे** हे पार्वति!।

**पदयोजना का अर्थ**—हे उमे ! हे भुवन के उपद्रव के विनाश के लिये सर्वदा एक मन से संलग्न रहने वाली भगवति ! आपके भौंहों के तेवर चढ़ जाने पर, मैं उसे बाएँ हाथ में लिये हुये कामदेव के धनुष की उपमा देता हूँ (प्रकृत में नासिकावाही हाथ है) जिसकी प्रत्यञ्चा (डोरी) भौरों की कान्ति वाले आपके दोनों नेत्रों से बनी हुई है और जिसका मध्यभाग (प्रत्यञ्चा और दण्ड का मध्यभाग) कलाई और मुट्ठी के नीचे (प्रकृत में नासिका और भ्रू) के मध्य भाग में छिपा हुआ है।

भ्रू को धनुष् रूप से निरूपण करने के कारण यहाँ 'भ्रुवौ धनुः' में रूपक अलङ्कार है। इतना ही नहीं 'भ्रुवौ' और 'धनुः' यहाँ द्विवचन और एकवचन का समानाधिकरण भी है।

यहाँ यह **भाव** समझ लेना चाहिए कि विशेषण चार प्रकार का होता है—१. व्यावर्त्तक विशेषण, २. उपरञ्जक विशेषण, ३. उपलक्षण विशेषण और ४. उपधान विशेषण। नीलो-त्पलमित्यादि स्थल में व्यावर्त्तक विशेषण है क्योंकि वहाँ नील पद से श्वेतादि की निवृत्ति हो जाती है। उपरञ्जक विशेषण दो प्रकार का होता है—एक वह जहाँ उपरञ्जन आरोप का विषय होकर दिखाई पड़ता है और दूसरा वह जहाँ आरोप्यमाण का विषय होकर दिखाई पड़ता है। 'मुखं चन्द्रः' यहाँ पर आरोपविषयगोचर हैं वहाँ चन्द्रमा से मुख का उपरञ्जन द्योतित है। इसलिये लिङ्ग भेद में भी विशेषणविशेष्यभाव सिद्ध है। **नैषध** में **'स तदुच्चकुचौ भवन्'** यहाँ पर सः कलश एक है और द्वौ कुचौ दो हैं फिर भी विशेषणविशेष्यभाव हुआ है, आरोप्यमाण विशेषण का उदाहरण **'तिरस्करिण्यो जलदा भवन्ति'** यहाँ आरोप्यमाण 'तिरस्करिणीत्व' आरोप का विषय बनकर स्थित हो गया है। यह बात पहले कही जा चुकी है। उपलक्षण विशेषण जैसे **'काकवद्देवदत्तस्य गृहम्'** 'काक के समान देवदत्त का घर है' सबसे पृथक् स्थिति के लिये यह प्रयोग हैं जो धर्मी में उपलक्षण है ऐसा उपलक्षण वेत्ताओं का मत है। काकत्वादि जात्याविष्ट के उपलक्षण होने से यह विशेषण से भेद रखता है। उपधान विशेषण का 'रक्तं स्फटिकम्' यह उदाहरण है। यहाँ धर्मात्मरूप से उपधायक होने के कारण उपलक्षण से भेद है। यहाँ व्यावर्त्तक होने के कारण नीलोत्पलादि की व्यावृत्ति हो गई।

इसका **भाव** यह है 'मुखं चन्द्रः' 'कलशः स्तनौ' 'भ्रुवौ धनुः' इत्यादि उपरञ्जक स्थल में चन्द्रकलश धनुष् इत्यादि उपरञ्जक विशेषण अपने में रहने वाले लिङ्ग और संख्या में ही रहते हैं। वे मुख, स्तन एवं भ्रू आदि के लिङ्ग संख्या में नहीं बदलते, क्योंकि वे नियत लिङ्ग वाले हैं। अतः विशेष्य के लिङ्ग और संख्या के अनुसार नहीं होते। हाँ इतना अवश्य है कि वे इतर विशेषणों की व्यावृत्ति कर देते हैं। यहाँ प्रकृत में 'मन्ये' शब्द के प्रयोग से सम्भावना के उत्थान होने से उत्प्रेक्षालङ्कार भी है। ये दोनों अनुसृष्टि हैं क्योंकि पृथक् रूप से न रहने के कारण इनमें अङ्गाङ्गीभाव भी है। यदि पृथक् पृथक् स्थिति मानें तो सङ्करालङ्कार

भी सम्भव है यही अलङ्कारिकों का रहस्य है। भ्रूमध्य और नासिकामध्य में मुष्टि प्रकोष्ठ के स्थगितत्व का अध्यवसान होने से यहाँ अतिशयोक्ति भी सम्भव है। यहाँ नासिका में सव्येतरकरत्व के आरोपण की प्रतीति होने से रूपकालङ्कार है जो ध्वनि से प्रतीत होता है, अथवा सव्येतर-करत्व से नासिका के अध्यवसान की प्रतीति होने से अतिशयोक्ति है। दोनों मिलाकर सन्देह संकरालङ्कार है ॥ ४७ ॥

**ध्यान**—भ्रु = भ् + र् + उ। **श्लोकस्थ वर्णबीज 'भ्रु' का ध्यान**—

**भ**— तडित्प्रभां महादेवीं नागकङ्कणशोभिताम्।
चतुर्वर्गप्रदां देवीं साधकाभीष्टसिद्धिदाम् ॥
एवं ध्यात्वा झकारं तु तन्मन्त्रं दशधा जपेत्।
झकारं शृणु चर्वाङ्गि स्वयं परमकुण्डलि ॥
महामोक्षप्रदं वर्णं तरुणादित्यसम्प्रभम्।
पञ्चप्राणमयं वर्णं पञ्चदेवमयं प्रिये ॥

**र**— ललज्जिह्वां महारौद्रीं रक्तास्यां रक्तलोचनाम्।
रक्तमाल्याम्बरधरां रक्तालङ्कारभूषिताम् ॥
रक्तवर्णामिष्टभुजां रक्तपुष्पोपशोभिताम्।
महामोक्षप्रदां नित्यां अष्टसिद्धिप्रदायिकाम् ॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्।
रेफं च चञ्चलापाङ्गि कुण्डलीद्वयसंयुतम्।
सर्वतेजोमयं वर्णं सततं मनसि चिन्तयेत्।

**उ**— पीतवर्णां त्रिनयनां पीताम्बरधरां पराम् ॥
द्विभुजां जटिलां भीमां सर्वसिद्धिप्रदायिनीम्।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
उकारं परमेशानि अधः कुण्डलिनी स्वयम्।
पीतचम्पकसङ्काशं पञ्चदेवमयं सदा ॥
पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम्।

**बीजाक्षर**—'भ्रु'; जपादि विधान उपर्युक्त समान। पूजन यन्त्र—चतुष्कोण में 'ह्लीं ह्लीं ह्लीं' लिखे।

**सर्वजनवशीकरण यन्त्र**

| ह्लीं<br>ह्लीं<br>ह्लीं |
|---|

**भावार्थ**—हे त्रिभुवन के मद को दूर करने वाली भगवति! हे त्रिभुवनभयापहे! आप श्री की वक्र भृकुटि में रतिपति कामदेव के धनुष का दर्शन होता है, जिसमें आप श्री के नेत्र-मधुकर गुण (ज्या) रूप हैं। उस धनुष को कामदेव ने अपनी वाम कर-मुष्टि में मध्य भाग से पकड़ा है। धनुष का मध्य भाग करमुष्टि में होने से उस भाग की श्यामता दृष्टिगोचर नहीं होती (अर्थात् एक भ्रुकुटि धनुषार्द्ध भाग है, दूसरी भृकुटि धनुषार्द्ध है—इन दोनों के बीच में नासिका के ऊपर का खाली भाग = करमुष्टि)। इस प्रकार अपने भक्तों के चित्त से भय दूर करने के विचार से किञ्चिद्विचार-मुद्रा-कालीन भ्रू-दर्शन का यहाँ वर्णन है ॥ ४७ ॥

**अहः सूते सव्यं तव नयनमर्कात्मकतया**
**त्रियामां वामं ते सृजति रजनीनायकतया ।**
**तृतीया ते दृष्टिर्दरदलितहेमाम्बुजरुचिः**
**समाधत्ते सन्ध्यां दिवसनिशयोरन्तरचरीम् ॥ ४८ ॥**

**लक्ष्मीधरा—अहः** दिवसं **सूते** जनयति । **सव्यं** दक्षिणं, **तव नयनं** नेत्रं, **अर्कात्मकतया** सूर्यात्मकतया, **त्रियामां** रात्रिं **वामं** सव्यतरं, **ते** तव, **सृजति** सूते, **रजनीनायकतया** चन्द्रात्मकतया । **तृतीया** निटिलस्थिता, **ते** तव, **दृष्टिः दरदलितहेमाम्बुजरुचिः** दरदलित-मीषद्विकसितं हेमाम्बुजं रक्ताम्बुजं तस्येव रुचिर्यस्याः सा, **समाधत्ते** सम्यगाधत्ते करोति, **दिवसनिशयोः** अहोरात्रयोः, **अन्तरचरीं** मध्यवर्तिनीं, **सन्ध्याम्** सायंप्रातरात्मकसन्ध्याकाल-द्वितयस्य अग्निहोत्रसाध्यत्वादिति भावः ।

**अत्रेत्थं पदयोजना**—हे भगवति ! तव सव्यं नयनं अर्कात्मकतया अहः सूते वामं नयनं रजनीनायकतया त्रियामां सृजति । ते तृतीया दृष्टिः दरदलितहेमाम्बुजरुचिः दिवस-निशयोः अन्तरचरीं सन्ध्यां समाधत्ते ।

अत्र सूर्यचन्द्राग्न्यात्मकनयनत्रयेण भगवत्याः अवयवविशेषण दिवसनिशासन्ध्यात्मक-कालत्रयोपलक्षितपक्षमासर्तुयुगकल्पादिकालोत्पत्तिकथनात् भगवत्याः कालावच्छेद्यत्वं दूरत एवापास्तमिति ध्वन्यते । इदमुत्तमं काव्यम् । मध्यमकाव्यताप्रतीतिरपि, 'अर्कात्मतया' 'रजनीनायकमयम्' इति वाच्यमानत्वात् । दरदलितहेमाम्बुजरुचिरित्यनेन अग्निनेत्रत्वं ध्वन्यन्ते । अयमनुप्राणनात्मकः मध्यमोत्तमकाव्यप्रयोजकध्वन्योः संसृष्टिः । संसृज्यमानं व्यङ्ग्यद्वयं प्रधानध्वनिना अङ्गाङ्गिभावेन सङ्कीर्यत इति दिक् ॥ ४८ ॥

## * सरला *

**अह** इति । **अहः** दिन **सूते** उत्पन्न करता है **तव सव्यं नयनं** आपका दाहिना नेत्र **अर्कात्मकतया** सूर्यात्मक होने के कारण **त्रियामां** रात्रि **वामं** बायाँ **ते** आपका **सृजति** उत्पन्न करता है **रजनीनायकतया** चन्द्रात्मक होने से **तृतीया** निटिल (भाल) प्रदेश में स्थित तीसरी, **ते** आपकी **दृष्टिः** दृष्टि **दरदलितहेमाम्बुजरुचिः** किञ्चिद्विकसित सुवर्णमय कमल की कान्ति वाला **समाधत्ते** अच्छी प्रकार से करता है, **दिवसनिशयोः** दिन और रात्रि के **अन्तरचरीं** मध्य में रहने वाली **सन्ध्यां** सायं प्रातःकालिक दोनों सन्ध्याकाल जिसमें अग्निहोत्र किया जाता है ।

**पदयोजना का अर्थ**—हे भगवति ! आपका दक्षिण नेत्र सूर्यात्मक होने के कारण दिन बनाता है और बायाँ नेत्र—चन्द्रात्मक होने से रात्रि की सृष्टि करता है तथा किञ्चिद् विकसित सुवर्ण निर्मित कमल की शोभा वाली मस्तक में रहने वाली आपकी तीसरी दृष्टि दिन और रात के मध्य में रहने वाली प्रातःकालिक और सायंकालिक दोनों संध्या काल की सृष्टि करता है—जिसमें अग्निहोत्रादि कार्य किये जाते हैं ॥

यहाँ सूर्यात्मक, चन्द्रात्मक एवं अग्न्यात्मक ये तीन नेत्र भगवती के अवयव विशेषण होने से दिन, रात एवं सन्ध्यात्मक कालत्रयोपलक्षित पक्ष, मास, ऋतु, युग एवं कल्पादि

कालों की उत्पत्ति कहने से भगवती कालावच्छेद्य हैं यह बात दूर से ही अपास्त हो गई— यह ध्वनि निकलती है। यह एक उत्तम काव्य है इससे मध्यम काव्य की भी प्रतीति होती है। 'अर्कात्मकतया रजनीनायकतयां' ऐसा वाच्यमान होने से 'दरदलित हेमाम्बुजरुचिः' इससे भगवती के अग्निनेत्रत्व की ध्वनि निकलती है। अतः यहाँ मध्यम एवं उत्तम काव्य प्रयोजक दोनों प्रकार की ध्वनि से अनुप्राणात्मक संसृष्टि है। संसृज्यमान दोनों व्यङ्ग्य-प्रधान ध्वनि के अङ्गाङ्गिभाव रूप से कहे गये हैं। ऐसा समझना चाहिए।

**ध्यान**—'अ'। **श्लोकस्थ वर्णबीज 'अ' का ध्यान** इस प्रकार है—

**अ**— केतकीपुष्पगर्भाभां द्विभुजां हंसलोचनाम्।
शुक्लपट्टाम्बरधरां पद्ममालाविभूषिताम्॥
चतुर्वर्गप्रदां नित्यं नित्यानन्दमयीं पराम्।
वराभयकरां देवीं नागपाशसमन्विताम्॥
शृणु तत्त्वमकारस्य अतिगोप्यं वरानने।
शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा॥
पञ्चदेवमयं वर्णं शक्तिद्वयसमन्वितम्।
निर्गुणं सगुणोपेतं स्वयं कैवल्यमूर्तिमान्।
बिन्दुद्रयमयं वर्णं स्वयं प्रकृतिरूपिणी॥

**बीजाक्षर**—'अ'; जपादि विधान उपर्युक्त समान; पूजन-यन्त्र—नौ खानों में क्रमशः ग्रहों के आद्य अक्षर लिखे।

**नवग्रहशान्तिकर यन्त्र**

| बु | शु | च |
|---|---|---|
| गु | र | कु |
| रा | श | के |

**भावार्थ**—हे भगवति! आपका दक्षिण नेत्र अर्कात्मक होने से दिन का कारण होता है और वाम नेत्र चन्द्रात्मक होने से रात्रि का कारण बनता है। तृतीय नेत्र, जो कुछ खिले हुये सुवर्ण पद्म के समान हैं, सन्ध्या और उषा की मनोहारिणी आभा को उत्पन्न करता है, जो दिन रात्रि के सन्धिकाल की सृष्टि करता है।

इस प्रकार इस श्लोक में श्रीभगवती महामाया की काल-सञ्चालिनी शक्ति का वर्णन किया गया है॥ ४८॥

**विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः**
**कृपाधाराऽऽधारा किमपि मधुराऽऽभोगवतिका।**
**अवन्ती दृष्टिस्ते बहुनगरविस्तारविजया**
**ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते॥ ४९॥**

**लक्ष्मीधरा**—**विशाला** विपुला, **कल्याणी** मङ्गलात्मिका, **स्फुटरुचिः** प्रस्फुट-कान्तिः, **अयोध्या** योद्धुमशक्या, **कुवलयैः** इन्दीवरैः, **कृपाधाराऽऽधारा** कृपाधाराणां करुणाप्रवाहाणां आधारभूता। आधारशब्दस्य कर्मणि घञन्तत्वात् विशेष्यनिघ्नत्वेन रूपकत्वम्। **किमपि मधुरा** अव्यक्तमधुरा, **आभोगवतिका** आभोगः अन्तःपरिणाहः दैर्घ्य-मिति यावत्। **अवन्ती** रक्षका, **दृष्टिः ते** नयनं **बहुनगरविस्तारविजया** बहूनां नगराणां विस्तारेण सामस्त्येन विजया स्फुरन्ती, **ध्रुवं** निश्चयः। **तत्तन्नामव्यवहरणयोग्या** तानि तानि

च नामानि तत्तन्नामानि विशाला-कल्याणी-अयोध्या-धारा-मधुरा-भोगवती-अवन्ती-विजया-इत्यष्ट नगरनामानि, तैः तद्व्यवहरणं व्यवहारः तत्र योग्या, **विजयते** सर्वोत्कर्षेण वर्तते ।

**अत्रेत्थं पदयोजना**—हे भगवति ! ते दृष्टिः विशाला कल्याणी स्फुटरुचिः कुवलयैः अयोध्या कृपाधाराऽऽधारा किमपि मधुरा आभोगवतिका अवन्ती बहुनगरविस्तारविजया तत्तन्नामव्यवहरणयोग्या ध्रुवं विजयते ।

**अत्रेदमनुसन्धेयम्**—विशालाप्रभृतयो विजयान्ताः अष्ट नगर्यः अष्ट दृष्टयश्च विशाला नाम दृष्टिः अन्तर्विकासरूपा । कल्याणीदृष्टिर्विस्मिता । अयोध्यादृष्टिः स्मेरकनीनिका । धारादृष्टिः अलसा । मधुरादृष्टिः वलिता । भोगवतीदृष्टिः स्निधा । अवन्तीदृष्टिः मुग्धा । विजयादृष्टिः प्रान्तकनीनिका आकेकराख्या दृष्टिः । एता अष्ट दृष्टयः सर्वयोषित्समानाः । भगवत्यां तु विशेषः—एताः दृष्टयः यथाक्रमं संक्षोभाकर्षणद्रावणोन्मादवश्योच्चाटन-विद्वेषणमारणक्रियासु संभिन्नाः ।

**एतदुक्तं भवति**—भगवती यत्र प्रदेशे स्थित्वा अन्तर्विकासयुक्ततया विशालाख्यया दृष्ट्या जनसंक्षोभमकरोत् स देशो विशालानगरी । यत्र प्रदेशे स्थित्वा सा आकेकरया दृष्ट्या विजयाख्या शत्रुमारणमकरोत् स देशो विजयानगरी एवं मध्यवर्तिनीनां षण्णां पुरां नामधेयान्यूह्यानि । यथोक्तं भगवत्पादैः—विशालाद्याः भगवत्याः दृष्टिविशेषाः संक्षोभादि-कर्मसाधनभूताः अन्तर्विकासादिरूपाश्चेति सर्वमनवद्यमिति । एतदेव स्पष्टीकृतं तद्व्याख्याकारैः । तत् तत एव अवधार्यम् ॥ ४९ ॥

## * सरला *

**विशालेति—विशाला** विपुला, **कल्याणी** मङ्गलात्मिका, **स्फुटरुचिः** प्रस्फुटकान्ति वाली, **अयोध्या** जिससे युद्ध करना सामर्थ्य के बाहर है, **कुवलयैः** इन्दीवरों से, **कृपाधाराधारा** करुणाप्रवाह की आधारभूता, यहाँ आधार शब्द कर्म में घञन्त है जो विशेष्यनिघ्न होने से रूपक भी है । **किमपि मधुरा** अव्यक्त मधुरा, **आभोगवतिका** आभोग परिणाह अर्थात्—दीर्घता युक्त, **अवन्ती** रक्षका, **दृष्टिः ते** आपके नेत्र, **बहुनगरविस्तारविजया** बहुत नगरों के समुदाय होने से स्फुरित होने वाली, **ध्रुवं** निश्चय ही, **तत्तन्नामव्यवहरण-योग्या** तत्तन्नामों से व्यवहार में योग्य, **विजयते** सर्वोत्कर्षेण विद्यमान रहने वाली है ।

**पदयोजना का अर्थ**—हे भगवति ! आपकी दृष्टि विशाल होने से १. विशाला, मङ्गलात्मिका होने से, २. कल्याणी, अत्यन्त कान्तिमती तथा कुवलयों की शोभा धारण करने से, ३. अयोध्या, करुणा प्रवाह की आधारभूता होने से, ४. धारा, अस्पष्ट मधुरता युक्त होने से, ५. मधुरा, अत्यन्त दीर्घ होने के कारण अथवा समस्त भोग प्रदान करने के कारण, ६. आभोगवतिका, जगत् की रक्षा करने के कारण, ७. अवन्ती, अनेक नगरों के विस्तार से युक्त होने के कारण तथा उन पर विजय प्राप्त करने के कारण स्पष्ट रूप से देदीप्यमान, ८. विजया है । इस प्रकार निश्चय ही आपकी दृष्टि विशाला, कल्याणी, अयोध्या, धारा, मधुरा, आभोगवतिका, अवन्ती और विजया—इन आठ नगरियों के व्यवहार की योग्यता रखने के कारण निश्चित रूप से सर्वोत्कर्षता प्राप्त करती है ।

यहाँ यह विचारणीय हैं विशाला से लेकर विजया पर्यन्त आठ नगरियाँ है, और इन

इन नामों वाली भगवती की दृष्टियाँ भी आठ ही हैं—१. भीतर से विकास रूप वाली दृष्टि विशाला, २. विस्मय से युक्त दृष्टि कल्याणी, ३. कुछ तिरछे कनीनिका वाली दृष्टि अयोध्या, ४. आलस्य युक्त दृष्टि धारा, ५. किञ्चिद् गोलाकार विलासयुक्त दृष्टि मधुरा, ६. स्निग्ध स्नेह युक्त दृष्टि भोगवती, ७. अत्यन्त मुग्ध दृष्टि अवन्ती और ८. प्राप्तकनीनिका जिसे आकेकरा दृष्टि कहते हैं वह विजया दृष्टि है। ये आठ दृष्टियाँ सभी स्त्रियों में समान रूप से रहती हैं किन्तु भगवती की दृष्टि में यह विशेषता है कि वे क्रमश: १. संक्षोभण, २. आकर्षण, ३. विद्रावण, ४. उन्माद, ५. वशीकरण, ६. उच्चाटन, ७. विद्वेषण और ८. मारण क्रिया में उपयोगी होती हैं।

यहाँ यह विचार कर लेना चाहिए—भगवती ने जिस प्रदेश में रहकर अन्तर्विकास युक्त 'विशाला' नामक दृष्टि से 'संक्षोभ' उत्पन्न किया वह विशाला नगरी है। जिस प्रदेश में स्थित होकर 'विजया' नामक 'आकेकरा' दृष्टि से शत्रुओं का मारण किया, वह देश, विजया नगरी है। इसी प्रकार मध्य की छ: नगरियों के नाम समझ लेना चाहिए जैसा कि भगवत्पाद ने स्वयं भी कहा है विशालादि भगवती के दृष्टि विशेष हैं जिनका उपयोग संक्षोभादि कर्म के लिये किया जाता है और जो अन्तर्विकासादि स्वरूपा है। यह सब कुछ सर्वथा अनवद्य है और तत्तद् व्याख्याकारों ने इसी को स्पष्ट किया है। अत: वहीं से इसे जानने का प्रयत्न करना चाहिये ॥ ४९ ॥

ध्यान—वि = व् + इ। **श्लोकस्थ वर्णबीज 'वि' का ध्यान—**

व— कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम्।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम्॥
साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम्।
एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत्॥
वकारं चञ्चलापाङ्गि कुण्डलीमोक्षमव्ययम्।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा।
त्रिबिन्दुसहितं मन्त्रमात्मादितत्त्वसंयुतम्॥
पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम्।
चतुर्वर्गप्रदं शान्तं सर्वसिद्धिप्रदायकम्॥

इ— इकारं परमानन्दं सुगन्धं कुंकुमच्छवि:।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये॥
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम्॥
ऊर्ध्वाध: कुब्जितामध्ये रेखा तत्सङ्गता भवेत्।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत्॥
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम्।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम्॥
चतुर्भुजां च वरदां हरिचन्दनभूषिताम्।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत्॥

**निधिदर्शकयन्त्र**

**बीजाक्षर**—'वि'; जपादि विधान उपर्युक्त समान ।

**भावार्थ**—हे विश्वव्यापिनि ! आप श्री के दिव्य नेत्रों की दिव्य दृष्टि-विशाला अर्थात् विश्वव्यापिनी है । अत्यन्त चञ्चल तथा चमकीली है, अतः नीलकमल रूपी दृष्टि से अयोध्या अजित है; यह दृष्टि कृपास्रोत की धारा है तथा अत्यन्त मधुर है और अत्यन्त भोगवती अर्थात् आनन्दमयी (अनन्तानन्दमयी) है । यह जनरक्षिणी (= अवन्ती) है एवं बहुत से नगरों के विषय भोग रूप विस्तार को विजय कराने वाली है । इस प्रकार उंन-उन नगरों की नामोपमा के योग्य यह दृष्टि है । आपकी उस दयामयी दृष्टि की सदा जय हो, जय हो ।

**श्रीविद्यारहस्यार्थ**—इस श्लोक में श्री महामाया की अष्ट प्रकार की दिव्य दृष्टि का दिव्य भाव कहा गया है । उनमें आठ प्राचीन महानगरियों के नाम भी आ जाते हैं । इन नामों के भावार्थ में दृष्टिशक्ति की क्रियायें बताई गई हैं । यथा—

१. विशाला—अन्तर्दृष्टि शक्ति, २. कल्याणी—ऐश्वर्यमयी तथा आश्चर्यमयी दृष्टि, ३. अयोध्या—फैली हुई पुतलियों से देखना, ४. धारा—आलस्यमयी दृष्टि, ५. मधुरा—स्तोक शान्तिमयी दृष्टि, ६. भोगवती—मित्र भाव वाली मैत्री-प्रदर्शिका दृष्टि, ७. अवन्ती—अक्षोभवती प्रशान्त दृष्टि, ८. विजया—प्रसन्ना अर्थात् गतिमयी दृष्टि ॥ ४९ ॥

**कवीनां सन्दर्भस्तबकमकरन्दैकरसिकं**
**कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम् ।**
**अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरलौ**
**असूयासंसर्गादलिकनयनं किञ्चिदरुणम् ॥ ५० ॥**

**लक्ष्मीधरा**—**कवीनां** कवीश्वाराणां, **सन्दर्भस्तबकमकरन्दैकरसिकं** सन्दर्भः काव्य-सन्दर्भः स एव स्तबकः पुष्पगुच्छं तत्र मकरन्दे एकं मुख्यं रसिकं मुख्यरसिकं काव्यामृतास्वादैकरसिकमित्यर्थः । **कटाक्षव्याक्षेपभ्रमरकलभौ** कटाक्षावेव व्याक्षेपौ व्याजौ ययोस्तौ, तौ च तौ भ्रमरकलभौ चेति समासः । भ्रमरकलभौ द्विरेफडिम्भौ । अत्र यद्यपि कलभशब्दः करिडिम्भवचनः, महाकविप्रयोगप्राचुर्यवशात् विशेषणसमान्यलक्षणा भ्रमरकलभाविति । **कर्णयुगलं** कर्णयोः श्रवणयोः युग्मं, **अमुञ्चन्तौ** रसास्वादलम्पटतया अत्यजन्तौ **दृष्ट्वा**, तृतीयस्य नयनस्य ऊर्ध्वस्थितत्वात् । **तव नवरसास्वादतरलौ** नवरसाः शृङ्गारादयः नवत्वसङ्ख्यायुक्ताः रसाः नवरसाः शाकपार्थिवादित्वादुत्तरपदलोपः; अन्यथा 'द्विगोः' इति ङीषि कृते नवरसी इति स्यात् । नवरसानामास्वादे भोगे तरलौ लम्पटौ, **असूयासंसर्गात्** असूया ईर्ष्या तस्या संसर्गः सम्बन्धः तस्मात्, **अलिकनयनं** निटिलनेत्रं, **किञ्चिदरुणं** किञ्चित्कोपादिवारुणम् ।

**अत्रेत्थं पदयोजना**—हे भगवति! कवीनां सन्दर्भस्तबकमकरन्दैकरसिकं तव कर्णयुगलं कटाक्षव्याक्षेपभ्रमरकलभौ नवरसास्वादतरलौ अमुञ्चन्तौ दृष्ट्वा असूयासंसर्गात् अलिकनयनं किञ्चिदरुणम् ।

**अयमर्थः**—नयनत्रयमध्ये द्वयोरमृतपाने सिद्धे एकस्य नयनस्य असूया युज्यते । आकर्णान्तनेत्रा भगवती इति वस्तुध्वनिः ।

अत्र अतिशयोक्तिरलङ्कारः; श्रवणयोः काव्यामृतास्वादसबन्धाभावेऽपि सम्बन्ध-कथनात् । भ्रमरकलभावित्यत्र अपह्नवालङ्कारः । यद्वा—रूपकं, कटाक्षव्याक्षेपः कटाक्षात्म-तया अव-स्थितिरिति व्याख्येयम् । अतिशयोक्त्यन्तरमपि, भ्रमरकलभयोः मकरन्दास्वादा-सम्बन्धेऽपि सम्बन्धकथनात् । कविकृतवस्तुकृतसौन्दर्ययोरभेदाध्यवसायात् अतिशयोक्त्योर-नुप्राण्यानुप्राणकभावः सम्बन्धः । अपह्नवस्तु अङ्गभावेन सङ्कीर्णः ॥ ५० ॥

## * सरला *

**कवीनामिति** । **कवीनाम्** कवीश्वरों के, **सन्दर्भस्तबकमकरन्दैकरसिकम्** काव्य-सन्दर्भ रूपी पुष्प के गुच्छे के मकरन्द का एक मात्र रसिक अर्थात् काव्यामृत के स्वाद में एक मात्र रसिक, **कटाक्षव्याक्षेपभ्रमरकलभौ** कटाक्ष के व्याज (बहानेवाले) भ्रमरकलभ द्विरेफ डिम्भ, यद्यपि कलभ शब्द का प्रयोग हस्ति डिम्भ के अर्थ में प्रयुक्त होता है किन्तु यहाँ महाकवियों के प्रयोग के प्राचुर्य से विशेषण की सामान्य लक्षणा है इसलिये 'भ्रमरकलभौ' यह प्रयोग है । **कर्णयुगलं** दोनों कानों को, **अमुञ्चन्तौ** रसास्वाद में लम्पट होने के कारण उन्हें त्याग करते न देख कर, क्योंकि तृतीय नेत्र के भाल में स्थित होने के कारण कान से वे ऊपर स्थित हैं, **तव नवरसास्वादतरलौ** शृङ्गारादि नव रसों के सम्भोग में लम्पट, **असूया-संसर्गात्**—ईर्ष्या के सम्बन्ध से, **अलिकनयनं** भालस्थ नेत्र, **किञ्चिदरुणं** कुछ क्रोध के कारण अरुण वर्ण का है ।

**पदयोजना का अर्थ**—हे भगवति ! काव्यसन्दर्भ रूपी पुष्पगुच्छ के सुगन्धि के एकमात्र रसिक (काव्यामृत के आस्वादन में मुख्य रसिक) आपके कर्ण युगल को कटाक्ष के व्याज वाले दो भ्रमर डिम्भ सदृश कविताओं के नवों रसों का आस्वाद लेने में अत्यन्त लम्पट आपके दोनों नेत्रों के द्वारा न छोड़ते देख ललाटस्थ आपका तृतीय नेत्र ईर्ष्या के कारण कुछ अरुण वर्ण का हो गया है ।

इसका अर्थ इस प्रकार समझना चाहिए—भगवती के तीन नयनों में जब दो ही अमृत पान करने में संलग्न हैं तब शेष एक नेत्र की असूया उचित ही है । वस्तुतः भगवती के नेत्र कान तक फैले हुये हैं इस प्रकार की यहाँ वस्तुध्वनि है ।

यहाँ अतिशयोक्ति अलङ्कार है । क्योंकि कानों के काव्यामृत के आस्वादन में सम्बन्ध के अभाव होने पर भी सम्बन्ध कहा गया है । 'भ्रमरकलभौ' यहाँ अपह्नव अलङ्कार है । अथवा रूपक है । कटाक्षव्याक्षेप अर्थात् कटाक्षात्मतया स्थित रहने वाले ऐसी व्याख्या करनी चाहिए । दूसरी अतिशयोक्ति भी है क्योंकि भ्रमरकलभों का मकरन्द-स्वाद का सम्बन्ध न होने पर भी सम्बन्ध का कथन कहा गया हैं । कविकृत और वस्तुकृत दोनों सौन्दर्य में अभेद का अध्यवसाय है । दोनों अतिशयोक्तियों में अनुप्राण्य-अनुप्राणकभाव सम्बन्ध हैं । अपह्नव अङ्गभाव होने से अत्यन्त संकीर्ण है ॥ ५० ॥

**ध्यान**—'क' । श्लोकस्थ **वर्णबीज 'क' का ध्यान** इस प्रकार है—

जपापावकसिन्दूरसदृशीं कामिनीं पराम् ।

चतुर्भुजां त्रिनेत्रां च बाहुवल्लीविराजिताम् ॥
कदम्बकोरकाकारः स्तनयुग्मविराजिताम् ।
रत्नकङ्कणकेयूरहारनूपुरभूषिताम् ॥
एवं ककारं ध्यात्वा तु तन्मन्त्रं दशधा जपेत् ।
शङ्खकुन्दसमा कीर्तिर्मात्रा साक्षात्सरस्वती ॥
कुण्डली चांकुशाकारा कोटिविद्युल्लताऽऽकृतिः ।
कोटिचन्द्रप्रतीकाशो मध्ये शून्यः सदाशिवः ॥
शून्यगर्भस्थिता काली कैवल्यपददायिनी ।
अर्थश्च जायते देवि तथा धर्मश्च नान्यथा ॥
ककारः सर्ववर्णानां मूलप्रकृतिरेव च ।
कामिनी या महेशानि स्वयं प्रकृतिसुन्दरी ॥
माता सा सर्वदेवानां कैवल्यपददायिनी ।
ऊर्द्ध्वकोणे स्थिता वामा ब्रह्मशक्तिरितीरिता ॥
वामकोणे स्थिता ज्येष्ठा विष्णुशक्तिरितीरिता ।
दक्षकोणे स्थिता शक्तिः श्रीरौद्री संहाररूपिणी ॥
ज्ञानात्मा सा तु चार्वङ्गी चतुःषष्ट्यात्मकं कुलम् ।
इच्छाशक्तिभवेद्ब्रह्मा(दुर्गा) विष्णुश्च ज्ञानशक्तिमान् ॥
क्रियाशक्तिर्भवेद्रुद्रः सर्वप्रकृतिमूर्तिमान् ।
आत्मविद्याशिवैस्तत्त्वैः पूर्णा मात्रा प्रतिष्ठिता ॥
आसनं त्रिपुरा देव्याः ककारः पञ्चदैवतः ।
ईश्वरो यस्तु देवेशि त्रिकोणे तत्त्वसंस्थितः ॥
त्रिकोणमेतत्कथितं योनिमण्डलमुत्तमम् ॥
कैवल्यं प्रपदे यस्याः कामिनी सा प्रकीर्तिता ।
एषा सा कादिविद्या चतुर्वर्गफलप्रदा ॥

**साध्यविद्वेषणकर यन्त्र**

**बीजाक्षर**—'क'; जप-संख्या—१०००; जपस्थान—अनाहतंचक्र;—हृच्चक्र; होम—मधुरत्रय, दाड़िमी कुसुम, सिद्ध चरु से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोकपाठसंख्या—१०; श्लोकपाठ-आहुति—४।

**भावार्थ**—हे जगज्जननी ! महाकवि जन आपका यशोगान अत्यन्त मधुर नवरसमयी रचनाओं से करते हैं। नवीन भ्रमरवत् कटाक्ष करने वाले आपके दक्षिण एवं वाम दो नेत्र कर्ण के समीप होने से उन कवियों के नव-रसमय मधुर काव्यरस का स्वाद लिया करते हैं। परन्तु तृतीय नेत्र कपाल पर होने से कर्ण से दूर है। अतः मानो ईर्ष्या से वह कुछ लाल-सा दीखता है ॥ ५० ॥

**शिवे शृङ्गारार्द्रा तदितरजने कुत्सनपरा**
**सरोषा गङ्गायां गिरिशचरिते विस्मयवती ।**
**हराहिभ्यो भीता सरसिरुहसौभाग्यजननी**
**सखीषु स्मेरा ते मयि जननि दृष्टिः सकरुणा ॥ ५१ ॥**

**लक्ष्मीधरा—शिवे** सदाशिवे, **शृङ्गारार्द्रा** शृङ्गारेण शृङ्गाररसेन आर्द्रा आप्लुता, **तदितरजने** तस्मात् सदाशिवात् इतरजने तद्विषये **कुत्सनपरा** बीभत्सरसाविष्टा । अत्र कुत्सनं बीभत्सरसास्वादनजन्यान्तःकरणमुकुलीभावः कार्यकारणयोरभेदेन रसत्वेनोपचरितः । **सरोषा** रौद्ररसाविष्टा, रोषस्य स्थायिभावस्य रसत्वोक्तिरुपचारात् । **गङ्गायां** सपत्न्यामिति शेषः । **गिरिशचरिते** त्रिपुरविजयादौ, **विस्मयवति** अद्भुतरसाविष्टा, 'गिरिशनयने' इति पाठे तृतीयनयनेनैव मन्मथदहनम्, तादृशनयन एव इदानीं साकूतदर्शनमित्यद्भुतमिति ध्येयम् । **हराहिभ्यः** हरस्य परमेश्वरस्य अहिभ्यः सर्पेभ्यः, **भीता** भयरसाविष्टा, **सरसिरुहसौभाग्यजननी** सरसिरुहाणां सौभाग्यं रक्तिमा तस्य जननी उत्पादिका कोकनदकान्तिः, रक्तवर्णा वीररसाविष्टेत्यर्थः । अत्र अनुभावेन नयनरक्तिम्ना वीररसो ध्वनितः । **सखीषु** वयस्यासु **स्मेरा** स्तब्धकनीनिका, अत्राप्यनुभावेन हास्यरसो ध्वन्यते । **ते** तव, **मयि जननि** ! हे मातः! **दृष्टिः सकरुणा** करुणरसाविष्टा ।

**अत्रेत्थं पदयोजना**—हे जननि! ते दृष्टिः शिवे शृङ्गारार्द्रा, तदितरजने कुत्सनपरा, गङ्गायां सरोषा, गिरिशचरिते विस्मयवती, हराहिभ्यो भीता, सरसिरुहसौभाग्यजननी, सखीषु स्मेरा, मयि सकरुणा ।

अत्र परस्परविरुद्धानां रसानां एकत्र नयने समावेशकथनात् विरोधालङ्कारः; अवस्थाभेदेन परिहारात् तस्य विरोधस्य आभासत्वम् । तल्लक्षणं—'विरोधाभासो विरोधः' इति । विक्रियाजनका एव रसा इति अष्टौ रसाः । **भरतमते**—

**शान्तस्य निर्विकारत्वान्न शान्तं मेनिरे रसम् ।**

इति शान्तस्य रसत्वाभावात् अष्टावेव रसाः सङ्गृहीताः ॥ ५१ ॥

### * सरला *

**शिव इति । शिवे** सदाशिव में, **शृङ्गारार्द्रा** शृङ्गाररस में डूबी हुई, **तदितरजने** उन सदाशिव से अतिरिक्त जन के विषय में, **कुत्सनपरा** बीभत्सरस से भरी हुई । यहाँ कुत्सन शब्द से बीभत्स रस के आस्वादन से उत्पन्न अन्तःकरण का मुकुलीभाव कहा गया है । कार्यकारण में अभेद होने से रस रूप में लक्षणा की गई है । **सरोषा** रौद्ररस से भरी हुई । यद्यपि 'रोष' रौद्र रस का स्थायीभाव है रस नहीं । फिर भी यहाँ लक्षणया रौद्र रस समझना चाहिए । **गङ्गायां** अपनी सपत्नी में, **गिरिशचरिते** त्रिपुरविजयादि शिव चरित्र में, **विस्मयवति** अद्भुतरस से आविष्ट, । 'गिरिशनयने' यह पाठ होने पर अर्थ होगा भगवान् शङ्कर ने तृतीय नेत्र से ही मन्मथ का दहन किया था । वही नेत्र इस समय अनुराग युक्त दिखाई पड़ रहा है—इस प्रकार श्लोकार्थ ध्यातव्य है । **हराहिभ्यः** परमेश्वर के सर्पों से, **भीता** भयानकरसाविष्टा, **सरसिरुहसौभाग्यजननी** कमलों में रक्त वर्ण उत्पादन करने वाली अर्थात् कोकनदकान्ति युक्ता रक्तवर्णा, वीररस से आविष्ट । यहाँ अनुभाव के द्वारा नेत्र के अरुण वर्ण

से वीर रस ध्वनित किया गया है । **सखीषु** अपनी सखियों में, **स्मेरा** स्तब्धकनीनिका वाली । यहाँ भी अनुभव के द्वारा हास्य रस की ध्वनि है । **ते** आपकी, **मयि जननि !** हे मातः !, **दृष्टिः सकरुणा** करुणरसाविष्टा दृष्टि है ।

**पदयोजना का अर्थ**—हे मातः ! आपकी दृष्टि शिव जी के प्रति शृङ्गार रस में डूबी हुई, उनके अतिरिक्त और लोगों में वीभत्स रसाप्लुत है, गङ्गा में क्रोध रसाविष्ट है, सदाशिव के त्रिपुर विजयादि चरित्र में अद्भुत रस से भरी हुई है और सदाशिव के सर्पो से भयभीत हुई, अतएव भयानक रसाविष्ट है, कमलों में रक्त वर्ण की उत्पादिका होने से वीर रसाविष्ट और अपनी सखियों में मन्दस्मित के कारण हास्य रस से युक्त तथा मेरे ऊपर करुणारसाविष्टा है ।

यहाँ परस्पर विरुद्ध रसों को एक जगह केवल नेत्र में घटाते हुए कहने से विरोधालङ्कार है जिसका अवस्थाभेद से परिहार सम्भव है, इसलिये विरोधाभास भी हैं । उसका लक्षण है 'विरोधाभासो विरोधः' । जो विक्रिया उत्पन्न करे वे 'रस' हैं । इस लक्षण की कोटि में आठ ही 'रस' आते हैं । जैसा कि भरत के मत में—

शान्त से कोई विक्रिया उत्पन्न नहीं होती अतः उसे रस नहीं कहा जा सकता है । इसलिये प्रकृत पद्य में आठ ही रसों का भगवत्पाद ने संग्रह किया है ॥ ५१ ॥

**ध्यान**—शि = श + इ । **श्लोकस्थ वर्णबीज 'शि' का ध्यान**—

**श**— चतुर्भुजां चकोराक्षीं चारुचन्दनचर्चिताम् ।
शुक्लवर्णां त्रिनयनां वरदां च शुचिस्मिताम् ॥
रत्नालङ्कारभूषाढ्यां श्वेतमाल्योपशोभिताम् ।
देववृन्दैरभिवन्द्यां सेवितां मोक्षकाङ्क्षिभिः ॥
शकारं परमेशानि शृणु वर्णं शुचिस्मिते ।
रक्तवर्णं प्रभाकारं स्वयं परमकुण्डली ॥
चतुर्वर्गप्रदं देवि शकारं ब्रह्मविग्रहम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये ॥
रत्नपञ्चतमोद्युक्तं त्रिकूटसहितं सदा ।
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ॥

**इ**— इकारं परमानन्दं सुगन्धं कुंकुमच्छविः ।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये ॥
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा ।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम् ॥
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गता भवेत् ।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत् ॥
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम् ।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम् ॥
चतुर्भुजां च वरदां हरिचन्दनभूषिताम् ।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत् ॥

**बीजाक्षर**—'शि'; जप—१०००; जप-स्थान—मूलाधार चक्र के चार दलों में; होम—रक्तपुष्प, बिल्व, तिल और यव तथा घृत से १०० या १० आहुतियाँ; मार्जन—१०; तर्पण—१; श्लोक पाठ संख्या—१०; श्लोक पाठ की आहुति—१। पूजन-यन्त्र—चतुष्कोण में 'क्लीं क्लीं क्लीं' लिखे।

**इष्टसिद्धिप्रद यन्त्र**

| क्लीं<br>क्लीं<br>क्लीं |
|---|

**भावार्थ**—हे दयामयी जननि! आपकी रसमयी किं वा लीलामयी दृष्टि भगवान् शिव के प्रति प्रशम तथा शृङ्गार से आर्द्र है; इतर जनों के प्रति घृणा से भरी हुई है; श्री गङ्गा जी के प्रति रोषपूर्ण है; भगवान् श्री गिरीश शम्भु के अद्भुत चरित्रों से विस्मयवती; शिवाभरण नागों को देखकर भयवती; कमल के सुन्दर रम्यवर्ण में जयवती तथा स्वसखियों की ओर हास्यवती है। हे भगवति! इस भक्त के प्रति आपकी दृष्टि सदैव दयामयी बनी रहे।

**विमर्श**—इस श्लोक में श्री महामायादयामयी भगवती की नवरसमयी दृष्टि का वर्णन है। यथा—

१. **शृङ्गार**—भगवान् शिव के प्रति, २. **वीभत्स**—इतर जन के प्रति, ३. **रौद्र**—श्री गङ्गा के प्रति, ४. **अद्भुत**—शिवचरित्र के प्रति, ५. **भयानक**—शिवालङ्कार (नागादि) के प्रति, ६. **वीर**—कमल के सुन्दर वर्ण के प्रति, ७. **हास्य**—सखीजन के प्रति, ८. **करुणा**—दास (भक्त) के प्रति, ९. **शान्त**—संसार के प्रति (सदैव शान्त दृष्टि) रहे॥ ५१॥

**गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती**
**पुरां भेत्तुश्चित्तप्रशमरसविद्रावणफले।**
**इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके**
**तवाकर्णाकृष्टस्मरशरविलासं कलयतः॥ ५२॥**

**लक्ष्मीधरा—गते** प्राप्ते, **कर्णाभ्यर्णं** कर्णयोः समीपं, **गरुत इव** कङ्कपत्राणीव, **पक्ष्माणि दधती। पुरां** पुराणां **भेत्तुः** भेदकस्य, **चित्तप्रशमरसविद्रावणफले** चित्ते अन्तः-करणे प्रशमरसः नैस्पृह्यमित्यर्थः, तस्य विद्रावणं विनाशनं शृङ्गाररसोत्पादनमिति यावत्, तदेव फलं प्रयोजनं ययोस्ते चित्तप्रशमरसविद्रावणफले। अत्र फलशब्देन अध्यवसितेन अयोमयी बाणाग्रसूची कथ्यते। **इमे** हृदयाम्बुजे परिदृश्यमाने, **नेत्रे** नयने, **गोत्राधरपति-कुलोत्तंसकलिके!** गोत्रा भूमिः, धरतीति धरः पचाद्यच्, गोत्रायाः धरो गोत्राधरः, अन्यथा गोत्रां धारयतीति विग्रहे कर्मण्यणि प्राप्तौ गोत्राधार इति स्यात्। अनेनैवाभिप्रायेण शक्तिधर इत्यत्र शक्तेः धरः शक्तिधरः इत्युक्तं क्षीरस्वामिना। गोत्राधरपतिः हिमवान् तस्य कुलोत्तं-सकलिका कोरकः तस्याः सम्बुद्धिः। **तव** भवत्याः, **आकर्णाकृष्टस्मरशरविलासं** कर्ण-पर्यन्तमाकृष्टयोः स्मरशरयोः मन्मथबाणयोः विलासं सौभाग्यं **कलयतः** कुरुतः। लट्परस्मै-पदद्विवचनान्तम्।

**अत्रेत्थं पदयोजना**—हे गोत्राधरपतिकुलोत्तंसकलिके! तव इमे नेत्रे कर्णाभ्यर्णं गते पक्ष्माणि गरुत इव दधती पुरां भेत्तुः चित्तप्रशमरसविद्रावणफले आकर्णाकृष्टस्मरशरविलासं कलयतः।

**अयमर्थः**—पञ्चबाणस्य स्त्रीणां कटाक्षः षष्ठो बाणः । पञ्चबाण इति प्रसिद्धः प्राचुर्याभिप्रायेण । कटाक्षात्मकबाणो बाणपञ्चकतुल्य इति न षट्बाण इति व्यवहारः ।

अत्र निदर्शनालङ्कारः; स्मरशरविलाससदृशविलासकरणप्रतिभानात् प्रतिबिम्बाक्षेपात् ॥

*** सरला ***

**गत इति । गते** प्राप्त हो जाने से, **कर्णाभ्यर्णं** दोनों कानों की समीपता, **गरुत इव** कङ्कपत्रों अर्थात् पंखों के समान, **पक्ष्माणि दधती** पंलकों को धारण करने वाले नेत्र, **पुरां** तीन पुरों के, **भेत्तुः** भेदन करने वाले पुरारि के, **चित्तप्रशमरसविद्रावणफले** अन्तःकरण की निःस्पृहता (शान्ति) को दूर कर उसमें शृङ्गार रस की उत्पत्ति करना ही फल है प्रयोजन जिसका । यहाँ 'फल' शब्द से अयोमयी बाणाग्रसूची भी कही गई हैं । **इमे** हृदयाम्बुज में परिदृश्यमान, **नेत्रे** दोनों नेत्र **गोत्राधरपतिकुलोत्तंसकलिके** गोत्रा अर्थात् भूमि धारण करने वाले, पचाद्यच् हुआ है । पृथ्वी को धारण करने वाले गोत्राधर अथवा पृथ्वी का आधारभूत अर्थात् कर्म में अण् करके गोत्राधर बना है । इसी अभिप्राय से क्षीरस्वामी ने अमरकोश में 'शक्तिधर' शब्द की व्याख्या की है अर्थात् शक्ति को धारण करने वाला । गोत्राधरपति हिमवान्, उनके कुल की कुड्मलभूता, यह सम्बोधन का रूप है, **तव** आप के, **आकर्णाकृष्टस्मरशरविलासं** कर्णपर्यन्त खींचे गये कामदेव के बाणों का सौभाग्य, **कलयतः** करते हैं । यह लट् लकार परस्मैपद द्विवचन का रूप है ।

**पदयोजना का अर्थ**—हे पर्वतराज के कुल की प्रमुख कली स्वरूपे ! पंख के समान पलकें धारण करने वाले (नेत्र) पुरारि भगवान् सदाशिव के चित्त की शान्ति को दूर कर उसमें शृङ्गाररस पैदा करने वाले, अतएव अयोरूप फलों से युक्त बाणों के सदृश आपके दोनों नेत्र जो कानों तक फैले हुये हैं, कान तक ताने गये कामदेव के बाणों के विलास का कार्य कर रहे हैं ।

यहाँ यह अर्थ है—पञ्चबाण अर्थात् कामदेव का छठवाँ बाण स्त्रियों का कटाक्ष है । उसके 'पञ्चबाण' शब्द की प्रसिद्धि बाणों की प्राचुर्यता के अभिप्राय से ही की जाती है । कटाक्षात्मक छठवाँ बाण वस्तुतः पञ्चबाणों के तुल्य ही है । इसलिये छः बाण का व्यवहार नहीं होता ।

यहाँ निदर्शना अलङ्कार है, क्योंकि कामदेव के बाण के विलास के सदृश विलास करण का प्रतिभान होने से यहाँ प्रतिबिम्ब का आक्षेप है ॥ ५२ ॥

**ध्यान—'ग' । श्लोकस्थ वर्णबीज ग का ध्यान—**

दाडिमीपुष्पसङ्काशां चतुर्बाहुसमन्विताम् ।
रक्ताम्बरधरां नित्यां रक्तालङ्कारभूषिताम् ॥
एवं ध्यात्वा गकारं तु तन्मन्त्रं दशधा जपेत् ।
पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये ॥
तरुणादित्यसङ्काशां कुण्डलीं प्रणमाम्यहम् ।
अग्राकुञ्चितरेखा या गणेशी सा प्रकीर्तिता ॥
ततो दक्षगता या तु कमला तत्र संस्थिता ।
अधोगता गता या तु तस्यामीशः सदा वसेत् ॥

**बीजाक्षर**—'ग'; जपादि विधान पूर्ववत् ।

**पूजन यन्त्र**—चतुष्कोण के मध्य में 'रं' बीज लिखे ।

**कर्ण या नेत्रविकार शान्त्यर्थ यन्त्र**

रं

**भावार्थ**—हे श्री गिरिराजकुलजा ! हे सुन्दरकली स्वरूपे ! हे जगज्जननि ! आपके आकर्ण खिंचे हुये ये दोनों नेत्र, जो पक्षी-पक्षालंकृत (मदनबाण) कटाक्ष से युक्त हैं तथा जो भगवान् श्री त्रिपुरारि के प्रशान्त मन का मन्थन करने में समर्थ हैं और मदन-विद्रावण बाण का काम करते हैं ॥ ५२ ॥

**विभक्तत्रैवर्ण्यं व्यतिकरितलीलाञ्जनतया**
**विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते ।**
**पुनः स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान्**
**रजः सत्त्वं बिभ्रत्तम् इति गुणानां त्रयमिव ॥ ५३ ॥**

**लक्ष्मीधरा**—**विभक्तत्रैवर्ण्यं** विभक्तं परस्परासङ्कीर्णं त्रैवर्ण्यं त्रयो वर्णाः सितासित रक्ताः यस्येति बहुब्रीहिः स्वार्थे ष्यञ् । महाभाग्यपुरुषाणां नयने रक्तरेखाः सन्ति, नयनगोल-द्वयं श्वेतम्, यद्यपि कनीनिका नीला, तथापि तृतीयनयने कनीनिकायाः नैल्याभावात् इत्याह—**व्यतिकरितलीलाञ्जनतया** इति । व्यतिकरितं संवलितं लीलार्थं विलासार्थं धृतम् अञ्जनं यस्य तत्, तस्य भावस्तत्ता तया । तृतीयनयनगोलस्य श्वैत्यमङ्गीकृत्योक्तम् । **विभाति** विराजते । **त्वन्नेत्रत्रितयं** तव नेत्राणां त्रितयं, **इदं** परिदृश्यमानं, **ईशानदयिते** ईशानस्य महादेवस्य दयिता प्रेयसी तस्यास्सम्बुद्धिः, **पुनः स्रष्टुं** गतब्रह्माण्डानन्तरमस्मिन् ब्रह्माण्डे भूयो निर्मातुं, **देवान्** देवनधर्मयुक्तान्, **द्रुहिणहरिरुद्रानुपरतान्** आत्मनि विलीनान्, **रजः** रजोगुणः, **सत्त्वं** सत्त्वगुणः, **बिभ्रत्** दधत्, **तमः** तमोगुणः, **इति** एवं **गुणानां** सत्त्वरजस्तमः संज्ञिकानां, **त्रयं** त्रितयं, **इव** ।

**अत्रेत्थं पदयोजना**—हे ईशानदयिते ! इदं त्वन्नेत्रत्रितयं व्यतिकरितलीलाञ्जनतया विभक्तत्रैवर्ण्यं उपरतान् द्रुहिणहरिरुद्रान् देवान् पुनः स्रष्टुं रजः सत्त्वं तम इति गुणानां त्रयमिव बिभ्रत् विभाति ॥

अत्र सत्त्वगुणः श्वेतवर्णः रजोगुणो रक्तवर्णः तमोगुणो नीलवर्णः इति कविप्रसिद्धिः । तम इति निपाते-नाप्यभिहिते कर्मणि न कर्मविभक्तिः; परिगणनस्य प्रायिकत्वादिति निपातेति-शब्देनाभिधानात् रजःसत्त्वतमःशब्दाः प्रथमान्ताः । यद्वा—द्वितीयान्ताः; निपाताभिधानस्य प्रायिकत्वात् । यथोक्तं **वाग्भटेन**—

**हिंसा स्तेयान्यथाकामं पैशुन्यं पुरुषानृते ।**
**सम्भिन्नालापव्यापादमभिध्यां दृग्विपर्ययम् ॥**
**पापं कर्मेति दशधा कायवाङ्मनसैस्त्यजेत्** । इति ।

अत्र उत्प्रेक्षालङ्कारः, नयनगतस्य श्वेतरक्तनीलरेखात्रितयस्य सत्त्वरजस्तमोगुणत्वेनो-त्प्रेक्षणात् । अत्र भगवत्याः नयनाञ्जनदर्शनादेव सृष्टिस्थितिलया इति महानतिशयो ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ५३ ॥

## * सरला *

**विभक्तत्रैवर्ण्यमिति । विभक्तत्रैवर्ण्यम्** सित, असित और रक्त वर्ण में ये तीनों वर्ण परस्पर असंकीर्ण होने से तीनों नेत्रों में अलग-अलग दिखाई पड़ने वाले हैं । महाभाग्यशाली पुरुषों के नेत्रों में १. रक्त वर्ण की रेखाएँ होती हैं । जिसके नेत्रों में रहने वाले दो गोले २. श्वेत वर्ण के है और कनीनिका (पुतली) यद्यपि नीली है । ३. किन्तु तृतीय नेत्र में रहने वाली कनीनिका में नीलेपन का अभाव है । इसी बात को कहते हैं—**व्यतिकरितलीलाञ्जनतया** अर्थात् विलास के लिये धारण किया गया है अञ्जन जिन नेत्रों में, उसके भाव से उस कारण शोभित हैं । यह बात तृतीय नेत्र में श्वेतता अङ्गीकार के लिए कही गई है । **विभाति** शोभित हो रहे हैं । **त्वन्नेत्रत्रितयं** दिखाई पड़ने वाले ये आपके तीनों नेत्र; **ईशानदयिते** हे महादेव की प्रेयसी पत्नी ! यह सम्बोधन का रूप है । **पुनः स्त्रष्टुं** एक ब्रह्माण्ड के नष्ट हो जाने पर दूसरे ब्रह्माण्ड के निर्माण करने के लिये; **देवान्** दिव्य धर्म से युक्त, **द्रुहिणहरिरुद्रानुपरतान्** अपनी आत्मा में विलीन ब्रह्मा, विष्णु एवं रुद्र को, **रजः** रजोगुण धारण करने वाले; **सत्त्वं** सत्त्वगुण वाले; **बिभृत्** धारण करने वाले; **तमः** तमोगुण; **इति** इस प्रकार एवं **गुणानां** सत्त्व, रज एवं तम संज्ञा वाले; **त्रयमिव** इन तीनों को समान रूप से धारण किए हुए हैं ।

**पदयोजना का अर्थ**—हे ईशानदयिते ! आपके ये तीनों नेत्र जो अलग-अलग क्रमशः रक्त, श्वेत और नीले रंग के हैं वे विलास युक्त अञ्जन की शोभा धारण किये हुए ऐसे प्रतीत हो रहे हैं मानो प्रलय के बाद ब्रह्मा, विष्णु और रुद्र को पुनः उज्जीवित करने के लिये अलग-अलग सत्त्व, रज और तमो गुण धारण किये हुये हों ।

यहाँ सत्त्वगुण का श्वेत वर्ण, रजोगुण का रक्तवर्ण और तमोगुण का नीलवर्ण है ऐसी कविप्रसिद्धि है । यहाँ तमः निपात होने से अभिहित कर्म है । इसलिये उसमें कर्म की द्वितीया विभक्ति नहीं हुई । परिगणन के प्रायिक होने से तथा निपातशब्द से अभिहित होने के कारण रजः, सत्त्व और तमः शब्द प्रथमान्त ही हैं, अथवा द्वितीयान्त भी हो सकते हैं क्योंकि निपात के द्वारा अभिधान होना प्रायिक है, जैसा कि वाग्भट ने कहा है—

**हिंसेति** । हिंसा, चोरी, यथेष्टाचरण, चुगलखोरी, पुरुष और झूठी बात, बात को बदल देना, मारना, धूर्त्तता और दृष्टि का बदलना—ये दश प्रकार के पाप हैं जो काय, वाणी और मन से होते हैं । अतः मनसा, वाचा, कर्मणा इनका त्याग कर देना चाहिए ।

**विमर्श**—यहाँ 'त्यजेत्' क्रिया का कर्म होने से द्वितीया है, जबकि इति शब्द के द्वारा निपातन होने से अभिहित हो जाने के कारण प्रथमा होनी चाहिए ।

यहाँ उत्प्रेक्षालङ्कार है । नेत्र में रहने वाली श्वेतता, रक्तता और नीलिमा की सत्त्व रज और तमोगुण के रूप में उत्प्रेक्षा की गई है । तात्पर्य यह है कि भगवती के नेत्र में लगे हुये अञ्जन के दर्शन से सृष्टि, स्थिति और लय प्राप्त होते हैं । इससे भगवती की महत्ता एवं अतिशयिता ध्वनित होने के कारण यहाँ वस्तुध्वनि अलङ्कार भी है ॥ ५३ ॥

**ध्यान**—वि = व् + इ । **श्लोकस्थ वर्णबीज 'वि' का ध्यान**—

व— कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम् ।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम् ॥

साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम् ।
एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत् ॥
वकारं चञ्चलापाङ्गि कुण्डलीमोक्षमव्ययम् ।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ।
त्रिबिन्दुसहितं मन्त्रमात्मादितत्त्वसंयुतम् ॥
पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम् ।
चतुर्वर्गप्रदं शान्तं सर्वसिद्धिप्रदायकम् ॥

इ— इकारं परमानन्दं सुगन्धं कुंकुमच्छविः ।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये ॥
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा ।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम् ॥
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गता भवेत् ।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत् ॥
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम् ।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम् ॥
चतुर्भुजां च वरदां हरिचन्दनभूषिताम् ।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत् ॥

**बीजाक्षर**—'वि'; जपादि विधान उपर्युक्त समान । पूजन यन्त्र त्रिकोण उसके मध्य में 'ह्रीं' लिखे ।

**ज्ञानप्राप्ति यन्त्र**

**भावार्थ**—हे ईशानेश्वरि भगवति ! आपके दिव्य नेत्रों का नेत्राञ्जन-सहित त्रैवर्ण्य प्रलयान्त में लयत्व को प्राप्त हुये ब्रह्मा, विष्णु एवं रुद्र को पुनरुत्पन्न करने वाले त्रिगुणवत् भासित होते हैं ।

**विमर्श**—भगवती के नेत्रों के तीन रंग हैं—श्वेत, श्याम और रक्त अर्थात् इन नेत्रों में अमृत, विष तथा मद तीनों एक साथ भरे हुये हैं । अमृत का रंग श्वेत है, विष का रंग श्याम है तथा मद का रंग लाल है । इन तीनों के गुण भी विभिन्न हैं । अमृत से व्यक्ति जीता है, विष से मरता है और मद से नशे में झोंके खाता है । जिसकी ओर इन नेत्रों की दृष्टि एक बार भी पड़ जाती है, उस व्यक्ति में ये तीनों गुण-विकार उत्पन्न हो जाते हैं । वह जीता भी है, मरता भी है और उन्मत्तवत् झुक-झुक भी पड़ता है । किन्तु आपके ये नेत्रत्रय त्रिगुण-निर्मित त्रिशूलवत् भासते हैं ॥ ५३ ॥

**पवित्रीकर्तुं नः पशुपतिपराधीनहृदये**
**दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः ।**
**नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं**
**त्रयाणां तीर्थानामुपनयसि सम्भेदमनघम् ॥ ५४ ॥**

**लक्ष्मीधरा**—एतदेव त्रैवर्ण्यं पुनरुत्प्रेक्ष्यते—**पवित्रीकर्तुं** अपवित्रान् पवित्रान् सम्पद्यमानान् कर्तुं 'अभूततद्भावे सम्पद्यकर्तरि च्विः' । नः अस्मान्, **पशुपतिपराधीनहृदये!**

हरायत्तचित्ते! **दयामित्रैः** दयार्द्रैः, **नेत्रैः अरुणधवलश्यामरुचिभिः** प्रत्येकमिति शेष: । **नदः** पुंप्रवाह: **शोणः** हिरण्यवाहः, स तु रक्तवर्णः **गङ्गा** भागीरथी श्वेतवर्णा, **तपनतनया** कालिन्दी नीलवर्णा इति कविप्रसिद्धिः । **इति** एवं, **ध्रुवं** सत्यं, **अमुं** परिदृश्यमानं, **त्रयाणां तीर्थानां** जलावताराणां, **सम्भेदं** नदीसङ्गमं, **उपनयसि** सम्पादयसि । **अनघं** अघापनोदकम् ।

**अत्रेत्थं पदयोजना**—हे पशुपतिपराधीनहृदये! दयामित्रैः अरुणधवलश्यामरुचिभिः नेत्रैः शोणो नदो गङ्गा तपनतनयेति त्रयाणां तीर्थानां अमुं अनघं सम्भेदं नः पवित्रीकर्तुं उपनयसि ध्रुवम् । भक्तवत्सलत्वाद्देव्या इति भावः ॥

अत्रोत्प्रेक्षालङ्कारः; स्वभावसिद्धस्य नयनगतरेखात्रितयस्य सितासितरक्तवर्णात्मकस्य गङ्गायमुनाशोणसङ्गमत्वेनोत्प्रेक्षणात् ॥ ५४ ॥

## ※ सरला ※

**पवित्रीकर्त्तुमिति** । इस श्लोक में ऊपर कहे गये श्वेत, रक्त और नीलिमा रूप त्रिवर्णों की पुनः उत्प्रेक्षा करते हैं; **पवित्रीकर्त्तुम्** 'अपवित्रान् पवित्रान् सम्पद्यमानान् कर्त्तुं' यहाँ अभूततद्भाव अर्थ में 'च्वि' प्रत्यय है अर्थात् अपवित्र को पवित्र करने के लिये; **नः** हम लोगों को; **पशुपतिपराधीनहृदये** हे सदाशिव के आधीन चित्त वाली, सम्बोधन का रूप है; **दयामित्रैः** दयार्द्र; **नेत्रैः** नेत्रों से; **अरुणधवलश्यामरुचिभिः** लाल, श्वेत तथा नीली कान्ति वाले, प्रत्येक नेत्रों के द्वारा यह जोड़ना चाहिए । **नदः** पुरुष प्रवाह, **शोणः** हिरण्यवाह, जो रक्तवर्ण का है; **गंगा** भागीरथी, जो श्वेतवर्णा हैं; **तपनतनया** कालिन्दी, जो नील वर्ण की हैं, ऐसी कविजनप्रसिद्धि है; **इति** इस प्रकार; **ध्रुवं** सत्य; **अमुं** दिखाई पड़ने वाले; **त्रयाणां तीर्थानां** जलरूप में अवतरित तीनों तीर्थों के; **सम्भेदं** नदियों का संगम; **उपनयसि** सम्पादन करती हैं; **अनघं** पापों को नष्ट करने वाले ।

**पदयोजना का अर्थ**—भगवान् सदाशिव की पराधीनता में अपना हृदय समर्पित करने वाली हे भगवति ! अरुण, शुक्ल और श्याम वर्ण की शोभा से युक्त आप दयापूर्ण अरुण, धवल एवं श्याम कान्ति वाले अपने नेत्रों से शोण (नद), गंगा और सूर्यतनया (यमुना) इन तीनों तीर्थों के संयोग से निष्पाप संगम वाली आप निश्चय ही हम लोगों को पवित्र करने के लिए तीनों तीर्थों का संगम बना रही हैं । अहो धन्य है आपकी वत्सलता ।

यहाँ उत्प्रेक्षालङ्कार है । नयनों में होने वाली तीन रेखाएँ स्वभावसिद्ध हैं जो श्वेत, काले और रक्त वर्ण की हैं । उन्हीं रेखाओं को गङ्गा, यमुना और शोण नद के सङ्गम के रूप में उत्प्रेक्षा की गई है ॥ ५४ ॥

**श्लोकस्थ वर्णबीज पकार का ध्यान—**

विचित्रवसनां देवीं द्विभुजां पङ्कजेक्षणाम् ।
रक्तचन्दनलिप्ताङ्गीं पद्ममालाविभूषिताम् ॥
मणिरत्नादिकेयूररत्नहारैकविग्रहाम् ।
चतुर्वर्गप्रदां नित्यां नित्यानन्दमयीं पराम् ॥
एवं ध्यात्वा पकारं तु तन्मन्त्रं दशधा जपेत् ।
अतःपरं प्रवक्ष्यामि पकाराक्षरमव्ययम् ॥

चतुर्वर्गप्रदं वर्णं त्रिशक्तिसहितं प्रिये।
पञ्चदेवमयं वर्णं शरच्चन्द्रमयप्रभम् ॥
पञ्चप्राणमयं वर्णं स्वयं परमकुण्डली।
त्रिगुणीसहितं वर्णं आत्मादितत्त्वसंयुतम्।
महामोक्षप्रदं देवि हृदि भावय पार्वति ॥

**बीजाक्षर**—'प'; जपादि विधान पूर्ववत्;

**पूजनयन्त्र**—वृत्त में 'सां सां' बीज लिखकर वृत्त से ही घेर कर लिखे।

**अघहर यन्त्र**

**भावार्थ**—हे भगवति ! हे अपर्णे, हे पशुपति-पराधीन-हृदये ! अरुण, धवल और श्याम रंग वाले आप उमा के तीनों नेत्र शोण, गङ्गा तथा यमुना के पापनाशक त्रितीर्थवत् हैं। आप हमें पवित्र करने की इच्छा से अपने दयामय तीन नेत्रों के साथ इन तीनों अघहर तीर्थों को ले आई हैं ॥ ५४ ॥

**निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती**
**तवेत्याहुः सन्तो धरणिधरराजन्यतनये।**
**त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः**
**परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥ ५५ ॥**

**लक्ष्मीधरा**—**निमेषो** नाम पक्ष्मणां मुकुलीभावः, अत्र **उन्मेषो** नाम नयने पक्ष्म-विकासः, ताभ्यां यथाक्रमं, **प्रलयं** संहारं **उदयं** उद्भवं, **याति** प्राप्नोति। **जगती** जगत् **तव** भवत्याः, **इति** एवं, **आहुः** ब्रुवते। 'ब्रुवः पञ्चानामादितः' इत्यादिना आहादेशः। **सन्तः** सत्पुरुषाः व्यासादयः। दृष्टिसृष्टिवादिमते ज्ञानव्यतिरेकेण ज्ञेयाभावात् निमेषोन्मेषाभ्यामि-त्युक्तेराञ्जस्यमिति ध्येयम्। **धरणिधरराजन्यतनये** ! हिमाचलपुत्रिके ! **त्वदुन्मेषात्** तव पक्ष्म-स्पन्दात् **जातं जगत्** भुवनं, **इदं** परिदृश्यमानं **अशेषं** कृत्स्नं, **प्रलयतः** महासंहारात्, **परित्रातुं** रक्षितुं, **शङ्के**। **परिहृतनिमेषाः** तिरस्कृताक्षिस्पन्दाः, **तव दृशः** नयनानि।

**अत्रेत्थं पदयोजना**—धरणिधरराजन्यतनये ! तव निमेषोन्मेषाभ्यां जगती प्रलयमुदयं यातीति सन्तः आहुः। अत त्वदुन्मेषात् जातं अशेषं इदं जगत् प्रलयतः परित्रातुं तव दृशः परिहृतनिमेषाः इति शङ्के ॥

अत्रोत्प्रेक्षालङ्कारः। देवतानामनिमेषत्वं स्वभावसिद्धम्; तच्च जगत्संरक्षणार्थमिति फलत्वेनोत्प्रेक्षणात् फलोत्प्रेक्षा। तत्र निमेषोन्मेषदशायां तौ जगदुत्पत्तिलयाविति देव्याः महिमा अवाङ्मनसगोचर इति वस्तु ध्वन्यते। अतः अलङ्कारेण वस्तुध्वनिः ॥ ५५ ॥

*** सरला ***

**निमेषोन्मेषाभ्यामिति। निमेषः** पलकों का बन्द होना, **उन्मेषः** नेत्र-पलकों का विकास, उन दोनों के द्वारा क्रमशः, **प्रलयं** संहार एवं **उदयं** उद्भव, **याति** प्राप्त करती हो,

**जगती** जगत्, **तव** आप के, **इति**—इस प्रकार, **आहुः** कहते हैं। यहाँ 'ब्रुवः पञ्चानामादितः' इस सूत्र से ब्रू को आह आदेश हुआ है। **सन्तः** सत्पुरुष व्यासादिक, 'जैसी दृष्टि वैसी सृष्टि' इस मत के अनुसार ज्ञान के अतिरिक्त ज्ञेय पदार्थ नहीं होता। इसलिये 'निमेषोन्मेषाभ्यां' इस उक्ति का सामञ्जस्य बैठ जाता है **धरणिधरराजन्यतनये** हे हिमालयपुत्रि **त्वदुन्मेषात्** आपके पलकों के स्पन्दन से **जातं जगत्** उत्पन्न हुआ यह संसार **इदं** दिखाई पड़ने वाला **अशेषं** सम्पूर्ण **प्रलयतः** महासंहार से **परित्रातुं** रक्षा करने के लिये **शङ्के परिहृतनिमेषाः** अक्षि के स्पन्द को तिरस्कृत करने वाले **तव दृशः** आपके नेत्र हैं।

**विमर्श**—इस श्लोक में ठीक 'निमेषोन्मेष' का उल्टा है।

यस्योन्मेषनिमेषाभ्यां जगतः प्रलयोदयौ।
तं शक्तिचक्रविभवप्रभवं शङ्करं स्तुमः॥ —स्पन्दकारिका: १।

वायुपुराण में—

यदुन्मेषनिमेषाभ्यां जगतां प्रलयोदयौ।
भवेत्तां या पराशक्ति यदाधारतयास्थिता॥

'प्रत्यभिज्ञाहृदय' में तीन समाधि का वर्णन है—निमीलन, उन्मीलन तथा निमषोन्मीलन। ज्ञानकलिकास्तोत्र में—अधोन्मीलन का लक्षण है—

अन्तर्लक्ष्यं बहिर्दृष्टिर्निमेषोन्मेषवर्जिता।
एषा सा शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता॥ —ईश्वरसंहिता।

**पदयोजना का अर्थ**—हे हिमालय की पुत्रि! आपके पलकों के बन्द करने से इस जगत् का प्रलय हो जाता है और पलकों के खोल देने से जगत् की उत्पत्ति होती है ऐसा व्यासादि सन्तों का कथन है। अतः आपके पलकों के खोल देने से उत्पन्न हुये इस परिदृश्यमान समस्त जगत् की प्रलय से रक्षा के लिये ही मानो आपके नेत्रों ने पलकों का स्पन्दन (गिराना) बन्द कर दिया है।

यहाँ उत्प्रेक्षालङ्कार है देवताओं के पलक कभी नहीं गिरते अर्थात् वे निर्निमेष होते हैं यह स्वभावसिद्ध है। उसका कारण मात्र जगत् की रक्षा है, यहाँ इसी फल की उत्प्रेक्षा की गई है। अतः फलोत्प्रेक्षा अलङ्कार है। केवल निमेष और उन्मेष की दशा से ही जगत् की उत्पत्ति और प्रलय ये दोनों इतने बड़े कार्य सम्पन्न हो जाते हैं। अतः देवी की महिमा वाणी और मन से भी परे है यह वस्तुध्वनि भी हो रही है। इसलिये अलङ्कार के साथ वस्तु ध्वनि (अलङ्कार) भी है॥ ५५॥

**ध्यान**—'नि' = 'न्'+'इ'। **श्लोकस्थ वर्णबीज 'नि' का ध्यान** इस प्रकार है—

**न**— दलिताञ्जनवर्णाभां ललज्जिह्वां सुलोचनाम्।
चतुर्भुजां चकोराक्षीं चारुचन्दनचर्चिताम्॥
कृष्णाम्बरपरीधानां ईशद्धास्यमुखीं सदा।
एवं ध्यात्वा नकारं तु तन्मन्त्रं दशधा जपेत्॥
नकारं शृणु चार्वङ्गि रक्तविद्युल्लताकृतिः।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली॥
त्रिगुणाशक्तिसंयुक्तं हृदि भावय पार्वति।

**इ—** इकारं परमानन्दं सुगन्धं कुंकुमच्छविः।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये॥
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम्॥
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गता भवेत्।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत्॥
धूम्रवर्णा महारौद्रीं पीताम्बरयुतां पराम्।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम्॥
चतुर्भुजां च वरदां हरिचन्दनभूषिताम्।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत्॥

**बीजाक्षर**—'नि'; जपादि विधान पूर्ववत्।

**पूजन-यन्त्र**—त्रिशूल युक्त भूपुर मे 'सं सं सं' लिखे।

**अण्डरोगहर यन्त्र**

**भावार्थ**—हे धरणिधरकन्ये, हे भगवति! आपके निमेषोन्मेष (पलक खोलने एवं बन्द करने) से विश्व का प्रलय तथा उत्पत्ति (पुनरुत्पत्ति) होती है, ऐसा अनुभवी महापुरुषों का कहना है अर्थात् पलक खोलने से विश्वोत्पत्ति तथा बन्द करने से प्रलय होता है। किन्तु मेरा अभिमत यह है कि आपने विश्व-संरक्षण के विचार से अपने नेत्रों का पलक झपकाना ही छोड़ दिया है।

इस श्लोक में भगवती की सतत जागृत स्थिति का भाव वर्णित है॥ ५५॥

**तवापर्णे कर्णे जपनयनपैशुन्यचकिताः**
**निलीयन्ते तोये नियतमनिमेषाश्शफरिकाः।**
**इयं च श्रीर्बद्धच्छदपुटकवाटं कुवलयं**
**जहाति प्रत्यूषे निशि च विघटय्य प्रविशति॥ ५६॥**

**लक्ष्मीधरा—तव** भवत्याः, **अपर्णे**! पार्वति! **कर्णे जपनयनपैशुन्यचकिताः** कर्णे जपे कर्णसमीपं सदा गते नयने ताभ्यां यत्करिष्यमाणं पैशुन्यं पिशुनभावः, **मर्मोद्घाटनं** तस्माच्चकिताः, **निलीयन्ते** आकारगोपनेन स्थिताः इत्यर्थः। **तोये** उदके, **नियतं** निश्चयः, **अनिमेषाः** निमेषरहिताः **शफरिकाः** मीनयोषितः, इयं च परिदृश्यमाना नेत्रगता, **श्रीः** लक्ष्मीः **बद्धच्छदपुटकवाटं** बद्धं संकलितं छदपुटा एव कवाटं यस्य तत् कवाटसङ्घटितगृहमिव वर्तत इत्यर्थः। **कुवलयं** इन्दीवरं, **जहाति** त्यजति। **प्रत्यूषे** उषःकाले, **निशि च** रात्रौ च, **विघटय्य** प्रविशति संविशति॥

**अत्रेत्थं पदयोजना**—हे अपर्णे! तव कर्णे जपनयनपैशुन्यचकिताः शफरिकाः अनिमेषास्तोये निलीयन्ते नियतम्। किञ्च—इयं च श्रीः बद्धच्छदपुटकवाटं कुवलयं प्रत्यूषे जहाति निशि च तत् विघटय्य प्रविशति॥

**अयमर्थः**—लोके नेत्रसमं वस्तु शफरिका इन्दीवराणीति, एतद्द्वितयसमं नेत्रमिति च सुप्रसिद्धं उभयोः साम्यं, अत्र कविः नेत्रसौभाग्यं शफरिकासु इन्दीवरेषु च वर्तते, तत्सौभाग्य-माहर्तुकामं नेत्रद्वयं तत्र पैशुन्यं करोतीममर्थमवलम्ब्योत्प्रेक्षते ॥

अत्र पूर्वार्धे उत्प्रेक्षालङ्कारः शफरिकाणां जलाधिवासः, अनिमेषत्वं च स्वभावसिद्धम्, तदन्यथात्वेनोत्प्रेक्षणात् । द्वितीयार्द्धे अतिशयोक्तिः; नेत्रलक्ष्म्याः नेत्रं विहाय इन्दीवरेषु भक्त्यतिशयात् रात्रौ तद्रक्षणार्थं तद्गर्भान्तर्वर्तित्वं, दिवा तद्विहाय नेत्रवर्तित्वं असम्भवीति असम्बन्धे सम्बन्धनिबन्धनात् । इन्दीवरस्य रात्रौ विकासः स्वभावसिद्धः, दिवामुकुली-भावश्च । एतद्द्वयस्य लक्ष्मीकृतत्वासम्बन्धेऽपि सम्बन्धकथनात् अतिशयोक्त्यन्तरम् । उभयोरनुसृष्टिः । अनुसृष्टिलक्षणं (४७ श्लोकव्याख्यायां) पूर्वमेवोक्तम् । अत्र इन्दीवरस्य रात्रौ विकासः । नेत्रद्वयस्य दिवा विकासः । अतश्च दिवा लक्ष्मीः नेत्रे वसति, रात्रौ कुवलये । एवं लक्ष्मीः नक्तंदिवमुभयत्रैव चरति नान्यत्रेति । शफरीप्रभृतीनां लोके नेत्रोपमानवस्तूनां भगवतीनेत्रतुल्यता नास्तीति शफरिकाणामुदकमध्यविलीनत्वमेव युक्तमिति काव्यलिङ्गध्वनि-रित्यलङ्कारध्वनिः ॥ ५६ ॥

## * सरला *

**तवापर्णे** इति । **तव** आपके **अपर्णे** पार्वति **कर्णेजपनयनपैशुन्यचकिताः** कान तक फैले हुये नेत्रों के द्वारा की जाने वाली चुगलखोरी शिकायत निन्दा मर्मोद्घाटन, उससे चकित भयभीत **निलीयन्ते** अपना आकार छिपा कर लुप्त हो जाते हैं **तोये** जल में **नियतं** निश्चय ही **अनिमेषाः** निमेषरहित होकर **शफरिकाः** मीन पत्नियाँ **इयं च** दिखाई पड़ने वाली, नेत्रगत **श्रीः** लक्ष्मीः **बद्धच्छदपुटकवाटं** दलपुटकरूप बन्द कर दिये गये हैं जिसके, अर्थात् किवाड़ बन्द किये गये घर की तरह **कुवलयं** इन्दीवर को **जहाति** छोड़कर चली जाती हैं **प्रत्यूषे** प्रातःकाल में, **निशि च** और रात्रि के समय, **विघटय्य प्रविशति** खोलकर पुनः प्रवेश करती है ।

**अर्थ**—हे पार्वति ! कानों तक फैले हुये आपके नेत्रों के द्वारा अपने मर्मोद्घाटन (निन्दा) के भय से ये मछलियाँ निर्निमेष होकर जल में छिप जाती हैं । इतना ही नहीं, यह श्री (शोभा) भी कुवलय के पत्रच्छद रूप किवाडों को बन्द कर प्रातःकाल होते ही उसे छोड़कर अन्यत्र चली जाती है और रात्रि के समय पुनः उसे खोलकर प्रवेश करती है ।

इसका अर्थ इस प्रकार है—भगवती के नेत्र की समता रखने वाली इस लोक में दो ही वस्तुयें हैं एक 'शफरिका' (मछली) दूसरी इन्दीवर (कमल) यह बात सर्वसम्मत है । वहाँ कवि ने यही कहा है कि नेत्र का सौभाग्य शफरिकाओं में और कमलों में वर्तमान है । उनके सौभाग्य को हरण करने के लिये आपके दोनों नेत्र कान में चुगलखोरी कर रहे हैं । इस प्रकार इस अर्थ का अवलम्बन कर उत्प्रेक्षा की गई है ।

यहाँ पूर्वार्ध में उत्प्रेक्षालङ्कार है—मछलियों का जल में निवास और उनकी निर्निमिषता स्वभावसिद्ध है जिसे अन्यथा रूप में उत्प्रेक्षा की गई है । द्वितीयार्ध में अतिशयोक्ति है । नेत्रगत लक्ष्मी का नेत्र छोड़कर रात्रि के समय इन्दीवर के गर्भ में निवास तथा दिन में नेत्र में निवास—इस असम्भव सम्बन्ध को सबन्ध रूप में निबन्धित किया गया है । इन्दीवर का रात्रि में विकास स्वभावसिद्ध है दिन में उसका मुकुलीभाव भी स्वभावसिद्ध है । इन दोनों

का लक्ष्मीद्वारा सम्बन्ध न होने पर भी सम्बन्ध का कथन है । इसलिये यह दूसरी अतिशयोक्ति हुई । दोनों को मिलाकर अनुसृष्टि है । अनुसृष्टि का लक्षण (४७) पहले कहा जा चुका है । यहाँ इन्दीवर का रात्रि में विकास और नेत्रद्वय का दिवा विकास । इसका तात्पर्य यह है कि दिन में लक्ष्मी नेत्र में निवास करती हैं और रात्रि के समय कुवलय (कमल) में । इस प्रकार रात और दिन लक्ष्मी केवल दो ही में रहती है अन्यत्र नहीं । लोक में नेत्र की उपमानभूत शफरी प्रभृति की भगवती के नेत्रों से तुल्यता नहीं हो सकती । इसलिये शफरिकाओं (मछलियों) का जलमध्य में निवास उचित ही है । इस प्रकार काव्यलिङ्गध्वनि रूप अलङ्कार ध्वनि भी है ॥ ५६ ॥

**ध्यान**—'त' । **श्लोकस्थ वर्ण बीज 'त' का ध्यान**—

चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम् ।
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम् ॥
नानाऽलङ्कारभूषां तां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा तकारं तु मन्त्ररूपं सदा यजेत् ॥
तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा ॥
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम् ॥

**बीजाक्षर**—'त'; जपादि विधान पूर्ववत् ।

**पूजन-यन्त्र**—कर्ण जैसे वृत्त में 'यं यं यं' लिखे ।

वृष्टिप्रदयन्त्र

यं
यं
यं

**भावार्थ**—हे अपर्णे ! आप के कर्ण पर्यन्त फैले हुये दिव्य नेत्रों के भय से (कि कहीं ये कान में खबर न कर दें) मछलियाँ अनिमेष नेत्र से पानी के नीचे जा छिपी हैं । वस्तुत: दिन में सौन्दर्य-श्री नील कमलिनी को छोड़ कर चली जाती हैं, जब कि उसके दल-द्वार बन्द होते हैं और रात्रि के समय उनके दल-द्वार खुलने पर वह उनमें पुन: प्रवेश करती है । यहाँ स्तवनकार ने नेत्रों से मछली तथा कमलिनी को सन्तुलित किया है । मछली का जल में अनिमेष नयन से छिपे रहने का कारण भगवती के नेत्रों का भय कहा है । उसी प्रकार कमलिनी आपके नेत्र-भय से रात्रि को खिलती है । जब भगवती के नेत्र निद्रा में बन्द हो जाते हैं तथा दिन में भगवती की आँख खुलते ही कमलिनी की श्री भी भय से पलायन कर जाती है तथा उसके पत्र बन्द हो जाते हैं ॥ ५६ ॥

**दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा**
**दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।**
**अनेनायं धन्यो भवति न च ते हानिरियता**
**वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ ५७ ॥**

**लक्ष्मीधरा—दृशा** कटाक्षदृष्ट्या, **द्राघीयस्या** दीर्घतरया, **दरदलितनीलोत्पलरुचा** दरदलितमीषद्विकसितं नीलोत्पलं इन्दीवरं तस्येव रुचिः कान्तिर्यस्याः तया, **दवीयांसं** दूरवर्तिनम् । दूरशब्दस्य 'स्थूलदूर' इत्यादिना सूत्रेण यणो लोपः, पूर्ववर्णस्य गुणे कृते अवादेशे कृते सिद्धं रूपं दवीयानिति ईयसुन्प्रत्ययान्तम् । दीनं दरिद्रं, **स्नपय** स्नपनं कुरु । कृपया दयया, मामपि इतरजनसाधारण्यमपि शब्दार्थः । **शिवे** ! मङ्गलात्मिके ! **अनेन** एतावन्मात्रेण स्नपनेनानि, **अयं** जनः अहमित्यर्थः । **धन्यो भवति** कृतार्थी भवति । **न च ते** तव, **हानिः** द्रव्यनाशः **इयता** साधारणदर्शनमात्रेण, **वने वा** अरण्ये वा, **हर्म्ये** प्रासादे वा, **समकरनिपातः** समं तुल्यं यथा भवति तथा कराणां किरणानां निपातः व्यापनं यस्य स तथोक्तः । **हिमकरः** शीतरश्मिः ।

**अत्रेत्थं पदयोजना**—हे शिवे ! द्राघीयस्या दरदलितनीलोत्पलरुचा दृशा दवीयांसं दीनं कृपया मामपि स्नपय अयं अनेन धन्यो भवति । इयता ते हानिर्न च । तथा हि—हिमकरः वने वा हर्म्ये वा समकरनिपातो हि । स्वच्छान्तःकरणानां सर्वसाधारण्यं स्वभावसिद्धमिति भावः ।

अर्थान्तरन्यासोऽलङ्कारः; सामान्येन विशेषसमर्थनात् । सर्वसाधारण्यदर्शनं सर्वोत्कृष्टत्वे हेतुरिति नात्मीयतादर्शनापेक्षा अस्तीति ध्वनिः ॥ ५७ ॥

## * सरला *

**दृशेति । दृशा** कटाक्षदृष्टि से **द्राघीयस्याः** अत्यन्त दीर्घ **दरदलितनीलोत्पलरुचा** ईषद्विकसित कमल की कान्ति के समान कान्ति है जिसकी, उससे **दवीयांसं** अत्यन्त दूर । यहाँ 'स्थूलदूर' इस सूत्र से दूर शब्द से ईयसुन् प्रत्यय करने पर यण का लोप, दू को गुण एवं अवादेश कर लेने पर उक्त प्रयोग दवीयान् की सिद्धि होती हैं । **दीनं** अत्यन्त दरिद्र **स्नपय** स्नान कराओं **कृपया** दया से **मामपि** और साधारण जनों के समान मुझे भी **शिवे** मङ्गलात्मिके **अनेन** केवल स्नान कराने मात्र से **अयं** यह जन मैं **धन्यो भवति** कृतार्थ हो जायगा **न च ते हानिः इयत्ता** इस साधारण दर्शन मात्र से आपके द्रव्य का नाश भी नहीं होगा । **वने वा** अरण्य में **हर्म्ये वा** अथवा प्रासाद में **समकर निपातः** समान रूप से किरणों को प्रसारित करने वाला **हिमकरः** शीतरश्मि चन्द्रमा है ।

**पदयोजना का अर्थ**—हे शिवे ! किञ्चिद्विकसित नीलोत्पल की शोभा वाली अपनी विशाल दृष्टि से अत्यन्त दूर रहने वाले मुझ दीन पर कृपा कर स्नान से आप्लावित कीजिए मैं मात्र इतने से ही धन्य हो जाऊँगा । इससे आपके द्रव्यादि की हानि भी नहीं होगी क्योंकि चन्द्रमा अपनी किरणों को सर्वत्र चाहे वन हो चाहे उच्च अट्टालिका हो समान रूप से विकीर्ण करता है, क्योंकि स्वच्छ अन्तःकरण वाले सबको एक समान देखते हैं यह उनका स्वभाव ही है ।

यहाँ अर्थान्तरन्यास अलङ्कार है, क्योंकि प्रकृत में सामान्य से विशेष का समर्थन किया गया है । सबको समान रूप से देखना ही सर्वोत्कृष्टता में हेतु है । अपना और पराया देखने की अपेक्षा सर्वोत्कृष्टता में हेतु नहीं होती । यह ध्वनि भी निकलती है ॥ ५७ ॥

**ध्यान—दृ = द् + ऋ । श्लोकस्थ वर्णबीज 'दृ' का ध्यान—**

**दकार का ध्यान—** चतुर्भुजां पीतवस्त्रां नवयौवनसंस्थिताम् ।
अनेकरत्नघटितहारनूपुरशोभिताम् ॥
एवं ध्यात्वा दकारं तु तन्मन्त्रं दशधा जपेत् ।
त्रिशक्तिसहितं देवि ! त्रिबिन्दुसहितं प्रिये ! ॥
आत्मादितत्त्वसंयुक्तं दकारं प्रणमाम्यहम् ।
दकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम् ॥
पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा ॥

**ऋकार का ध्यान—** षड्भुजां नीलवर्णां च नीलाम्बरधरां पराम् ।
नानालङ्कारभूषाढ्यां सर्वालंकृतमस्तकाम् ॥
भक्तिप्रदां भगवतीं भोगमोक्षप्रदायिनीम् ।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
पञ्चप्राणमयं वर्णं चतुर्ज्ञानमयं तथा ।
रक्तविद्युल्लताकारं ऋकारं प्रणमाम्यहम् ॥
ऋकारः परमेशानि ! कुण्डलीमूर्तिमान्स्वयम् ।
अत्र ब्रह्मा च विष्णुश्च, रुद्रश्चैव वरानने ॥
सदाशिवयुतं वर्णं सदा ईश्वरसंयुतम् ।
ऊर्ध्वा दक्षगता वक्रा त्रिकोणा वामतस्ततः ॥
पुनस्त्वधो दक्षगता मात्रा शक्तिः परास्मृता ।
मात्रा तु ब्रह्मविष्ण्वीशाः तिष्ठन्ति क्रमतो परा ॥

**बीजाक्षर**—'दृ'; जप-संख्या—१०००; जप-स्थान—अनाहता; होम—मधुर-त्रय, दाडिमी-कुसुम-सिद्ध चरु से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—४ । पूजनयन्त्र—चतुष्कोण में 'श्रीं श्रीं' लिखे ।

**सकलसौभाग्यप्रद यन्त्र**

| श्रीं<br>श्रीं |
|---|

**भावार्थ**—हे शिवे ! आप अति दूरदर्शिनी दिव्य दृष्टि से, जो खिलती हुई नील कमलिनीवत् अत्यन्त मनोहर है, अति दीन और दूर पड़े हुये इस दास को भी स्नान कराओ । इससे यह दास तो कृतकृत्य हो जायगा और आपकी उसमें तनिक भी हानि न होगी । क्योंकि चन्द्र की अमृतमयी शीतल किरणें वन में तथा महल में समरूप से पड़ती हैं ॥ ५७ ॥

**अरालं ते पालीयुगलमगराजन्यतनये**
**न केषामाधत्ते कुसुमशरकोदण्डकुतुकम् ।**
**तिरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलस-**
**न्नपाङ्गव्यासङ्गो दिशति शरसन्धानधिषणाम् ॥ ५८ ॥**

**लक्ष्मीधरा—अरालं** कुटिलं, **ते पालीयुगलं** कर्णयुगलनयनयुगलयोर्मध्यं, **अगराजन्यतनये!** नगेन्द्रतनये! **न केषामाधत्ते** सर्वेषां करोत्येव । **कुसुमशरकोदण्डकुतुकं** मन्मथचापसौभाग्यं, **तिरश्चीनः** तिर्यक्प्रसारितः, **यत्र** पालीयुगले, **श्रवणपथमुल्लङ्घ्य**

कर्णान्तिकं प्राप्य, **विलसन्** स्फुरन्, **अपाङ्गव्यासङ्गः** अपाङ्गस्य कटाक्षस्य व्यासङ्गः दैर्घ्यं, **दिशति** करोति; **शरसन्धानधिषणां** शरसन्धानस्य बाणसंयोजनस्य धिषणां बुद्धिं तद्भ्रान्तिं संहितशरधिषणामिति यावत् ॥

**अत्रेत्थं पदयोजना**—हे अगराजन्यतनये! ते पालीयुगलमरालं कुसुमशरकोदण्ड-कुतुकं केषां नाधत्ते । यद्यस्मात् यत्र तिरश्चीनः विलसन् अपाङ्गव्यासङ्गः श्रवणपथमुल्लङ्घ्य शरसन्धानधिषणां दिशति ॥

अत्र भ्रान्तिमदलङ्कारः; अपाङ्गे संहितशरभ्रान्तेरुत्थानात् । पालीयुगले कुसुमशरको-दण्डबुद्धिः निश्चयात्मिका संशयपूर्विकेति सन्देहालङ्कार एव । अनयोरङ्गाङ्गिभावेन सङ्करः ।

### * सरला *

**अरालमिति** । **अरालं** कुटिल, **ते पालीयुगलं** आपके दोनों कानों और दोनो नेत्रों का मध्यवर्ती भाग, **अगराजन्यतनये** नगेन्द्र की कन्या, सम्बोधन पद है । **न केषामाधत्ते** सबको उत्पन्न करता ही है **कुसुमशरकोदण्डकुतुकं** कामदेव के बाण का सौभाग्य, **तिरश्चीनः** तिरछे पड़ने वाला, **तत्र** जिस (पाली युगल) में **श्रवणपथमुल्लंघ्य** कानों के पास प्राप्त हो कर **विलसन्** स्फुरित होता हुआ **अपाङ्गव्यासङ्गः** कटाक्ष की दीर्घता **दिशति** करता हैं **शरसन्धानधिषणां** बाणसंयोजन की बुद्धि अर्थात् उसकी भ्रान्ति, शरसन्धान की बुद्धि उत्पन्न करता है ।

**पदयोजना का अर्थ**—हे पर्वतराजपुत्रि ! आपके पालीयुगल (कर्णयुगल और नेत्र युगल का मध्यभाग कनपटी) टेढ़े होने के कारण भला किसके हृदय में कामदेव के घनुष् का कौतुक उत्पन्न नहीं करते? जहाँ से शोभा युक्त आपका तिरछा कटाक्ष श्रवण पथ (कनपटी) का उल्लंघन कर कान तक ताने गये बाणसन्धान की बुद्धि (भ्रान्ति) उत्पन्न करता है ।

अपाङ्ग में बाण सन्धान की भ्रान्ति उत्पन्न करने से यहाँ भ्रान्तिमान अलङ्कार है । पाली युगल पर कामदेव के धनुष् की बुद्धि निश्चय ही संशयपूर्विका है । इसलिये सन्देहालङ्कार भी है ओर दोनों का अङ्गाङ्गीभाव होने से संकर है ॥ ५८ ॥

**ध्यान**—'अ' । **श्लोकस्थ वर्णबीज 'अ' का ध्यान** इस प्रकार है—

**अ**— केतकीपुष्पगर्भाभां द्विभुजां हंसलोचनाम् ।
शुक्लपट्टाम्बरधरां पद्ममालाविभूषिताम् ॥
चतुर्वर्गप्रदां नित्यं नित्यानन्दमयीं पराम् ।
वराभयकरां देवीं नागपाशसमन्विताम् ॥
शृणु तत्त्वमकारस्य अतिगोप्यं वरानने ।
शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा ॥
पञ्चदेवमयं वर्णं शक्तिद्वयसमन्वितम् ।
निर्गुणं सगुणोपेतं स्वयं कैवल्यमूर्तिमान् ।
बिन्दुद्वयमयं वर्णं स्वयं प्रकृतिरूपिणी ॥

**साध्याकर्षण यन्त्र**

**बीजाक्षर**—'अ'; जप-संख्या—१०००; जप-स्थान—अनाहता चक्र; होम—मधुर-त्रय, दाडिमी-कुसुम सिद्ध चरु से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—४ ।

**भावार्थ**—हे गिरिराजतनये ! आप-श्री के कर्ण तथा नेत्र के बीच की झुकी हुई दोनों पाली (कनपटी) किस व्यक्ति को पुष्पधन्वा के धनुष के भ्रम में न डाल देगी ? क्योंकि आप श्री के नेत्र, जो कानपर्यन्त लम्बे हैं, ज्या पर चढ़े हुए बाण का स्मरण कराते हैं ॥ ५८ ॥

**स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं**
**चतुश्चक्रं मन्ये तव मुखमिदं मन्मथरथम् ।**
**यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं**
**महावीरो मारः प्रमथपतये सज्जितवते ॥ ५९ ॥**

**लक्ष्मीधरा**—**स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं** स्फुरन्तौ च तौ गण्डाभोगौ च गण्डस्थले दर्पणवन्निर्मलावित्यर्थः । तत्र प्रतिफलितं प्रतिबिम्बितं ताटङ्कयुगलं यस्य सः तं **चतुश्चक्रं** चत्वारि चक्राणि रथचरणानि यस्य तं चतुश्चक्रं, **मन्ये** शङ्के । **तव** भवत्या, **मुखं** आस्यं, **इदं** हृदयकमले परिदृश्यमानं, **मन्मथरथं** मदनस्य स्यन्दनं, **यं** रथं, **आरुह्य** अधिष्ठाय, **द्रुह्यति** अपराध्यति विध्यतीति यावत् । **अवनिरथं**, भूमिरथं **अर्केन्दु-चरणं** अर्केन्दू सूर्यचन्द्रौ तावेव चरणौ यस्य सः, **महावीरः** चतुश्चक्ररथारोहणमहिम्ना अप्रतिहतप्रतापः, **मारः** मन्मथः, **प्रमथपतये** त्रिपुरान्तकाय, **सज्जितवते** सज्जं कुर्वते सन्नद्धं कुर्वत इत्यर्थः ॥

**अत्रेत्थं पदयोजना**—हे भगवति! तव इदं मुखं स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं चतुश्चक्रं मन्मथरथं मन्ये । यमारुह्य मारः महावीरः सन् अवनिरथमर्केन्दुचरणं सज्जितवते प्रमथपतये द्रुह्यति । 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति चतुर्थी ॥

अत्र पूर्वार्धे उत्प्रेक्षालङ्कारः भगवत्याः मुखस्य रथत्वेनोत्प्रेक्षणात् । द्वितीयार्धे आरोहण-स्य महावीरत्वसम्पादकत्वकथनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । परमेश्वरस्य मन्मथेन सार्धं युद्धसन्नाहासम्बन्धेऽपि सम्बन्धकथनादतिशयोक्तिः । काव्यलिङ्गातिशयोक्त्योरङ्गाङ्गिभावेन सङ्करः । उत्प्रेक्षायास्तु काव्यलिङ्गं प्रत्यनुप्राणकतैव, न संसृष्टिः, नापि सङ्करः इति ध्येयम् । पृथक्स्थित्या उपकारकमनुप्राणकम् । अपृथक्स्थित्या प्रयोजक उपसर्जनम् । पृथक्स्थित्या प्रयोजकमङ्गम् । एतद्विलक्षणं संसृष्टिरित्यालङ्कारिकमतरहस्यम् । एतच्च पूर्वमुक्तमपि स्पष्टार्थं पुनः प्रतिपादितमिति ॥ ५९ ॥

*** सरला ***

**स्फुरदिति । स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलम्** दर्पण के समान अत्यन्त निर्मल गण्डस्थल पर प्रतिबिम्बित हो रहे हैं ताटङ्कयुगल जिसके, उसको मैं **चतुष्चक्रं** चार चक्का वाला **मन्ये** समझता हूँ **तव** आप के, **मुखं** मुख को, **इदं** हृदयकमल में दिखाई पड़ने

वाला, **मन्मथरथं** कामदेव का रथ, **यं** जिस रथ पर, **आरुह्य** चढ़कर, **द्रुह्यति** विद्ध करता है, **अवनिरथ** भूमिरथ को, **अर्केन्दुचरणं** सूर्य और चन्द्रमा रूप चक्के वाले, **महावीरः** चार पहिया वाले रथ पर चढ़े होने के कारण अप्रतिहत प्रताप वाला, **मारः** मन्मथ, **प्रमथपतये** त्रिपुरान्तक के लिये, **सज्जितवते** (रथ को मानो) सन्नद्ध कर रहा है ।

**पदयोजना का अर्थ**—हे भगवति ! दर्पण के समान अत्यन्त निर्मल गण्डस्थल पर प्रतिबिम्बित होने वाले दोनों कर्णफूलों से युक्त आपके मुख को मैं चार पहियों वाला कामदेव का रथ मानता हूँ जिस पर चढ़कर वह महावीर कामदेव सूर्य और चन्द्रमा रूप पहियों वाले पृथ्वी रूपी रथ पर युद्धार्थ सुसज्जित त्रिपुरान्तक भगवान् शङ्कर से मानो लड़ाई कर रहा है ।

यहाँ पूर्वार्ध में उत्प्रेक्षालङ्कार है क्योंकि भगवती के मुख की रथ से उत्प्रेक्षा की गई है । द्वितीयार्ध में आरोहण कर्त्ता के महावीरत्व सम्पादकत्व रूप कथन से पदार्थहेतुक काव्यलिङ्गालङ्कार कहा गया है । परमेश्वर सदाशिव का कामदेव के साथ युद्ध की सज्जा का सम्बन्ध न होने पर भी सम्बन्ध कथन है इसलिये अतिशयोक्ति भी है । काव्यलिङ्ग और अतिशयोक्ति का अङ्गाङ्गिभाव होने से संकर है । यह विचार कर लेना चाहिए कि पृथक् स्थिति में उपकारक अनुप्राणक है अपृथक् स्थिति से प्रयोजक उपसर्जन है, पृथक् स्थिति से प्रयोजक अंग है यह एक विलक्षण संसृष्टि भी है यहाँ ऐसा आलङ्कारिक विद्वानों के मत का रहस्य है । यद्यपि यह बात पहले कही जा चुकी है फिर भी स्पष्टार्थ के लिये यहाँ प्रतिपादित की गई है ॥ ५९ ॥

**ध्यान**—'स्फु' = स्+फ्+उ—**श्लोकस्थ वर्णबीज 'स्फु' का ध्यान**—

**स्**— करीषभूषिताङ्गीं च साट्टहासां दिगम्बराम् ।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम् ॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम् ।
सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम् ॥
एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत् ।
सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम् ।
कोटिविद्युल्लताकारं कुण्डलीमयसंयुतम् ॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा ।
रजस्सत्वतमोयुक्तं त्रिबिन्दुसहितं सदा ॥

**फ**— प्रलयाम्बुदवर्णाभां ललज्जिह्वां चतुर्भुजाम् ।
भक्ताभयप्रदां नित्यां नानालङ्कारभूषिताम् ॥
एवं ध्यात्वा फकारं तु तन्मन्त्रं दशधा जपेत् ।
फकारं शृणु चार्वङ्गि रक्तविद्युल्लतासमम् ॥
चतुर्वर्गप्रदं देवि ! पञ्चदेवमयं तथा ॥
पञ्चप्राणमयं वर्णं सदा त्रिगुणसंयुतम् ।
आत्मादितत्त्वसंयुक्तं त्रिबिन्दुसहितं प्रिये ॥

**उ**— पीतवर्णां त्रिनयनां पीताम्बरधरां पराम् ।
द्विभुजां जटिलां भीमां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥

उकारं परमेशानि अधःकुण्डलिनी स्वयम् ।
पीतचम्पकसङ्काशं पञ्चदेवमयं सदा ॥
पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम् ।

**बीजाक्षर**—'स्फु'; जप-संख्या—१०००; जप-स्थान—अनाहता; होम—मधुर-त्रय, दाडिमी-कुसुम सिद्ध चरु से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—४ ।

**सर्वजनवशीकरण यन्त्र**

| ऐं<br>क्लीं<br>सौः |
|---|

**पूजनयन्त्र**—चतुष्कोण में 'ऐं क्लीं सौः' लिखे ।

**भावार्थ**—हे भगवति ! आपका यह श्री-मुख, जिसमें कान में पहने हुये ताटङ्काभरण की दिव्य मणियों का प्रकाश दिव्य कपोलों पर पड़ रहा है, महावीर श्री मन्मथराज का चार पहिये वाला रथ है, जिस पर बैठकर वह अद्वितीय योद्धा मानो सूर्य-चन्द्र-रूप चक्र वाले पृथ्वी-रथ पर बैठे हुये श्री भगवान् प्रमथनाथ के सम्मुख युद्धार्थ तत्पर हुआ है ।

इस श्लोक में भगवती श्री उमा के मुख की कामरथ से उपमा दी गई है, जिसमें श्री-मुख को रथ, कर्ण में पहिने हुये दो ताटङ्कों और दोनों कपोलों पर पड़ती हुई उनकी दो छायाओं को चार चक्र (रथ के चार पहिये) कहा गया है । अर्थात् श्री उमा के दिव्य सौन्दर्य का आश्रय लेकर श्री मदन कामदेव भगवान् श्री त्रिपुर-हर महाप्रभु के समक्ष मानो युद्ध करने को प्रस्तुत हुये हैं ॥ ५९ ॥

**सरस्वत्याः सूक्तीरमृतलहरीकौशलहरीः**
**पिबन्त्याः शर्वाणि श्रवणचुलुकाभ्यामविरलम् ।**
**चमत्कारश्लाघाचलितशिरसः कुण्डलगणो**
**झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ॥ ६० ॥**

**लक्ष्मीधरा—सरस्वत्याः** भारत्याः, **सूक्तीः** मधुरवचांसि, **अमृतलहरीकौशलहरीः** अमृतलहर्याः सुधाप्रवाहोत्सेकस्य कौशलं सौभाग्यं हरन्तीति ताः । हरिशब्दः औणादिको निप्रत्ययान्तः, 'कृदिकारादक्तिनो वा ङीष् वक्तव्यः' इति ङीष् । **पिबन्त्याः** धयन्त्याः, **शर्वाणि !** शर्वस्य परमेश्वरस्य पत्नि ! **श्रवणचुलुकाभ्यां** चुलुकं प्रसृत्यर्धं श्रवणे श्रोत्रे चुलुके ताभ्यां अविरलं यथा भवति तथा, सावधानेनेत्यर्थः । **चमत्कारश्लाघाचलितशिरसः** चमदित्यव्ययमाश्चर्यानुकरणवाचि । कारशब्दः स्वरूपपरः । यद्वा—सुखदुःखोद्भूतानन्दैः हठोत्थितचित्तविक्रिया चमत्कारः ससीत्कारशरीरोल्लासनादिकृत् । चमत्कारश्लाघासु आश्चर्यानुकरणसन्दोहेषु चलितं शिरो यस्यास्तस्याः, **कुण्डलगणः** कर्णाभरणसमूहः, **झणत्कारैः** झणदित्यव्ययं भूषणरवानुकरणे । कारशब्दः स्वरूपवाची । झणत्कारैः **तारैः** अतिबहुलैः उच्चतरैः, **प्रतिवचनं** प्रतिशब्दं अनुमोदवचनं, **आचष्ट इव ते** ॥

**अत्रेत्थं पदयोजना**—हे शर्वाणि ! ते अमृतलहरीकौशलहरीः सूक्तीः श्रवणचुलुकाभ्यामविरलं पिबन्त्याः चमत्कारश्लाघाचलितशिरसः सरस्वत्याः कुण्डलगणः तारैः झणत्कारैः प्रतिवचनमाचष्ट इव ॥

अत्र उत्तरार्धे उत्प्रेक्षालङ्कारः; झणत्काराणां प्रतिवचनत्वेन सम्भावनात्। पूर्वार्धे अतिशयोक्तिरलङ्कारः; सरस्वत्याः शिरः कम्पनसम्बन्धाभावेऽपि सम्बन्धोक्तेरसम्बन्धे सम्बन्धनिबन्धनात्। उभयोरङ्गाङ्गिभावेन सङ्करः ॥ ६० ॥

## * सरला *

**सरस्वत्या** इति। **सरस्वत्याः** भारती स्वरस्वती की, **सूक्तीः** माधुर्य युक्त वाणी की, **अमृतलहरीकौशलहरीः** सुधाप्रवाह की लहरी के सौभाग्य को हरण करने वाली, 'हरि' शब्द औणादिक 'नि' प्रत्ययान्त है। 'कृदिकारादक्तिनः वा ङीष् वक्तव्यः' से वैकल्पिक ङीष् होने से 'हरीः' बना है। **पिबन्त्याः** पीने वाली, **शर्वाणी** परमेश्वर पत्नि! सम्बोधन में रूप है। **श्रवणचुलुकाभ्यां** (चुलुक आधे पसर को कहते हैं) कान ही हैं चुलुक जिन दोनों के, **अविरलं** निरन्तर पीते हुये अर्थात् सावधानी से, **चमत्कारश्लाघाचलितशिरसः** 'चमत्' यह अव्ययपद है, जो आश्चर्यानुकरण का वाचक है। कार शब्द स्वरूप परक है अथवा सुखदुःख से उद्भूत आनन्द के द्वारा हठपूर्वक उत्पन्न हुई चित्त की विक्रिया चमत्कार है, जो सीत्कार सहित शरीर में उल्लास पैदा करने वाला है। आश्चर्यानुकरण समूह में चलित हो गया है शिर जिसका उसका। **कुण्डलगणः** कर्णाभरणसमूह, **झणत्कारैः** 'झणत्' यह अव्ययपद है, जो भूषण के अनुकरण का वाचक है। कार शब्द स्वरूप वाचक है अर्थात् झणत्कार से, **तारैः** बहुत ऊँचे स्वर में, **प्रतिवचनं** कहे गये वचनों द्वारा, **आचष्ट इव ते** मानो वे अनुमोदन कर रहे हैं।

**अर्थ**—हे शर्वाणि! अमृतलहरी के सौभाग्य को हरण करने वाली आपकी सूक्तियों को अपने श्रवण रूप चुलुकों द्वारा निरन्तर पान करने वाली, आश्चर्यानुकरण सन्दोह में अपने चञ्चल शिर को हिलाती हुई, सरस्वती के कुण्डलगण, अब झण झण शब्दों को करते हुये बहुत ऊँचे स्वरों द्वारा मानो उसका अनुमोदन कर रहे हैं।

यहाँ झणत्कार में प्रतिवचन की सम्भावना के कारण उत्तरार्ध में उत्प्रेक्षा अलङ्कार है। पूर्वार्ध में सरस्वती के शिरः कम्पन का सम्बन्ध न होने पर भी उनके सम्बन्ध कहने से अर्थात् असम्बन्ध में सम्बन्ध प्रतिपादन से अतिशयोक्ति अलङ्कार है। दोनों का अङ्गाङ्गीभाव होने से संकर है ॥ ६०॥

**ध्यान—श्लोकस्थ वर्णबीज 'स' का ध्यान—**

स्— करीषभूषिताङ्गीं च साट्टहासां दिगम्बराम्।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम्॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम्।
सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम्॥
एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत्।
सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम्।
कोटिविद्युल्लताकारं कुण्डलीमयसंयुतम्॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा।
रजस्सत्वतमोयुक्तं त्रिबिन्दुसहितं सदा॥

**विद्याप्राप्ति यन्त्र**

**बीजाक्षर**—'स'; जप-संख्या—१०००; जप-स्थान—अनाहता चक्र; होम—मधुर-त्रय, दाडित्रमी-कुसुम सिद्ध चरु से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—४।

**पूजन-यन्त्र**—त्रिशूलयुक्त त्रिकोण में 'श्रीं' लिखे।

**भावार्थ**—हे शिवे ! जिस समय आप अपने कर्ण के दोनों विवर से श्री सरस्वती-निर्मित और उनके द्वारा मधुर स्वर से गाये हुये (आप के) स्तवन-वाचक मधुर सुधामय काव्यगान का पान करती हैं, उस समय आपके कर्ण-ताटङ्क की घण्टियाँ उस गान के प्रशंसा-भाव में धीरे-धीरे हिलते हुये अर्थात् शिर के साथ हिलती हुईं अत्यन्त मधुर स्वरमय आनन्दातिरेक को उत्पन्न करती हैं।

**विमर्श**—इस श्लोक में भगवती सरस्वती के सुकाव्य तथा सुगायन की प्रशंसा तथा भगवती के कर्ण ताटङ्क की दिव्य स्वरमयी घण्टियों का वर्णन है ॥ ६० ॥

**असौ नासावंशस्तुहिनगिरिवंशध्वजपटि**
**त्वदीयो नेदीयः फलतु फलमस्माकमुचितम्।**
**वहत्यन्तर्मुक्ताः शिशिरकरनिःश्वासगलितं**
**समृद्ध्या यत्तासां बहिरपि च मुक्तामणिधरः ॥ ६१ ॥**

**लक्ष्मीधरा—असौ** परिदृश्यमानः, **नासावंशः** नासा नासिका वंशः वंशदण्डः रूपकमेतत्। **तुहिनगिरिवंशध्वजपटि!** तुहिनगिरेः हिमाचलस्य वंशस्य अन्वयस्य ध्वजपटि पताके ! **त्वदीयः** भवदीयः, **नेदीयः** सन्निकृष्टतरं, **फलतु** निष्पादयतु। फलं इष्टार्थं, **अस्माकं** मत्सम्बन्धिनां मम चेत्यर्थः। **उचितं** क्रियाविशेषणमेतत् यथेप्सितं वहति धारयति। **अन्तः** अभ्यन्तरे, **मुक्ताः** मुक्तामणीन् **शिशिरकरनिश्वासगलितं** शिशिरकरः चन्द्रः तस्य निश्वासो वामनाडीमार्गवायुः तेन गलितं सृतं, **समृद्ध्या** आधिक्येन, **यत्** यस्मात्कारणात्, **तासां** मुक्तानां, **बहिरपि** च बाह्यप्रदेशेऽपि नासिकाग्रवामभागेऽपीत्यर्थः। नासिकाकारितो वंशदण्डः **मुक्तामणिधरः** मुक्तामणिं धृतवान्। 'मुक्तामणिमधात्' इति सम्यक्पाठः ॥

**अत्रेत्थं पदयोजना**—हे तुहिनगिरिवंशध्वजपटि! त्वदीयोऽसौ नासावंशः अस्माकं उचितं नेदीयः फलं फलतु। सः अन्तः मुक्ताः वहति। यद्यस्मात्कारणात् तासां समृद्ध्या शिशिरकरनिश्वासगलितं बहिरपि च मुक्तामणिधरः।

अत्र नासिकायाः वंशत्वारोपणात् रूपकम्। वंशत्वसाधकप्रतिपादकं उत्तरार्धम्। वंशगर्भे मौक्तिकानि उद्भवन्तीति लोकशास्त्रमर्यादा। अतो नासावंशदण्डेऽपि अभ्यन्तरे मौक्तिकान्युद्भूतानि वर्तन्ते। नो चेन्नासादण्डस्य बहिः मुक्तामणिधरत्वं कथं सङ्घटत इत्यर्थापत्त्या वंशदण्डाकारो नासिकायाः समर्थित इति रूपकमेव सम्यक् ॥ ६१ ॥

## * सरला *

**असाविति। असौ** यह दिखाई पड़ने वाला, **नासावंशः** नासिका वंश, वंश शब्द दण्ड का वाचक है। नासा दण्ड यहाँ रूपक है। **तुहिनगिरिवंशध्वजपटि** ! हिमालय के वंश

की पताकाभूते ! **त्वदीयः** आप की, **नेदीयः** अत्यन्त सन्निकट, **फलतु** निष्पादन करे । **फलं** अभीष्ट मनोरथ को, **अस्माकं** मेरे सम्बन्धियों के तथा मेरे भी, **उचितं** यह क्रियाविशेषण पद है, यथेप्सित रूप से **वहति** धारण करता है । **अन्तः** भीतर, **मुक्ता** मोती की मणियों को, **शिशिरकरनिःश्वासगलितं** वाम नाडीमार्ग के वायु से निकला हुआ, **समृद्ध्या** अधिकता से, **यत्** जिस कारण से, **तासां** उन मोती की मणियों का, **बहिरपि** बाह्यप्रदेश में भी अर्थात् नासिकाग्र के वामभाग में भी, नासिकाकार में वंश धारण करने वाली, **मुक्तामणिधरः** मोती की मणियों को धारण किया है । यहाँ 'मुक्तामणिमधात्' यह सम्यक् पाठ है ।

**पदयोजना का अर्थ**—हे हिमालय के वंश की पताका की पटी ! आपका यह नासावंश हमको उचित रूप से शीघ्र ही अभीष्ट फल प्रदान करे, अथवा उनमें हमारे योग्य उचित फल लगें क्योंकि वंशदण्ड अपने अन्तःकरण में मोती की मणियों को धारण करता है । इस कारण जब वे अधिक संख्या में हो जाती हैं । तब आपके वाम नाडी मार्ग में रहने वाले वायु से निकली हुई मुक्तामणि को आपके नासिका वंश अपनी बाँयीं ओर धारण किये हुये हैं क्योंकि वह वंशदण्ड अपने अन्तःकरण में मोतियों को धारण करता है । तदनन्तर अधिक हो जाने पर वाम नाडी मार्ग में रहने वाले वायु के द्वारा बाहर निकली हुई उन मुक्तामणियों को बाहर भी उसी नासावंश ने अपने वाम भाग में धारण किया हुआ है ।

यहाँ नासिका में वंशत्व का आरोप होने से रूपकालङ्कार है । वंशत्व साधक प्रतिपादक वचन उत्तरार्ध है । वंशों के भीतर मोती उत्पन्न होती हैं ऐसी लोकशास्त्र मर्यादा है । इसलिये नासावंश दण्ड में भी भीतर-भीतर मोतियाँ उत्पन्न होती हैं । यदि ऐसा नहीं होता तो नासा-दण्ड भला किस प्रकार बाहर मुक्तामणि धारण करने में संघटित होता? इस अर्थापत्ति से नासिका को वंशदण्डाकार रूप में समर्थित किया गया है अतः यह भी रूपक है ॥ ६१ ॥

**ध्यान**—'अ' । **श्लोकस्थ वर्णबीज 'अ' का ध्यान** इस प्रकार है—

**अ**— केतकीपुष्पगर्भाभां द्विभुजां हंसलोचनाम् ।
शुक्लपट्टाम्बरधरां पद्ममालाविभूषिताम् ॥
चतुर्वर्गप्रदां नित्यं नित्यानन्दमयीं पराम् ।
वराभयकरां देवीं नागपाशसमन्विताम् ॥
शृणु तत्त्वमकारस्य अतिगोप्यं वरानने ।
शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा ॥
पञ्चदेवमयं वर्णं शक्तिद्वयसमन्वितम् ।
निर्गुणं सगुणोपेतं स्वयं कैवल्यमूर्तिमान् ।
बिन्दुद्वयमयं वर्णं स्वयं प्रकृतिरूपिणी ॥

**ऐश्वर्यप्राप्तिकर यन्त्र**

ह्रीं

**बीजाक्षर**—'अ'; जप-संख्या—१०००; जप-स्थान—विशुद्धिचक्र; होम—तिल, शर्करा और जपा कुसुम से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोक-पाठ-आहुति—५ ।

**पूजनयन्त्र**—त्रिकोण, उसके मध्य में 'ह्रीं' ।

**भावार्थ**—हे गिरिवंशध्वजपटि ! यह आप की नासिका का वंश (बांस) भक्त साधकों को त्वरित उचित फल देने वाला हो । आप के प्रशान्त ठण्डे निःश्वास से नासिका के छिद्रान्तर भाग में मोती बने हैं तथा नासिका के बहिर्भाग में भी आप ने मोती धारण किया है ।

**विमर्श**—इस श्लोक में भगवती की नासिका की वंश से उपमा दी गई है । वंश में छिद्र होता है। कवियों का मानना था कि बाँस में से मोती उत्पन्न होता है । 'फलतु फलमस्माकमुचितं' में 'फल' शब्द से भगवत्पाद का भाव 'वंश से उत्पन्न हुआ मोती' है । परन्तु वस्तुगत भाव यह है कि 'फल' शब्द से कवि का भाव 'कैवल्य' अथवा मोक्ष से है । आप भगवती की नासिका अनन्त मोतियों से विभूषित है ।। ६१ ।।

**प्रकृत्याऽऽरक्तायास्तव सुदति दन्तच्छदरुचेः**
**प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलता ।**
**न बिम्बं तद्बिम्बप्रतिफलनरागादरुणितं**
**तुलामध्यारोढुं कथमिव विलज्जेत कलया ।। ६२ ।।**

**लक्ष्मीधरा**—**प्रकृत्या** स्वभावेन, **आरक्तायाः** आताम्रायाः, **तव सुदति** शोभनाः दन्ताः यस्याः तस्याः सम्बुद्धिः । **दन्तच्छदरुचेः** दन्तच्छदयोरोष्ठयोः रुचेः सौभाग्यस्य, प्रवक्ष्ये प्रकर्षेण कथये । **सादृश्यं** सदृशस्य भावः सादृश्यं, **जनयतु** उत्पादयतु । आशंसायां लोट् । विद्रुमस्य फलं यदि स्यात् तदा सदृशवस्तुसद्भावः न तु विद्रुममात्रं सदृशमिति । **फलं** पक्वफलं पीतवर्णाभ्यो लताभ्यः उत्पन्नं फलं अतिरिक्तं, रक्तलतोत्पन्नस्य रक्तिमा किमु वक्तव्य इति तदेव सदृशमिति तात्पर्यम् । **विद्रुमलता** प्रवाललतिका । **न बिम्बं** बिम्बफलं **तद्बिम्बप्रतिफलनरागात्** तयोः दन्तच्छदयोः बिम्बस्य प्रतिफलनं प्रतिबिम्बनं तेन रागः रक्तिमा तस्मात् । बिम्बफलमिति व्यवहारः अधरबिम्बप्रतिबिम्बप्रसादासादितः, अन्यथा तस्य बिम्बव्यवहारो न स्यात् । यथा स्फटिकादौ जपाकुसुमादेः प्रतिबिम्बवशादेव स्फटिकादीनां रक्तता एवं बिम्बफलस्यापीति । तद्बिम्बप्रतिफलनरागात्, **अरुणितं तुलामध्यारोढुं** तुलायां साम्यकथायां स्थातुं कथमिव । इवेति वाक्यालङ्कारे । **विलज्जेत** व्रीडेत, **कलया** लेशेन ।

**अत्रेत्थं पदयोजना**—हे सुदति ! तव प्रकृत्या आरक्तायाः दन्तच्छदरुचेः सादृश्यं प्रवक्ष्ये । विद्रुमलता फलं जनयतु । बिम्बं पुनः तद्बिम्बप्रतिफलनरागादरुणितं कलयापि तुलामध्यारोढुं कथमिव न विलज्जेत । लज्जधातुरात्मनेपदी ।

अत्रातिशयोक्तिरलङ्कारः, यद्यर्थोक्तौ कल्पनात् । द्वितीयार्धे असम्बन्धे सम्बन्धनिबन्धनातिशयोक्तिः, बिम्बप्रतिफलनासम्बन्धेऽपि सम्बन्धकथनेनाभेदकथनात् । उभयोः संसृष्टिः ।। ६२ ।।

*** सरला ***

**प्रकृत्या** इति । **प्रकृत्या** स्वभाव से **आरक्तायाः** रक्तवर्ण, **तव सुदति** सुन्दर दाँतो वाली, सम्बोधन का रूप है, **दन्तच्छदरुचेः** दोनों ओष्ठों की सुन्दरता को **प्रवक्ष्ये** कहता हूँ, **सादृश्यं** सदृश का भाव सादृश्य **जनयतु** उत्पन्न करे, यहाँ आशंसा में लोट् लकार प्रयुक्त है । **विद्रुमलताफलं** मूँगे लता में यदि फल लगें, यहाँ केवल विद्रुम मात्र से सादृश्य नहीं है, वह

फल भी पका होना चाहिए। पीतवर्ण की लताओं में उत्पन्न हुआ फल दूसरे प्रकार का होता है, रक्त वर्ण की लता में पक्व फल की रक्तता के विषय में तो कहना ही क्या है ? कदाचित् उसी से सादृश्य बन सकता है। विद्रुमलता का अर्थ है प्रवाललतिका। **न बिम्बं तद्बिम्बप्रतिफलनरागात्** दोनों ओष्ठ रूप बिम्ब के प्रतिबिम्बन से प्राप्त होने वाली अरुणिमा। उससे वेर में जो बिम्ब फल का व्यवहार होता है वह भगवती के ओष्ठ के प्रतिबिम्ब की कृपा से ही है, अन्यथा उसमें बिम्बफल का व्यवहार होना सम्भव नहीं था। जिस प्रकार स्फटिकमणि में जपाकुसुमादि के प्रतिबिम्बवश स्फटिकादि रक्त वर्ण के हो जाते हैं, उसी प्रकार बिम्बफल का भी व्यवहार भगवती के अधरोष्ठ के प्रतिबिम्बित होने से हुआ है। उस बिम्ब के प्रतिबिम्ब से प्राप्त लालिमा **अरुणितं तुलामध्यारोढुं** तुलायां अर्थात् तुला की समता में स्थित। **कथमिव** कैसे हो सकता है? यहाँ इव वाक्यालङ्कार के लिये है। **विलज्जेत** लज्जित हो जा सकती है, **कलया** उसके लेश मात्र से भी।

**पदयोजना का अर्थ**—हे सुन्दर दाँतों वाली भगवति ! स्वभावतः अत्यन्त रक्त वर्ण वाले आपके अधरोष्ठों की शोभा कहता हूँ। यदि मूँगे की लता में फल लग जाय, तब उनकी सुन्दरता के समान आपके अधरोष्ठों का सादृश्य बन सकता है। परन्तु बिम्ब फल तो आपके अधरोष्ठ रूप बिम्ब के प्रतिबिम्ब से अरुणिमा प्राप्त किया है। फिर वह अपनी लेशमात्र कला से आपके अधरोष्ठ की साम्यता के लिये तुला पर चढ़ने के लिये क्यों नहीं लज्जित होगा? वस्तुतः 'लज्ज' धातु आत्मनेपदी है।

यहाँ अतिशयोक्ति अलङ्कार है। द्वितीयार्ध में असम्बन्ध में सम्बन्ध के निबन्धन से अतिशयोक्ति है। क्योंकि बिम्ब के प्रतिबिम्ब स्वरूप के कथन का सम्बन्ध न होने पर भी सम्बन्ध कथन कर अभेद कथन किया गया है। दोनो से संसृष्टि अलङ्कार है ॥ ६२ ॥

**ध्यान**—'प्र' = प + र।

**श्लोकस्थ वर्णबीज 'प्र' का ध्यान**—

**प**— विचित्रवसनां देवीं द्विभुजां पङ्कजेक्षणाम्।
रक्तचन्दनलिप्ताङ्गीं पद्ममालाविभूषिताम् ॥
मणिरत्नादिकेयूररत्नहारैकविग्रहाम्।
चतुर्वर्गप्रदां नित्यां नित्यानन्दमयीं पराम्।
एवं ध्यात्वा पकारं तु तन्मन्त्रं दशधा जपेत्।
अतःपरं प्रवक्ष्यामि पकाराक्षरमव्ययम्।
चतुर्वर्गप्रदं वर्णं त्रिशक्तिसहितं प्रिये ॥
पञ्चदेवमयं वर्णं शरच्चन्द्रमयप्रभम् ॥
पञ्चप्राणमयं वर्णं स्वयं परमकुण्डली ॥
त्रिगुणीसहितं वर्णं आत्मादितत्त्वसंयुतम्।
महामोक्षप्रदं देवि हृदि भावय पार्वति ॥

**र**— ललज्जिह्वां महारौद्रीं रक्तास्यां रक्तलोचनाम्।
रक्तमाल्याम्बरधरां रक्तालङ्कारभूषिताम् ॥
रक्तवर्णामष्टभुजां रक्तपुष्पोपशोभिताम्।

महामोक्षप्रदां नित्यां अष्टसिद्धिप्रदायिकाम् ॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ।
रेफं च चञ्चलापाङ्गि कुण्डलीद्वयसंयुतम् ।
सर्वतेजोमयं वर्णं सततं मनसि चिन्तयेत् ।

**बीजाक्षर**—'प्र'; जप-संख्या—१०००; जप स्थान—विशुद्धिचक्र; होम—तिल, शर्करा और जपा कुसुम से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ -आहुति—५ ।

**गम्भीरनिद्राप्राप्तिकर यन्त्र**

| मं |
| --- |
| मं |
| मं |

**पूजनयन्त्र**—चतुष्कोण में 'मं मं मं' लिखे ।

**भावार्थ**—हे सुन्दर दन्तपंक्ति वाली त्रिपुर-सुन्दरि ! मैं आप के स्वाभाविक रूप से लाल अधरोष्ठों की उपमा में उन्हें विद्रुमलता सम कहता हूँ, बिम्बाफलवत् नहीं । बिम्बाफल में तो आप के आरक्त रूप की रक्तिम छाया मात्र है । अत: आप के अनुपम रूप की तनिक भी तुलना उन्हें लज्जित करने में समर्थ है ।

**विमर्श**—अधरोष्ठ की लालिमा की उपमा कवियों द्वारा सामान्य रूप से बिम्बाफल से दी जाती है । किन्तु यहाँ देवी के अधरोष्ठों की लालिमा बिम्बाफल की लालिमा को भी लज्जित करने में समर्थ हैं ॥ ६२ ॥

**स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां**
**चकोराणामासीदतिरसतया चञ्चुजडिमा ।**
**अतस्ते शीतांशोरमृतलहरीमाम्लरुचय:**
**पिबन्ति स्वच्छन्दं निशिनिशि भृशं काञ्जिकधिया ॥ ६३ ॥**

**लक्ष्मीधरा**—**स्मितज्योत्स्नाजालं** स्मितमीषद्धसितमेव ज्योत्स्ना तस्या: जालं वितानं, **तव वदनचन्द्रस्य** वदनमेव चन्द्र: तस्य **पिबतां** आस्वादयतां, **चकोराणां** पक्षिविशेषाणां **आसीत् अतिरसतया** अतिमाधुर्यात्, **चञ्चुजडिमा** जिह्वाजाड्यम् । **अत:** कारणात्, ते चकोरा:, **शीतांशो:** चन्द्रस्य, **अमृतलहरीं** अमृतस्य सुधाया: उत्सेकं ज्योत्स्नामृतमित्यर्थ: । **आम्लरुचय:** आम्ले अम्लरसे रुचिर्वाञ्छा येषां ते आम्लरुचय:, **पिबन्ति** भक्षयन्ति । **स्वच्छन्दं** यथेच्छं, **निशिनिशि** प्रतिनिशं ज्योत्स्नास्विति शेष: । **भृशं** अत्यर्थं, **काञ्जिकधिया** आरनालभ्रान्त्या ॥

**अत्रेत्थं पदयोजना**—हे भगवति ! तव वदनचन्द्रस्य स्मितज्योत्स्नाजालं पिबतां चकोराणां अतिरसतया चञ्चुजडिमा आसीत्, अतस्ते आम्लरुचय: शीतांशोरमृतलहरी काञ्जिकधिया स्वच्छन्दं निशिनिशि भृशं पिबन्ति ॥

अत्र अतिशयोक्तिरलङ्कार:, चञ्चुजडिमनिबन्धनज्योत्स्नापानासम्बन्धेऽपि तत्सम्बन्ध-कथनात् अतिमधुरस्तन्यपानप्रसक्तजिह्वाजाड्यनिबन्धनाम्लपिपासुभि: बालकैरभेदाध्यवसानस्य प्रतीते: ॥ ६३ ॥

### * सरला *

**स्मितज्योत्स्नाजालमिति—स्मितज्योत्स्नाजालं** ईषद्धास्य रूपी ज्योत्स्ना के वितान को, **तव वदनचन्द्रस्य** आपके मुख रूप चन्द्रमा की ज्योत्स्ना का **पिबतां** आस्वादन करने वाले **चकोराणां** चकोर नामक पक्षि विशेष को **आसीत् अतिरसतया** अत्यन्त माधुर्य के कारण **चञ्चुजडिमा** जिह्वा की जड़ता हो जाती थी । **अतः** इस कारण से **ते** वे चकोर पक्षी **शीतांशोः** चन्द्रमा के **अमृतलहरीं** ज्योत्स्नामृत को **अम्लरुचयः** खट्टे पदार्थों में रुचि धारण करने की इच्छा से **पिबन्ति** भक्षण करते हैं **स्वच्छन्दं** यथेच्छ, **निशिनिशि** प्रत्येक रात्रि में । चन्द्रमा की ज्योत्स्ना को **भृशं** अत्यन्त **काञ्जिकधिया** आरनाल (काँजी का बड़ा) की भ्रान्ति से पीते हैं ।

**अर्थ**—हे भगवति ! आपके मुख चन्द्र के ईषद्धास्य रूप चन्द्रिका को प्रचुर मात्रा में पी लेने के कारण उसके अत्यन्त माधुर्य से चकोरों की जिह्वा जड़ हो गई । इसलिये खट्टे पदार्थों में अपनी इच्छा रखकर वे अब चन्द्रमा के अमृत लहरी (ज्योत्स्ना) को काँजी (खट्टा) समझ कर प्रत्येक रात्रि में उसे ही स्वच्छन्दतापूर्वक पीते रहते है ।

यहाँ भी अतिशयोक्ति अलङ्कार है क्योंकि चञ्चु की जड़िमा के हेतुभूत ज्योत्स्ना पान का सम्बन्ध न होने पर भी प्रकृति में सम्बन्ध कहा गया है । यहाँ अत्यन्त मधुर स्तन्य पान में प्रसक्त जिह्वा की जड़ता से अम्ल पान की इच्छा रखने वाले बालकों से अभेद की प्रतीति भी होती है ॥ ६३ ॥

**ध्यान**—स्मि = स् + म् + इ । **श्लोकस्थ वर्णबीज 'स्मि' का ध्यान—**

**स्**— करीषभूषिताङ्गीं च साट्टहासां दिगम्बराम् ।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम् ॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम् ।
सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम् ॥
एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत् ।
सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम् ।
कोटिविद्युल्लताकारं कुण्डलीमयसंयुतम् ॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा ।
रजस्सत्वतमोयुक्तं त्रिबिन्दुसहितं सदा ॥

**म**— कृष्णां दशभुजां भीमां पीतलोहितलोचनाम् ।
कृष्णाम्बरधरां नित्यां धर्मकामार्थमोक्षदाम् ॥
एवं ध्यात्वा मकारं तु तन्मन्त्रं दशधा जपेत् ।
मकारं शृणु चार्वङ्गि स्वयं परमकुण्डली ॥
तरुणादित्यसङ्काशं चतुर्वर्गप्रदायकम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं तथा ॥

**इ**— इकारं परमानन्दं सुगन्धं कुंकुमच्छविः ।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये ॥

महाशक्तिमयं देवि गुरुब्रह्ममयं तथा ।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम् ।।
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गता भवेत् ।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत् ।।
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम् ।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम् ।।
चतुर्भुजां च वरदां हरिचन्दनभूषिताम् ।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत् ।।

**सम्मोहन यन्त्र**

ह्रीं

**बीजाक्षर**—'स्मि'; जप-संख्या—१०००; जप-स्थान—विशुद्धिचक्र; होम—तिल, शर्करा और जपा कुसुम से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—५;

**भावार्थ**—हे भगवति ! आपके चन्द्रमुख के स्मित-ज्योत्स्ना समूह का पान कर अत्यधिक मिठास के कारण सुखेच्छु चकोरों की चञ्चु जड़ हो गयी है । इससे उन्हें अम्ल चन्द्रामृत काञ्जीवत् प्रति रात्रि को पीना पड़ता है ।

**विमर्श**--आपकी अनन्त सुखमयी दया सुधा का अमोघ प्रवाह नित्य बहने पर भी विश्व के जीव दुःखी रहते हैं । इसका कारण यही है कि वे प्रकृतिरूप महामाया के स्मित ज्योत्स्ना समूह में अत्यन्त सुख-प्राप्ति की कामना के कारण उसमें फँस जाते हैं तथा सुख-प्राप्ति-की लालसा के प्रतिक्रिया-रूप में उन्हें दुःख ही प्राप्त होता है । अतः इसकी औषधि है अम्ल स्वाद वाली तपस्या ।। ६३ ।।

**अविश्रान्तं पत्युर्गुणगणकथाऽऽम्रेडनजपा**
**जपापुष्पच्छाया तव जननि जिह्वा जयति सा ।**
**यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी**
**सरस्वत्या मूर्तिः परिणमति माणिक्यवपुषा ।। ६४ ।।**

**लक्ष्मीधरा—अविश्रान्तं** अनारतं, **पत्युः** सदाशिवस्य **गुणगणकथाम्रेडनजपा** गुणानां त्रिपुरविजयादीनां गणः समूहः, तस्य कथा वृत्तान्तः, तस्य आम्रेडनं द्विस्त्रिरुक्तिः तदेव जपो यस्यास्सा अनन्यमनस्केत्यर्थः । **जपापुष्पच्छाया** जपापुष्पं रक्तपुष्पीपुष्पं तस्य छायेव छाया कान्तिः यस्याः सा । **तव जननि!** हे मातः ! **जिह्वा** रसना, **जयति** स्फुरति । **सा** तच्छब्दो वर्तिष्यमाणां प्रसिद्धिं परामृशति । **यदग्रासीनायाः** यस्या जिह्वायाः अग्रे आसीनायाः निषण्णायाः **स्फटिकदृषदच्छच्छविमयी** स्फटिकदृषदः स्फटिकोपलस्येव अच्छा छविः कान्तिः तया प्रचुरा । प्राचुर्यार्थे मयट् । स्फटिकधवलेत्यर्थः । **सरस्वत्याः** भारत्याः **मूर्तिः** स्वरूपं, **परिणमति** विकारमापद्यते, रूपान्तरं प्राप्नोतीति यावत् । **माणिक्यवपुषा** पद्मरागवपुषा ।

**अत्रेत्थं पदयोजना**—हे जननि ! तव सा जिह्वा अविश्रान्तं पत्युः गुणगणकथाम्रेडन-जपा जपापुष्पच्छाया जयति, यदग्रासीनायाः सरस्वत्याः स्फटिकदृषदच्छच्छविमयी मूर्तिः

माणिक्यवपुषा परिणमति । जिह्वायां रक्तत्वमात्रं न भवति । तटस्थानां रक्तीकरणे रक्तिम्नः शक्तिरपि । अत एव जयतीति प्रयुक्तम् ॥

तद्गुणालङ्कारः, 'तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाहृतिः' इति लक्षणात् । देव्याः वदनाम्बुजे सर्वदा सरस्वती स्वमूर्त्या वसतीत्यागमरहस्यम् ॥ ६४ ॥

## * सरला *

**अविश्रान्तमिति । अविश्रान्तं** अनारत अर्थात् निरन्तर **पत्युः** सदाशिव के **गुणगण कथाम्रेडनजपा** शिव के त्रिपुर विजयादि गुण समूहों का दो-तीन या उससे भी अधिक जप करने वाली अर्थात् अनन्यमनस्का, **जपापुष्पच्छाया** जपा पुष्प की कान्ति के समान कान्ति वाली **तव जननि !** हे मातः **जिह्वा** रसना **जयति** स्फुरित हो रही है, **सा** यहाँ तच्छब्द आगे कही जाने वाली प्रसिद्धि के लिये कहा गया है । **यदग्रासीनायाः** जिस जिह्वा के अग्रभाग पर बैठी हुई **स्फटिकदृषदच्छछविमयी** स्फटिकमणि के समान उत्तम कान्ति से परिपूर्ण **सरस्वत्याः** भारती की **मूर्त्तिः** स्वरूप, **परिणमति** विकार को प्राप्त करती है अर्थात् दूसरा रूप धारण करती है ।

**पदयोजना का अर्थ**--हे मातः ! आपकी वह जिह्वा जो निरन्तर पति सदाशिव के गुण समूहों के कथा की कई बार आवृत्ति करते हुये जप परायण रहती है तथा जिसकी कान्ति जपा पुष्प के समान रक्त वर्ण की हैं, वह जिह्वा स्फुरित होती रहे । किं बहुना, जिसके अग्र भाग में विराजमान सरस्वती की स्फटिकमणि की अत्यन्त स्वच्छ शोभापूर्ण मूर्त्ति माणिक्य के रूप में बदल जाती है । जिह्वा में केवल लालिमा ही नहीं है, किन्तु आस-पास में रहने वाली वस्तुओं को रक्तवर्ण में परिणत करने की शक्ति भी है । इसलिये पद्य में 'जयति' का प्रयोग किया गया है ।

यहाँ तद्गुण अलङ्कार है । अपने गुण का त्याग कर जो अन्यों में रहने वाले उत्कृष्ट गुणों को ग्रहण करे, वहाँ तद्गुण अलङ्कार होता है । देवी के मुख कमल में सर्वदा सरस्वती का निवास रहता है । यहाँ यह आगमगत रहस्य है ॥ ६४ ॥

**ध्यान**—'अ' ।

**श्लोकस्थ वर्णबीज 'अ' का ध्यान** इस प्रकार है—

अ— केतकीपुष्पगर्भाभां द्विभुजां हंसलोचनाम् ।
शुक्लपट्टाम्बरधरां पद्ममालाविभूषिताम् ॥
चतुर्वर्गप्रदां नित्यं नित्यानन्दमयीं पराम् ।
वराभयकरां देवीं नागपाशसमन्विताम् ॥
श्रृणु तत्त्वमकारस्य अतिगोप्यं वरानने ।
शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा ॥
पञ्चदेवमयं वर्णं शक्तिद्वयसमन्वितम् ।
निर्गुणं सगुणोपेतं स्वयं कैवल्यमूर्तिमान् ।
बिन्दुद्वयमयं वर्णं स्वयं प्रकृतिरूपिणी ॥

**बीजाक्षर**—'अ'; जप-संख्या--१०००; जप-स्थान—विशुद्धिचक्र; होम—तिल,

शर्करा और जपा कुसुम से १०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोकपाठ-संख्या—१०; श्लोकपाठ-आहुति—५ ।

वाक्सिद्धि यन्त्र

**भावार्थ**—हे परमाम्बा ! आप भगवती की उस जिह्वा की जय हो, जो जपापुष्प के रंग की है और जिससे आप श्री अपने स्वामी का दिन रात सतत कीर्तन और जप करती हो, तथा जिस जिह्वा के अग्रभाग में आसीन शुद्ध स्फटिकवर्ण वाली सरस्वती माणिक्य-सदृश रक्तवर्ण हो जाती हैं जैसे स्फटिक के नीचे लाल वर्ण होने से स्फटिक भी लाल रंग का प्रतीत होता है ॥ ६४ ॥

**रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभि-**
**र्निवृत्तैश्चण्डांशत्रिपुरहरनिर्माल्यविमुखैः ।**
**विशाखेन्द्रोपेन्द्रैः शशिविशदकर्पूरशकला:**
**विलीयन्ते मातस्तव वदनताम्बूलकबला: ॥ ६५ ॥**

**लक्ष्मीधरा—रणे** युद्धे, **जित्वा** पराजितान् कृत्वा, **दैत्यान् अपहृतशिरस्त्रैः कवचिभिः** वर्मयुक्तैः **निवृत्तैः** युद्धान्निवृत्तैः, **चण्डांशत्रिपुरनिर्माल्यविमुखैः** चण्डांशः चण्डभागः चण्डो नाम प्रमथः तस्य भागः स एव त्रिपुरहरस्य निर्माल्यं स्वीकृतावशिष्टं गन्धताम्बूलादि तत्र विमुखैः । 'हरनिर्माल्यं परित्याज्यम्' इत्यादिस्मृतयः । चण्डांशरूप-हरनिर्माल्य निषेधपरा इत्यवगन्तव्यमिति बोधयन्ति । **विशाखेन्द्रोपेन्द्रैः** विशाखः सेनानीः, युद्धेषु तस्यैव प्रामुख्यमित्यग्रे गणना, इन्द्रो महेन्द्रः उपेन्द्रः विष्णुः तैः **शशिविशदकर्पूर-शकलाः** चन्द्रवद्विशदाः कर्पूरशकलाः घनसारखण्डाः येषां ते । **विलीयन्ते** विलयनं क्रियन्ते । **मातः** ! हे जननि ! **तव वदनताम्बूलकबलाः** वदननिर्गतास्ताम्बूलकबलाः ॥

**अत्रेत्थं पदयोजना**—हे मातः ! रणे दैत्यान् जित्वा अपहृतशिरस्त्रैः कवचिभिः निवृत्तैः चण्डांशत्रिपुरहरनिर्माल्यविमुखैः विशाखेन्द्रोपेन्द्रैः शशिविशदकर्पूरशकलाः तव वदनताम्बूल-कबलाः विलीयन्ते ॥

**अयमर्थः**—विशाखेन्द्रोपेन्द्राः दैत्यान् संहृत्य भगवत्याः कुमारं पुरस्कृत्य पादवन्द-नार्थमागत्य शिरस्त्राण्यपहार्य पादोपसङ्ग्रहणमकुर्वन् । तदनन्तरं प्रसन्ना भगवती ईषत्खादितान् ताम्बूलकबलान् वितितार । तद्गतकर्पूरशकलविलयनपर्यन्तं खादितवन्तः इत्युक्त्या एतादृशो-ऽनुग्रहः भगवत्याः कुमारस्वामिन्येव । इन्द्रादिष्वपि क्वाचित्क इत्यभिप्रायः ॥ ६५ ॥

## * सरला *

**रणे जित्वेति । रणे** युद्ध में, **जित्वा** पराजित कर **दैत्यान् अपहृतशिरस्त्रैः कवचिभिः** शिर पर रहने वाली पगड़ी आदि को उतार कर प्रणाम करने वाले (स्वामी कार्य को सम्पादन कर लेने के बाद सेवक गण राजा के सम्मुख जाकर पगड़ी आदि शिरस्त्रों को उतार कर प्रणाम करते थे ऐसी परिपाटी थी उसी परिपाटी का यहाँ वर्णन करते हैं) **कवचिभिः** कवचधारी **निवृत्तैः** युद्ध से निवृत्त हुये **चण्डांशत्रिपुरनिर्माल्य विमुखैः** त्रिपुरहर के निर्माल्य स्वीकृत से अवशिष्ट गन्ध ताम्बूलादि से विमुख रहने वाले । 'हरनिर्माल्यं

परित्याज्यं' इत्यादि स्मृतियों द्वारा चण्डांशरूप हरनिर्माल्य का निषेध परक वचन है । यहाँ इसे भी समझ लेना चाहिए **विशाखेन्द्रोपेन्द्रैः** विशाख अर्थात् सेनापति कार्त्तिकेय युद्ध में आगे सेनापति के रूप में रहने के कारण पहले उनका नाम कहा गया है । इन्द्र महेन्द्र उपेन्द्र विष्णु उनके द्वारा **शशिविशदकर्पूरशकलाः** चन्द्रमा के समान स्वच्छ घनसार खण्ड वाले **विलीयन्ते** विलय कर देते हैं **तव वदनताम्बूलकवलाः** आपके मुख से निःसृत ताम्बूल कवल का भक्षण करते हैं ।

**पदयोजना का अर्थ**—हे मातः ! युद्ध में दैत्यों को पराजित कर अपने-अपने शिरस्त्रों (पगड़ी आदि) को उतार कर कवच पहने हुये, चण्डांश भाग रूप शिव निर्माल्य को त्याग कर, प्रणाम के लिये आये हुये, कार्त्तिकेय इन्द्र एवं उपेन्द्रादि देवगण चन्द्रमा के समान स्वच्छ कर्पूर खण्डों से युक्त आपके मुख कमल से निर्गत ग्रासों को खाते हैं ।

इसका अर्थ इस प्रकार समझना चाहिए—स्वामी कार्त्तिकेय, इन्द्र और विष्णु जब दैत्यों को मार कर कार्त्तिकेय को आगे कर भगवती की पाद वन्दना के लिये अपने-अपने शिरस्त्रों को उतार कर प्रणाम करने लगे । तदनन्तर प्रसन्न हुई भगवती ने ईषत् खाए हुए ताम्बूल ग्रास उन्हें प्रदान किये । उन्होंने उस ताम्बूल ग्रास को तब तक खाया, जब तक उसमें रहने वाला कर्पूर खण्ड गलित नहीं हुआ । इससे यह सिद्ध किया गया है कि इस प्रकार का भगवती का अनुग्रह स्वामी कार्त्तिकेय पर ही होता है, इन्द्रादि के ऊपर तो कदाचित् कभी-कभी ही होता है ॥ ६५ ॥

**ध्यान—'र' । श्लोकस्थ वर्णबीज 'र' का ध्यन—**

ललज्जिह्वां महारौद्रीं रक्तास्यां रक्तलोचनाम् ।
रक्तमाल्याम्बरधरां रक्तालङ्कारभूषिताम् ॥
रक्तवर्णामिष्टभुजां रक्तपुष्पोपशोभिताम् ।
महामोक्षप्रदां नित्यां अष्टसिद्धिप्रदायिकाम् ॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ।
रेफं च चञ्चलापाङ्गि कुण्डलीद्वयसंयुतम् ॥
रक्तविद्युल्लताकारं पञ्चदेवात्मकं सदा ।
त्रिशक्तिसहितं देवि आत्मादि तत्त्वसंयुतम् ॥
सर्वतेजोमयं वर्णं सततं मनसि चिन्तयेत् ।

**सर्वजनविजयकर यन्त्र**

**बीजाक्षर**—'र'; जपादि विधान पूर्ववत् ।

**पूजनयन्त्र**—षट्त्रिकोण, उसके मध्य में 'क्लीं' और सभी कोणों में 'श्रीं' 'ह्रीं' लिखे ।

**भावार्थ**—हे अद्रिजे ! युद्ध में दैत्यों को जीत कर कवच पहने हुये इन्द्र, विशाख (सेनापति षडानन) और उपेन्द्र आपके श्रीमुख से चबाकर थूके हुये शुभ्र कर्पूर-युक्त पान-सुपारी का प्रसाद अत्यन्त उत्सुकता से शिर-स्त्राण उतार कर ग्रहण करते हैं तथा श्रीत्रिपुरहर भगवान् शिव के निर्माल्य को चण्डांश मानकर छोड़ देते हैं ।

**विमर्श**—विशाख-स्कन्द, उपेन्द्र-विष्णु, चण्ड-शिवगण ! चण्ड की शिवगण-भाव से उपासना शिव-मन्दिरों में होती है । ये शिवनिर्माल्ययाधिकारी शिवगण हैं । सेनापति श्री स्कन्द कार्त्तिकेय और उनके मुख्य सैनिकों के युद्धभूमि से लौटने पर श्री भगवती जगज्जननी के मुख-कमल से थूके हुये पान प्रसाद ग्रहण करने का इस श्लोक में वर्णन है । इस प्रकार यहाँ प्रसाद-माहात्म्य वर्णित है ।। ६५ ।।

**विपञ्च्या गायन्ती विविधमपदानं पशुपतेः**
**त्वयाऽऽरब्धे वक्तुं चलितशिरसा साधुवचने ।**
**तदीयैर्माधुर्यैरपलपिततन्त्रीकलरवां**
**निजां वीणां वाणी निचुलयति चोलेन निभृतम् ।। ६६ ।।**

**लक्ष्मीधरा—विपञ्च्या** वीणया, **गायन्ती** गानं कुर्वन्ती, **विविधं** अनेकप्रकारं त्रिपुर-विजयदक्षयागध्वंसहालाहलधारणजलन्धरवधगजासुरवधादिकं, **अपदानं** वृत्तं कर्म, **पशुपतेः** ईश्वरस्य, **त्वया** भवत्या, **आरब्धे** उपक्रान्ते सति, **वक्तुं** निगदितुं, **चलितशिरसा** अन्तः सन्तोषवशात् स्वयं शिरः कम्पवत्या, **साधुवचने** मधुरवचने, **तदीयैः** तस्य वचनस्य सम्बन्धिभिः, **माधुर्यैः** माधुर्यगुणैः **अपलपिततन्त्रीकलरवां** अपलपिता अपहसिताः स्वकीय-तन्त्रीकलरवाः यस्याः सा तां, **निजां** स्वकीयां, **वीणां** विपञ्चीं, **वाणी** भारती, **निचुलयति** निचुलवतीं करोति । निचुलः कूर्पासः । **चोलेन** चोलः कूर्पासविशेषः वीणाकूर्पासः । चोलेन निचुलवतीं करोतीति सामान्यविशेषभावे, न पौनरुक्त्यम् । केचित्तु भोजमतावलम्बिन आहुः—चुलिधातुः तिरोधानवाचक इति । नितरां चुलयति आच्छादयतीत्यर्थः । निभृतं गूढं यथा भवति तथा ।।

**अत्रेत्थं पदयोजना**—हे भगवति! पशुपतेः विविधं अपदानं विपञ्च्या गायन्ती त्वया वक्तुं चलितशिरसा साधुवचने आरब्धे सति तदीयैः माधुर्यैः अपलपिततन्त्रीकलरवां निजां वीणां वाणी चोलेन निचुलयति ।

अत्रातिशयोक्तिरलङ्कारः, वीणायाः निचोलनासम्बन्धेऽपि सम्बन्धकथनात्, यः पराजितो वैणिकः स्ववीणां चोलेन निचुलयति तेन सहाभेदाध्यवसायप्रतीतेः ।। ६६ ।।

### * सरला *

**विपञ्च्येति । विपञ्च्या** वीणा से **गायन्ती** गान करती हुई **विविधं** अनेक प्रकार के त्रिपुर विजय, दक्षयाग विध्वंस, हालाहल पान, जलन्धरवध एवं गजासुरवधादि चरित्रों का **अपदानं** किये गये कर्मों को **पशुपतेः** सदाशिव के, **त्वया** आप द्वारा **आरब्धे** उपक्रान्त करते ही, **वक्तुं** कहने के लिये **चलितशिरसा** अन्तःकरण से सन्तुष्ट होकर स्वयं शिर हिलाती हुई, **साधुवचने** मधुरवचन में, **तदीयैः** उसके वचन से सम्बन्धित होने से **माधुर्यैः** माधुर्य गुणों से **अपलपिततन्त्रीकलरवां** अपने तन्त्री से निकलने वाले मनोहर शब्दों का उपहास होने के कारण वह सरस्वती तां **निजां** स्वकीय **वीणां** विपञ्ची की **वाणी** भारती सरस्वती **निचुलयति** निचुल के भीतर कर देती हैं । निचुल कूर्पास को कहते हैं । **चोलेन** चोल कूर्पास विशेष चोलेन, निचुलवती' करोति' यहाँ सामान्य विशेष भाव है । इसलिये पुनरुक्ति नहीं है । किन्तु कुछ भोजमतावलम्बी कहते हैं—चुलिधातु तिरोधान वाचक है । 'नितरां चुलयति' अर्थात् अच्छे प्रकार से आच्छादित करती है **निभृतं** जिस प्रकार वह छिप जाय दिखाई न पड़े ।

**अर्थ**—हे भगवति ! पशुपति भगवान् सदाशिव के द्वारा किये गये त्रिपुर विजयादि कर्मों को विपञ्ची वीणा द्वारा गान करने पर सरस्वती को श्लाघा के लिये शिर हिलाकर आपके द्वारा साधुवाद वचन के आरम्भ करते ही उस वचन के माधुर्य से वीणा का कलरव फीका पड़ जाता है । इसलिये वाणी अपनी वीणा को कपड़े के भीतर अर्थात् निचोल में लपेट कर उसे छिपा लेती है ।

वीणा का निचोल से सम्बन्ध न होने पर भी सम्बन्ध का कथन है, इसलिये यहाँ अतिशयोक्ति अलङ्कार है । वस्तुतः जो वीणावादक पराजित हो जाता है वह अपनी वीणा को निचोल (कपड़े का खोल) में रख लेता है । यहाँ उससे अभेद के अध्यवसाय की प्रतीति भी होती है ।। ६६ ।।

**ध्यान**—वि = व् + इ । **श्लोकस्थ वर्णबीज 'वि' का ध्यान**—

**व**— कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम् ।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम् ।।
साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम् ।
एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत् ।।
वकारं चञ्चलापाङ्गि कुण्डलीमोक्षमव्ययम् ।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ।
त्रिबिन्दुसहितं मन्त्रमात्मादितत्त्वसंयुतम् ।।
पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम् ।
चतुर्वर्गप्रदं शान्तं सर्वसिद्धिप्रदायकम् ।।

**इ**— इकारं परमानन्दं सुगन्धं कुंकुमच्छविः ।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये ।।
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा ।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम् ।।
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गता भवेत् ।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत् ।।
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम् ।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम् ।।
चतुर्भुजां च वरदां हरिचन्दनभूषिताम् ।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत् ।।

**संगीतसिद्धि यन्त्र**

**बीजाक्षर**—'वि' जपादि पूर्ववत्; पूजन यन्त्र—भूपुर लिङ्गतोभद्र में 'श्रीं श्रीं श्रीं' लिखे ।

**भावार्थ**—भगवती श्री सरस्वती श्रीभगवान् शिव के विचित्र लीला-चरित्र का वीणा में गान कर अपनी वीणा को उसके झोले में शीघ्र ही बन्द कर देती हैं क्योंकि उनके (श्री सरस्वती के) गान-माधुर्य की प्रशंसा में आप जो

अत्यन्त मधुर स्वर से कुछ धीरे-धीरे सिर हिलाते हुये बोलती हैं, उस स्वर के माधुर्य में सरस्वती जी की विपञ्ची वीणा का तारस्वर फीका पड़ जाता है ॥ ६६ ॥

**कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया**
**गिरीशेनोदस्तं मुहुरधरपानाकुलतया ।**
**करग्राह्यं शम्भोर्मुखमुकुरवृन्तं गिरिसुते**
**कथंकारं ब्रूमस्तव चुबुकमौपम्यरहितम् ॥ ६७ ॥**

**लक्ष्मीधरा—कराग्रेण** अग्रकरेण, **स्पृष्टं** संमृष्टं, **तुहिनगिरिणा** हिमाद्रिणा जनकेन, **वत्सलतया** वात्सल्येन पित्रादीनां पुत्रादिषु प्रीतिः वात्सल्यशब्देनोच्यते । यथोक्तं सर्वज्ञ-**सोमेश्वरेण**—'पुत्रादौ वात्सयं, पत्न्यादौ प्रेम, शिष्यादावनुग्रहः, अग्रजादौ भक्तिः । अत्र आदिशब्देन गौणपुत्रगौणपत्नीगौणशिष्यगौणाग्रजाः गृह्यन्ते' इति । गौणपुत्रः पुत्रत्वेन कल्पितसम्बन्धः न तु क्रीतादिः, तस्य पुत्रत्वात् । गौणपत्नी भुजिष्या । गौणशिष्यः शिष्यत्वेन कल्पितसम्बन्ध एव न तु स्वीकृतमन्त्रग्रहणमात्रः । गौणाग्रजः कल्पितसम्बन्धः न तु क्षेत्रजादिः । **गिरीशेन** शम्भुना, **उदस्तं** उन्नमितं, **मुहुः** अत्यर्थं, **अधरपानाकुलतया** अधर-पानव्यग्रतया अतिप्रेम्णेत्यर्थः । **करग्राह्यं** करेण गृहीतुं योग्यं मुखावलोकनचुम्बनव्यग्रतया, **शम्भोः मुखमुकुरवृन्तं** मुखमेव मुकुरो दर्पणः तस्य वृन्तं तदाधारदण्डः तं **गिरिसुते!** हिमाद्रितनये ! **कथंकारं** कथंकृत्वा **ब्रूमः** वर्णयामः । 'विभाषा कथमि लिङ् च' इति लिङर्थे सम्प्रधारणायां लट् । **तव** भवत्याः, **चुबुकं** अधराधःकर्णिकां, **औपम्यरहितं** उपमारहितम् । उपमाराहित्यं तु कमलकर्णिकादर्पणवृन्तोदयाद्रिशिखरशिलादीनां, शम्भुहिमगिरिकरोपलालना-जनितसौभाग्यातिशयाभावेन भगवतीचुबुकस्य तुलना नास्तीति ॥

**अत्रेत्थं पदयोजना**—हे हिमगिरिसुते । तुहिनगिरिणा वत्सलतया कराग्रेण स्पृष्टं गिरीशेन अधरपानाकुलतया मुहुरुदस्तं शम्भोः करग्राह्यं औपम्यरहितं तव मुखमुकुरवृन्तं चुबुकं कथंकारं ब्रूम इति ॥

अत्रानन्वयालङ्कारो ध्वन्यते, सर्वोपमानिषेधेन स्वस्य स्वयमेव सदृशमित्यनन्वया-लङ्कारप्रतीतेः ॥ ६७ ॥

## * सरला *

**कराग्रेणेति । कराग्रेण** हाथ के अग्रभाग से, **स्पृष्टं** संमृष्ट, **तुहिनगिरिणा** हिमालय पर्वत द्वारा, **वत्सलतया** वात्सल्य के कारण, पिता आदि की पुत्रादि पर जो प्रीति होती है वह 'वात्सल्य' शब्द से कही जाती है जैसा कि सर्वज्ञ सोमेश्वर ने कहा है—'पुत्रादि पर वात्सल्य, पत्न्यादि पर प्रेम, शिष्यादि पर अनुग्रह और अग्रजादि में भक्ति होती है । यहाँ आदि शब्द से गौण पुत्र, गौण पत्नी तथा गौण शिष्य एवं गौण अग्रज का ग्रहण है । पुत्रत्व से कल्पित सम्बन्ध गौणपुत्र, क्रीतादि नहीं । वह तो पुत्र ही है, गौण पत्नी दासी है, गौण शिष्य, अर्थात् शिष्यत्वेन जिसमें कल्पित हो वह । वस्तुतः जिसने मन्त्र ग्रहण किया हो वह तो 'शिष्य' है ही । गौणाग्रज अर्थात् कल्पित सम्बन्ध वाला, क्षेत्रजादि नहीं । **गिरीशेन** सदाशिव के द्वारा, **उदस्तं** ऊपर उठाया गया, **मुहुः** अत्यर्थ बारम्बार, **अधरपानाकुलतया** अधर पान की व्यग्रता से अर्थात् अत्यन्त प्रेम से **करग्राह्यं** हाथ से ग्रहण करने योग्य अर्थात् मुखावलोकन

एवं मुखचुम्बन के लिये व्यग्र, **शम्भोः मुखमुकुरवृन्तं** सदाशिव के मुख रूपी दर्पण का आधार दण्ड, उसको, **गिरिसुते** हिमाद्रितनये, **कथंकारं** किस प्रकार, **ब्रूमः** वर्णन करूँ। यहाँ 'विभाषा कथमि लिङ् च' (पा.सू. ३.३.१४३) 'निन्दा' अर्थ गम्यमान रहते 'कथम्' उपपद होने पर धातु से विकल्प से लिङ् तथा लट् होते हैं। इस सूत्र से लिङ्ग के सम्प्रधारण में लट् लकार हुआ है। **तव** उन आप भगवती का, **चुबुकं** अधर के अधोभाग वाली कर्णिका, **औपम्यरहितं** उपमा रहित है। उपमा राहित्य इसलिये है कि 'कमलकर्णिका' दर्पणवृन्त उदयाद्रि शिखर की शिलाएँ हैं। इन्हें सदाशिव हिमालय के करों द्वारा उपलालनाजनित सौभाग्यातिशय की प्राप्ति नहीं है। इसलिये भगवती के चिबुक की तुलना इन्हें प्राप्त नहीं है।

**पदयोजना का अर्थ**—हे गिरिसुते ! जिसे हिमालय ने वात्सल्य भाव से अपने हाथ की अंगुलियों से बारम्बार स्पर्श किया है, सदाशिव ने जिसे अधरपान की व्यग्रता के कारण बारम्बार ऊँचे उठाया है और जो सदाशिव के हाथों से ग्रहण योग्य दर्पण का आधारभूत दण्ड (दस्ता) है आपके उस चिबुक की महिमा भला मैं किस प्रकार वर्णन कर सकता हूँ।

यहाँ सब प्रकार की उपमाओं का निषेध कर 'आपके चिबुक के समान आपका चिबुक ही है अन्य नहीं' इस ध्वनि से अनन्वयालङ्कार की प्रतीति होती है ॥ ६७ ॥

**ध्यान**—'क'। श्लोकस्थ **वर्णबीज 'क' का ध्यान** इस प्रकार है—

जपापावकसिन्दूरसदृशीं कामिनीं पराम्।
चतुर्भुजां त्रिनेत्रां च बाहुवल्लीविराजिताम् ॥
कदम्बकोरकाकारः स्तनयुग्मविराजिताम्।
रत्नकङ्कणकेयूरहारनूपुरभूषिताम् ॥
एवं ककारं ध्यात्वा तु तन्मन्त्रं दशधा जपेत्।
शङ्खकुन्दसमा कीर्तिर्मात्रा साक्षात्सरस्वती ॥
कुण्डली चांकुशाकारा कोटिविद्युल्लताऽऽकृतिः।
कोटिचन्द्रप्रतीकाशो मध्ये शून्यः सदाशिवः ॥
शून्यगर्भस्थिता काली कैवल्यपददायिनी।
अर्थश्च जायते देवि तथा धर्मश्च नान्यथा ॥
ककारः सर्ववर्णानां मूलप्रकृतिरेव च।
कामिनी या महेशानि स्वयं प्रकृतिसुन्दरी ॥
माता सा सर्वदेवानां कैवल्यपददायिनी।
ऊर्द्ध्वकोणे स्थिता वामा ब्रह्मशक्तिरितीरिता ॥
वामकोणे स्थिता ज्येष्ठा विष्णुशक्तिरितीरिता।
दक्षकोणे स्थिता शक्तिः श्रीरौद्री संहाररूपिणी ॥
ज्ञानात्मा सा तु चार्वङ्गी चतुःषष्ट्यात्मकं कुलम्।
इच्छाशक्तिभवेद्ब्रह्मा(दुर्गा) विष्णुश्च ज्ञानशक्तिमान् ॥
क्रियाशक्तिर्भवेद्रुद्रः सर्वप्रकृतिमूर्तिमान्।
आत्मविद्याशिवैस्तत्त्वैः पूर्णा मात्रा प्रतिष्ठिता ॥
आसनं त्रिपुरा देव्याः ककारः पञ्चदैवतः।

ईश्वरो यस्तु देवेशि त्रिकोणे तत्त्वसंस्थितः ॥
त्रिकोणमेतत्कथितं योनिमण्डलमुत्तमम् ॥
कैवल्यं प्रपदे यस्याः कामिनी सा प्रकीर्तिता ।
एषा सा कादिविद्या चतुर्वर्गफलप्रदा ॥

**बीजाक्षर**—'क'; जप-संख्या—१०००; जप-स्थान—विशुद्धिचक्रः होम—तिल, शर्करा और जपाकुसुम से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—५ ।

**सकलस्त्रीवशीकरण यन्त्र**

क्लीं
क्लीं
क्लीं

**भावार्थ**—हे हिमसुते ! आपके पिताश्री ने वात्सल्य भाव से आपके चिबुक का अपने कराग्र से स्पर्श किया । फिर अधर-पानातुर श्री भगवान् शिव ने बारम्बार चुम्बन के लिए उस चिबुक को उठाया । आप श्री के मुखमुकुर (दर्पण) का वृन्त (नीचे की रेखारूप चिबुक) श्री भगवान् शिव के ही हस्त-विलास की वस्तु है । उस उपमारहित दिव्य चिबुक का वर्णन हम किस प्रकार करें? ॥ ६७ ॥

**भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती**
**तव ग्रीवा धत्ते मुखकमलनालश्रियमियम् ।**
**स्वतः श्वेता कालागुरुबहुलजम्बालमलिना**
**मृणालीलालित्यं वहति यदधो हारलतिका ॥ ६८ ॥**

**लक्ष्मीधरा**—**भुजाश्लेषात्** भुजाभ्यामालिङ्गनात्, **नित्यं** सततं **पुरदमयितुः** पुरान्तकस्य, **कण्टकवती** सरोमाञ्चा, **तव ग्रीवा** कण्ठनालः, **धत्ते** दधति, **मुखकमलनालश्रियं** मुखमेव कमलं तस्य नालश्रियं दण्डसौभाग्यं, **इयं** ग्रीवा, **स्वतः श्वेता** स्वभावतः स्वच्छा, **कालागुरुबहुलजम्बालमलिना** कालो नीलवर्णः अगुरुः लघुकाष्ठं कृष्णागुरुरित्यर्थः, तस्य बहुलः समृद्धः जम्बालः पङ्कः तेन मलिना मलीमसा, **मृणालीलालित्यं** विसलतासौभाग्यं, **वहति** प्राप्नोति । **यत्** यस्मात्कारणात्, **अधः** अधः प्रदेशे, **हारलतिका** मुक्तावलिः ॥

**अत्रेत्थं पदयोजना**—हे भगवति! तवेयं ग्रीवा पुरदमयितुः भुजाश्लेषात् नित्यं कण्टकवती मुखकमलनालश्रियं धत्ते, यत् अधः स्वतः श्वेता कालागुरुबहुलजम्बालमलिना हारलतिका मृणालीलालित्यं वहति ॥

पूर्वार्धे निदर्शनालङ्कारः, मुखकमलनालश्रियमित्यत्र श्रीसदृशी श्रीरिति प्रतिबिम्बाक्षेपात् । रूपकमप्यलङ्कारः, मुखकमलमित्यत्र मुखे कमलत्वरूपणात् । अनयोरङ्गाङ्गिभावेन सङ्करः । उत्तरार्धेऽपि निदर्शनालङ्कारः, मृणालीलालित्यमित्यत्र लालित्यसदृश-लालित्यमिति प्रतिबिम्बाक्षेपात् । उभयोरङ्गाङ्गिभावेन सङ्करः ॥ ६८ ॥

*** सरला ***

**भुजाश्लेषादिति** । **भुजाश्लेषात्** दोनों भुजाओं के द्वारा आलिङ्गन के कारण **नित्यं**

सर्वदा **कण्टकवती** रोमाञ्चयुक्तं **तव ग्रीवा** कण्ठनाल, **धत्ते** धारण करती है । **मुख कमल-नालश्रियं** मुखरूपी कमल के दण्ड का सौभाग्य (सौन्दर्य) **इयं** यह ग्रीवा—**स्वतः श्वेता** स्वभावतः स्वच्छ **कालागुरुबहुलजम्बालमलिना** कालागुरु के गाढ़े पङ्क से मलिन, **मृणाली-लालित्यं** विसलता के सौभाग्य (सौन्दर्य) को **वहति** प्राप्त करती है । **यत्** जिस कारण से **अधः** अधः प्रदेश में **हारलतिका** मुक्तावली माला के सौन्दर्य को प्राप्त कर रही है ।

**अर्थ**—हे भगवति ! आपकी यह ग्रीवा जो सदाशिव के भुजा के आलिङ्गन से सर्वदा रोमाञ्च युक्त रहती है वह मुख कमल के नाल की शोभा धारण करती है जिसके नीचे स्वतः श्वेत वर्ण वाली कालागुरु के गाढ़े पङ्क में सनी हुई होने के कारण मलिन मोतियों की माला मृणाली (विसलता) के सौन्दर्य को धारण करती है ।

यहाँ 'मुखकमलनालश्रियं' में 'श्रीसदृशी श्री' इस प्रतिबिम्ब के आक्षेप से निदर्शनालङ्कार है । 'मुखकमलं' यहाँ मुख में कमल का आरोप होने से रूपक भी है । उत्तरार्ध में भी 'मृणालीलालित्यं' में लालित्य के सदृश लालित्य है । इस प्रतिबिम्ब के आक्षेप के कारण निदर्शना है और दोनों में अङ्गाङ्गिभाव होने से सङ्कर है ॥ ६८ ॥

**ध्यान**—भु = भ् + उ । **श्लोकस्थ वर्णबीज 'भु' का ध्यान**—

**भ**— तडित्प्रभां महादेवीं नागकङ्कणशोभिताम् ।
चतुर्वर्गप्रदां देवीं साधकाभीष्टसिद्धिदाम् ॥
एवं ध्यात्वा भकारं तु तन्मन्त्रं दशधा जपेत् ।
भकारं श्रृणु चार्वाङ्गि स्वयं परमकुण्डली ॥
महामोक्षप्रदं वर्णं तरुणादित्यसमप्रभम् ।
पञ्चप्राणमयं वर्णं पञ्चदेवमयं प्रिये ॥

**उ**— पीतवर्णां त्रिनयनां पीताम्बरधरां पराम् ॥
द्विभुजां जटिलां भीमां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
उकारं परमेशानि अधःकुण्डलिनी स्वयम् ।
पीतचम्पकसङ्काशं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम् ॥

**बीजाक्षर**—'भु'; जप-संख्या—१०००; जप-स्थान—विशुद्धिचक्र; होम—तिल, शर्करा और जपाकुसुम से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—५ ।

**लक्ष्मीप्राप्ति यन्त्र**

ह्रीं

**भावार्थ**—हे अद्रिजे ! भगवान् श्री त्रिपुरारि के नित्य आलिङ्गन से रोमाञ्चयुक्त आप की ग्रीवा आपके कमलवत् श्रीमुख को नालवत् शोभा दे रही है । वस्तुतः ग्रीवा स्वयं श्वेत है, परन्तु कालागुरु के लेप से ग्रीवा में श्यामलता झलकती है । अतः उसमें कमल-नाल का लालित्य सा दिख रहा है ॥ ६८ ॥

**गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे**
**विवाहव्यानद्धप्रगुणगुणसंख्याप्रतिभुवः ।**
**विराजन्ते नानाविधमधुररागाकरभुवां**
**त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते ॥ ६९ ॥**

**लक्ष्मीधरा—गले** कण्ठप्रदेशे, **रेखाः** भाग्यरेखाः वलीरूपाः **तिस्रः**—

ललाटे च गले चैव मध्ये चापि वलित्रयम् ।
स्त्रीपुंसयोरिदं ज्ञेयं महासौभाग्यसूचकम् ॥

इति सामुद्रिकम् । **गतिगमकगीतैकनिपुणे !** गतिः सङ्गीतगतिः सङ्गीतस्य द्वे गती मार्गो देशी चेति । गमकः स्वरस्य कम्पः—

स्वरस्य गमकः कम्पः स च पञ्चविधस्स्मृतः । इति भरते ।
ते च पञ्चप्रकारास्तत्रैव ज्ञातव्याः । गीतं धातुमात्वात्मकं द्विविधम् ।
वाङ्मातुरुच्यते गेयं धातुरित्यभिधीयते । इति ॥

तत्र एका मुख्या चासौ निपुणा च तस्याः सम्बुद्धिः । **विवाहव्यानद्धप्रगुणगुण-सङ्ख्याप्रतिभुवः** विवाहे उद्वाहसमये व्यानद्धाः विशेषेण मङ्गलसूत्रबन्धनानन्तरं तत्समीपे आ समन्तात् कण्ठं कृत्स्नमावृत्य नद्धाः बद्धाः प्रगुणगुणाः बहुतन्तुनिर्मितसूत्राणि । तानि त्रीण्येव, यथोक्तं गृह्यकारैः—

**माङ्गल्यतन्तुनानेन बध्वा मङ्गलसूत्रकम् ।**
**वामहस्ते सरं बध्वा कण्ठे च त्रिसरं तथा** ॥ इति ॥

इदं चानुष्ठानं देशतो व्यवस्थापितम् । अत एव क्वचिद्देशे मङ्गलसूत्रबन्धनं क्वचिद्देशे सरत्रयबन्धनं च क्वचिदुभयमपि नास्तीति । अस्य मतं सर्वत्रास्तीति । यद्वा—ग्रन्थकृतो देशे एतदुभयानुष्ठानं विद्यत एवेति ज्ञेयम् । प्रगुणगुणानां सङ्ख्या त्रित्वं तस्याः प्रतिभुवः । तथा प्रतिभूः उत्तमर्णस्य अधमर्णं ज्ञापयति एवं सङ्ख्यां ज्ञापयतीति प्रतिभुव इत्युक्तम् । सङ्ख्याज्ञापकाः अस्मदाश्रयकण्ठे शम्भुना पूर्वं भगवतीविवाहसमये सरत्रयस्मिन् स्थले बद्धमिति द्रष्टॄणां ज्ञापयति वलित्रयमिति भावः । **विराजन्ते** अतितरां प्रकाशन्ते । **नाना-विधमधुररागाकरभुवां** नानाविधाः अनेकप्रकाराः मधुराः मनोरमाः रागाः तेषामाकरभुवः खनिस्थानानि आश्रयभूताः तेषाम् ॥

**अयमर्थः**—गीतयः पञ्च, तदुत्थाः ग्रामरागाः त्रिंशत्, उपरागाः अष्टौ, रागास्तु विंशतिः, जनकरागाः पञ्चदश, भाषारागाः षण्णवतिः, विभाषारागाः विंशतिः, आन्तरा भाषाश्च त्रयः इत्यादिकं रागाध्यायप्रतिपाद्यमत्रावगन्तव्यम् । ते च रागाः प्रसिद्धाः, मध्यमावतीमालवी-श्रीभैरवीवङ्गालीबसन्ताधन्यासीदेश्यादिकं रागाङ्गम् । वेलावतीशुद्धवरालीपुन्नागवरालीनाट्या-दिकं भाषाङ्गम् । रागक्रियादिकं क्रियाङ्गम् । प्रवीधी धूर्जरीवरालीमलहरीप्रमुखं उपाङ्गं च रागशब्देन सङ्गृहीतं इत्युक्तं नानाविधमधुररागाकरभुव इति । **त्रयाणां ग्रामाणां** ग्रामशब्दः समूहवाचकः सर्वे स्वराः त्रेधा संहतीः षड्जग्रामो मध्यमग्रामो गान्धारग्रामः इति त्रेधा स्वर-संहतिः । तत्र भूलोके ग्रामद्वयस्यैव प्रसरः । सप्तस्वराणामारोहावरोहक्रमेण मूर्च्छनाश्रयत्वम् । तच्च मन्द्रमध्यतारात्मना त्रेधा भवति । गान्धारग्रामस्य शरस्थानत्वान्मन्द्रादिक्रमेणोपक्रमा-

सम्भवात् गान्धारग्रामो देवलोके प्रसृतः । यथोक्तं (संगीतरत्नाकरे) **शार्ङ्गदेवेन—**

ग्रामः स्वरसमूहस्स्यान्मूर्छनादेस्समाश्रयः ।
तौ द्वौ धरातले स्यातां षड्जग्रामस्तथादिमः ॥
द्वितीयो मध्यमग्रामः तयोर्लक्षणमुच्यते ।
क्रमात्स्वराणां सप्तानामरोहश्चावरोहणम् ॥
मूर्छनेत्युच्यते ग्रामद्वये ताः सप्त सप्त च ॥ इति ॥

एताः मूर्छनाः शुद्धतानाः इत्युच्यन्ते । अतश्च भगवत्याः कण्ठवलित्रयवर्णनायां ग्रामत्रयकथनं देवलोकव्यवहाराद्युज्यत इत्यनुसन्धेयम् । तेषां ग्रामाणां **स्थितिनियमसीमानः** स्थितेः अवस्थानस्य नियमार्थं परस्परं ग्रामाणां सङ्करो मा भूदिति तेषामन्ते रचिताः सीमानः सेतव **इव ते** तव ॥

**अत्रेत्थं पदयोजना**—हे भगवति ! गतिगमकगीतैकनिपुणे ! ते गले तिस्रो रेखाः विवाहव्यानद्धप्रगुणगुणसङ्ख्याप्रतिभुवः नानाविधमधुररागाकरभुवां त्रयाणां ग्रामाणां स्थिति-नियमसीमान इव विराजन्ते ॥

पूर्वार्धे अनुमानालङ्कारः, रेखागतत्रित्वस्य मङ्गलसरत्रित्वानुमापकत्वात् । अनुमानस्य विच्छित्यात्मकत्वं लौकिकालङ्कारवैलक्षण्यादेव । तद्वैलक्षण्यं च पक्षधर्मतामात्रात् व्याप्त्य-भाव एव, उभयसद्भावे लौकिकमेव स्यादिति रहस्यम् । विच्छित्तिरलौकिकी शोभा । उत्तरार्धे उत्प्रेक्षालङ्कारः, भगवत्याः कण्ठमध्यवर्तिस्वरग्रामत्रितयहेतुचिह्नतया वलित्रयस्य सम्भावनात् ॥ ६९ ॥

## * सरला *

**गल** इति । **गले** कण्ठप्रदेश में, **रेखाः** भाग्यरेखा, वलीरूपाः **तिस्रः** तीन वलियाँ ।

यदि ललाट में, गले में और मध्य भाग में तीन रेखाएँ (वलिया) हों तो चाहे वह स्त्री हो या पुरुष हो उसके सौभाग्य के सूचक हैं ऐसा सामुद्रिक में कहा है ।

**गतिगमकगीतैकनिपुणे** गतिः अर्थात् संगीत की गति, संगीत की दो गतियाँ है— मार्ग गति और देशी गति । गमक अर्थात् स्वर का कम्प ।

स्वर का गमक अर्थात् कम्प पाँच प्रकार का होता है ऐसा भरत का मत है ।

वे पाँचों प्रकार वहीं से जानना चाहिए । गीत दो प्रकार का होता है—पहला धातु गीत, दूसरा मातु गीत । जो वाणी से कहा जाता है वह 'मातु गीत' होता है । तथा जो गेय है वह 'धातु गीत' कहा जाता है ।

उसमें एक मुख्य और निपुण । उसका सम्बोधन का रूप है । **विवाहव्यानद्धप्रगुण-गुणसङ्ख्याप्रतिभुवः** विवाह काल में मङ्गलसूत्र के बाँधने के बाद कण्ठ में चारों ओर से लपेटा गया अनेक तन्तुयुक्त सूत्र, जो प्रायः संख्या में तीन ही कहे गये हैं जैसा कि गृह्यसूत्र में कहा भी है—वधू को माङ्गल्य तन्तु से उसके बाएँ हाथ में मङ्गलसूत्र बाँधे और इसके बाद कण्ठ में तीन तन्तु वाले सूत्र का त्रिसर भी बाँधे ।

यह क्रिया देशानुसार व्यवस्थित रूप से विहित है, इस कारण किसी देश में मङ्गलसूत्र मात्र बाँधा जाता है और किसी देश में त्रिसर मात्र बाँधा जाता है । कहीं दोनों ही नहीं बाँधे

जाते, अथवा ग्रन्थकर्त्ता के देश में दोनों क्रियाएँ होती हैं ऐसा समझकर उन्होंने लिखा है। प्रकृष्टगुण वाले सूत्रों की संख्या तीन ही हैं, उन सूत्रों के, प्रतिभुवः अर्थात् प्रतिभू वह होता है जो उत्तमर्ण को अधमर्ण रूप में ज्ञापित करता है। यहाँ संख्या ज्ञापन के कारण प्रतिभुवः यह बहुवचनान्त प्रयोग है। संख्याज्ञापक सूत्र कहते हैं कि हमने जिस कण्ठ का आश्रय लिया है उस कण्ठ में भगवती के विवाह के समय सदाशिव ने तीन सूत्रों से युक्त 'त्रिसरा' इसी में बाँधा था। अतः देखने वालों को भी गले में पड़ी हुई तीन रेखाएँ उन्हीं की याद कराने से प्रतिभुवः अधमर्ण रूप में ज्ञापित है। **विराजन्ते** अत्यन्त प्रकाशित हो रहे हैं, **नानाविध-मधुररागाकरभुवां** अनेक प्रकार के मनोहर रागों के खान (आश्रयभूत)।

यहाँ राग का अर्थ इस प्रकार है—गीत पाँच होते हैं। उनसे उत्पन्न होने वाले ग्राम राग तीस, उपराग आठ, राग बीस, जनक राग पन्द्रह, भाषा राग छानबे, विभाषाराग बीस, आन्तरा और भाषा तीन इत्यादि शार्ङ्गदेव के रागाध्याय में जो प्रतिपादन किये गये हैं, उन सबको यहाँ भी समझना चाहिए। वे सभी राग प्रसिद्ध हैं। उनमें मध्यमावती, मालवी, श्री भैरवी, वङ्गाली, वसन्ता, धन्यासीदेश्या आदि रागाङ्ग हैं। वेलावती, शुद्धवराली, पुन्नाग-वराली, नाट्यादि भाषाङ्ग हैं। रागक्रियादिक क्रियाङ्ग हैं। प्रबोधी, धूर्जरी, वराली, मलहरी प्रमुख उपाङ्ग हैं। यह सब वही राग शब्द से संगृहीत हैं। 'नानाविधमधुररागाकरभुवां' का अर्थ इतना ही है। **त्रयाणां ग्रामाणां** यहाँ ग्राम शब्द समूह का वाचक है। 'सभी स्वर तीन भागों में संहत हैं—षड्जग्राम, मध्यमग्राम, गान्धारग्राम—ये तीन प्रकार की स्वर-संहति हैं। उसमें भूलोक में दो ही 'ग्राम' का प्रचलन है। सातों स्वरों का आरोह और अवरोह का क्रम 'मूर्च्छना' है। वह मूर्च्छना, मन्द, मध्य और तारभेदों से तीन प्रकार की हैं। गान्धारग्राम शरस्थानीय होने के कारण और मन्द्रादि क्रम के उपक्रम से असम्भव होने के कारण वह देवलोक में ही रहता है। जैसा कि **शार्ङ्गदेव** ने कहा है—

**ग्राम** इति। स्वर समूह को 'ग्राम' कहते हैं जो मूर्च्छना का आश्रय होता है। धरातल में दो ही ग्राम का प्रचलन है—आदि वाला षड्जग्राम तथा दूसरा मध्यम ग्राम। उनका लक्षण इस प्रकार है—सातों स्वरों का क्रमशः आरोह और अवरोह 'मूर्च्छना' कहे जाते हैं। वे दोनों ग्रामों षड्ज तथा मध्यम में सात-सात प्रकार के होते हैं।

इन मूर्च्छनाओं को 'शुद्ध तान' भी कहा जाता है। इसलिये भगवती के कण्ठ में होने वाली वलयाकार तीन रेखाओं को देवलोक में भी व्यवहार होने के कारण 'ग्रामत्रय' कहना उचित ही है। उन ग्रामों के, **स्थितिनियमसीमानः स्थितेः** अर्थात् अवस्थान के नियमन के लिये अर्थात् सभी ग्राम एक में मिलकर साङ्कर्य न प्राप्त कर लें, इसलिये उनके अन्त में सीमा सेतु की रचना के समान शोभित होते हैं।

**अर्थ**—हे भगवति ! हे संगीत कम्प तथा गीतों में एक मात्र निपुण ! आपके गले में होने वाली तीनों भाग्य की रेखाएँ जो विवाह काल में अनेक सूत्रों के द्वारा विरचित त्रिसूत्री (त्रिसरा) की साक्षिरूपा हैं, वे मानों अनेक गानों के उत्पन्न करने वाले तीन ग्रामों की स्थिति के नियमन के लिए सीमायें बनी हुई हैं, जिससे उनका पृथक्-पृथक् अवस्थान बना रहे और उनमें एकीकरण न हो।

श्लोक के पूर्वार्ध में गले की तीन भाग्य रेखाओं का तीन डोरियों वाले मङ्गलसूत्र का

अनुमान किए जाने से अनुमानालङ्कार है। लौकिक अलङ्करण से भी अधिक विलक्षणता के कारण यहाँ विच्छित्यात्मकत्व भी है और वह वैलक्षण्य पक्षधर्ममात्रता के कारण व्याप्ति का अभाव ही है। अतः दोनों के ही उपस्थित होने के कारण वह लौकिक अलङ्करण ही है—ऐसा रहस्य समझना चाहिए। 'विच्छित्ति' का अर्थ है 'अलौकिकी शोभा'। श्लोक के उत्तरार्ध में उत्प्रेक्षालङ्कार है। भगवती के कण्ठ के मध्य स्वरग्रामत्रय रूप से चिन्हित वलित्रय की सम्भावना होने के कारण यहाँ उत्प्रेक्षालङ्कार है ॥ ६९ ॥

**ध्यान—'ग'। श्लोकस्थ वर्णबीज 'ग' का ध्यान—**

दाडिमीपुष्पसङ्काशां चतुर्बाहुसमन्विताम्।
रक्ताम्बरधरां नित्यां रक्तालङ्कारभूषिताम् ॥
एवं ध्यात्वा गकारं तु तन्मन्त्रं दशधा जपेत्।
पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये ॥
तरुणादित्यसङ्काशां कुण्डलीं प्रणमाम्यहम्।
अग्राकुञ्चितरेखा या गणेशी सा प्रकीर्त्तिता ॥
ततो दक्षगता या तु कमला तत्र संस्थिता।
अधोगता गता या तु तस्यामीशः सदा वसेत् ॥

**संगीतसिद्धि यन्त्र**

**बीजाक्षर**—'ग'; जपादि विधान पूर्ववत्।

**पूजनयन्त्र**—त्रिभुज में 'क्षं' एवं 'मूं'।

**भावार्थ**—हे गति-गमक-गीतैक-निपुणे! आपकी दिव्य ग्रीवा में तीन रेखायें चमकती हैं। उनकी शोभा विवाह काल में पहिनायी जाने वाली त्रिदोरों (सौभाग्य-डोरी) के समान झलकती है। वे तीन रेखायें सप्त स्वरों के तीन ग्रामवत् दीखती हैं। ऐसा प्रतीत होता है कि मानो गानविद्या के सर्व साधनों तथा स्वरों को इन तीन ग्राम-रूप डोरियों से बाँधकर उन स्वरादि की मर्यादा नियत कर दी गई हो।

गानविद्या के दो भेद कहे गये हैं—१. मार्ग और २. देशी। 'मार्ग' गानविद्या को 'ब्रह्मगीत' भी कहते हैं। देशी गानविद्या देश की भिन्नता के अनुसार पृथक्-पृथक् है।

ग्रामत्रय—षड्ज, मध्यम, गान्धार (स्वर)। अन्तिम 'ग्राम' इस भू पर प्रचलित था, ऐसी मान्यता है ॥ ६९ ॥

**मृणालीमृद्वीनां तव भुजलतानां चतसृणां**
**चतुर्भिः सौन्दर्यं सरसिजभवस्तौति वदनैः।**
**नखेभ्यः संत्रस्यन् प्रथममथनादन्धकरिपोः**
**चतुर्णां शीर्षाणां सममभयहस्तार्पणधिया ॥ ७० ॥**

**लक्ष्मीधरा—मृणाली** विसलता तद्वत् मृद्वीनां **मृदूनां**, 'वोतो गुणवचनात्' इति ङीप्। **तव** भवत्याः **भुजलतानां** बाहुलतानां **चतसृणां** चतुर्भिः **सौन्दर्यं** सौभाग्यं, **सरसिजभवो** ब्रह्मा, **स्तौति** प्रस्तौति। **वदनैः** वक्त्रैः, **नखेभ्यः** करजेभ्यः सकाशात्,

**संत्रस्यन्** बिभ्यत् 'भीत्रार्थानां भयहेतुः' इत्यपादाने पञ्चमी । **प्रथममथनात्** पूर्वं मर्दितवतः । कर्तरि ल्युट् । यदाह वृत्तिकारः—'वोतो गुणवचनात्' इत्यत्र 'गुणमुक्तवान् गुणवचनः' इति ।

ब्रह्मणः पञ्चमशिरः नखाग्रेणाच्छिनद्धरः । इति पुराणम् ।

तस्मात् प्रथममथनात्, **अन्धकरिपोः** सदाशिवस्य, **चतुर्णां शीर्षाणां** शिरसां, **समं** सकृदेव, **अभयहस्तार्पणधिया** अभयहस्तान्ग्रहीतुकाम इत्यर्थः ॥

**अत्रेत्थं पदयोजना**—हे भगवति ! तव मृणालीमृद्वीनां चतसृणां भुजलतानां सौन्दर्यं सरसिजभवः चतुर्भिर्वदनैः प्रथममथनात् अन्धकरिपोः नखेभ्यः संत्रस्यन् समं चतुर्णां शीर्षाणां अभयहस्तार्पणधिया स्तौति ॥

काव्यलिङ्गमलङ्कारः, ब्रह्मैकनियतस्तोत्रस्य नखेभ्यः संत्रस्यन् इत्यादिना समर्थनात् । वाक्यार्थहेतुकं काव्यलिङ्गमिति ध्येयम् । भुजलतावर्णने ब्रह्मण एवाधिकारो नान्येषामिति काव्यलिङ्गेन ध्वन्यते वस्त्विति अलङ्कारेण वस्तुध्वनिः ॥ ७०॥

## * सरला *

**मृणालीति** । **मृणाली** विसलता, **मृद्वीनां** अत्यन्त कोमल यहाँ 'वोतोगुण वचनात्' इस सूत्र से मृदु को ङीष् होने से मृद्वी रूप बना है । **तव** आप के **भुजलतानां** बाहुलताओं की **चतसृणां चतुर्भिः सौन्दर्यं** सौभाग्य को चारों मुख से **सरसिजभवः** ब्रह्मदेव **स्तौति** स्तुति करते है । **वदनैः** मुखों से **नखेभ्यः** करज अर्थात् नखों के सकाश से संत्रस्यन् अर्थात् डरते हुये । यहाँ 'भीत्रार्थानां भयहेतुः' इस सूत्र से अपादान में पञ्चमी विभक्ति हुई है । **प्रथममथनात्** पूर्व काल में मर्दित होने से । यहाँ कर्त्ता में ल्युट् प्रत्यय है ।

'ब्रह्मा का पाँचवाँ शिर सदाशिव ने अपने नखाग्र से काट दिया' यह पुराण वचन है ।

**तस्मात्** पूर्व में मर्दित होने के कारण **अन्धकरिपोः** सदाशिव के (नखों से डरते हुए) **चतुर्णां शीर्षाणां समं** अपने चारो शिरों पर एक ही साथ **अभयहस्तार्पणधिया** अभय हस्त धारण करने के लिये स्तुति करते हैं ।

**पदयोजना का अर्थ**—हे भगवति ! आपके मृणाली के समान कोमल चारों भुजलताओं के सौन्दर्य की ब्रह्मदेव अपने चारों मुखों से पूर्वकाल में अपने पञ्चम मुख के मर्दन किये जाने के कारण अन्धक शत्रु सदाशिव के नखों से डरते हुये अपने चारों शिरों पर एक साथ आपके चारो अभयहस्त के अर्पण की बुद्धि से स्तुति करते हैं ।

यहाँ काव्यलिङ्ग अलङ्कार है । ब्रह्मदेव के द्वारा नियमतः किये जाने वाले स्तोत्र का 'नखों से डरते हुये' इस वाक्य से समर्थन किया गया है । 'जहाँ हेतु देकर वाक्य की पुष्टि की जाय' वहाँ काव्यलिङ्गालङ्कार होता है ऐसा समझना चाहिये । यहाँ भुजलता के वर्णन में ब्रह्मदेव का ही अधिकार है, अन्यों का नहीं । इस काव्यलिङ्ग से वस्तु ध्वनि होने के कारण वस्तुध्वनि अलङ्कार है ॥ ७० ॥

**ध्यान**—मृ = म + ऋ । **श्लोकस्थ वर्णबीज 'मृ' का ध्यान**—

**म—** कृष्णां दशभुजां भीमां पीतलोहितलोचनाम् ।
कृष्णाम्बरधरां नित्यां धर्मकामार्थमोक्षदाम् ॥
एवं ध्यात्वा मकारं तु तन्मन्त्रं दशधा जपेत् ।

मकारं शृणु चार्वङ्गि स्वयं परमकुण्डली ॥
तरुणादित्यसङ्काशं चतुर्वर्गप्रदायकम् ।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं तथा ॥
ऋ— षड्भुजां नीलवर्णां च नीलाम्बरधरां पराम् ।
नानालङ्कारभूषाढ्यां सर्वालंकृतमस्तकाम् ॥
भक्तिप्रदां भगवतीं भोगमोक्षप्रदायिनीम् ।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
पञ्चप्राणमयं वर्णं चतुर्ज्ञानमयं तथा ।
रक्तविद्युल्लताकारं ऋकारं प्रणमाम्यहम् ॥
ऋकारः परमेशानि! कुण्डलीमूर्तिमान् स्वयम् ।
अत्र ब्रह्मा च विष्णुश्च, रुद्रश्चैव वरानने ॥
सदाशिवयुतं वर्णं सदा ईश्वरसंयुतम् ।
ऊर्ध्वा दक्षगता वक्रा त्रिकोणावामतस्ततः ॥
पुनस्त्वधो दक्षगता मात्रा शक्तिः परास्मृता ।
मात्रा तु ब्रह्मविष्ण्वीशाः तिष्ठन्ति क्रमतो परा ॥

**अपराधशान्त्यर्थ यन्त्र**

**बीजाक्षर**—'मृ'; जप-संख्या—१०००; जप-स्थान—विशुद्धिचक्रः होम—तिल, शर्करा और जपाकुसुम से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—५ ।

**भावार्थ**—हे भगवति ! कमलोद्भव श्री ब्रह्मा अपने चार मुखों से आपकी चार भुजलताओं के अद्भुत सौन्दर्य की नित्य प्रशंसा करते हैं । उनको अर्थात् श्री ब्रह्मा जी को अन्धकान्तक श्री भगवान् शङ्कर के नखों का भय व्याप्त है कि जिस प्रकार एक समय श्री ब्रह्मा जी का पाँचवाँ शिर भगवान् शङ्कर जी ने अपने नखों से उखाड़ डाला था, उस प्रकार का व्यवहार दूसरे बचे हुये चार शिरों के साथ न किया जाय । इसलिए मानों वे आपके अभयहस्त अर्पण के लिए स्तुति करते हैं ।

इस प्रकार चार शिरों से भगवती की चार भुजाओं के गुण-गान करने का उद्देश्य चारों सिरों का संरक्षण है ॥ ७० ॥

**नखानामुद्योतैर्नवनलिनरागं विहसतां**
**कराणां ते कान्तिं कथय कथयामः कथमुमे ।**
**कयाचिद्वा साम्यं भजतु कलया हन्त कमलं**
**यदि क्रीडल्लक्ष्मीचरणतललाक्षारसचणम् ॥ ७१ ॥**

**लक्ष्मीधरा—नखानां** नखराणां, **उद्योतैः** प्रभापटलैः, **नवनलिनरागं** प्रातर्विकसिताम्बुजकान्तिं, **विहसतां** अपलपतां, **कराणां** हस्तानां, **ते** तव, **कान्तिं** शोभां, **कथय** वद, **कथयामः** काव्यप्रबन्धं रचयामः, **कथं** केन प्रकारेण, **उमे!** पार्वति! **कयाचिद्वा** विधया ।

वेत्यसंशये संशयोक्तिः । केनापि प्रकारेण नास्तीत्यर्थः । **साम्यं** सादृश्यं, **भजतु** स्वीकरोतु **कलया** लेशेनापि **हन्त!** वाक्यारम्भे—

हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः । इत्यमरः ।

**कमलं** पद्मम्, **यदि** संशये, तथापि सन्देह इत्यर्थः । **क्रीडल्लक्ष्मीचरणतललाक्षारसचणं** क्रीडन्त्याः लक्ष्म्याः पद्मालयायाः चरणतलयोः लाक्षारसेन चणं वित्तं युक्तम् । 'तेन वित्तश्चुञ्चुप्चणपौ' इति चणप् ॥

**अत्रेत्थं पदयोजना**—हे उमे ! नखानामुद्योतैः नवनलिनरागं विहसतां ते कराणां कान्तिं कथं कथयामः कथय, कमलं कलयापि साम्यं कयाचिद्वा भजतु । हन्त कमलं क्रीडल्लक्ष्मीचरणतललाक्षारसचणं यदि तदा हि साम्यं भजत्विति । यद्वा कयाचिद्वा साम्यं भजतु विधयेति पाठः । तदा हन्त ! कमलं कयाचिद्वा विधया साम्यं भजतु प्राप्नोतु इत्यन्वयः । तामेव विधामाह—यदि क्रीडल्लक्ष्मीचरणतललाक्षारसचणं तदा नान्यथेत्येकवाक्यतया अन्वयः ॥

अत्रातिशयोक्तिरलंकारः, यद्यर्थोक्त्याऽतिशयकल्पनात् । पूर्वार्धे तद्गुणालङ्कारः, नखकान्तिभिरतिरक्तत्वात् कराणाम् । नवनलिनरागं विहसतामित्यत्र उपमालङ्कारः, उभयोस्संसृष्टिः, अपृथक्स्थितया प्रयोजकत्वात् उभयोः संसृष्टिः ॥ ७१ ॥

## * सरला *

**नखानामिति । नखानां** नखरों के **उद्योतैः** प्रभासमूहों से **नवनलिनरागं** प्रातःकाल में विकसित कमल की कान्ति का **विहसतां** तिरस्कृत करने वाले **कराणां** हाथों का **ते** आपके **कान्तिं** शोभा को **कथय** बताओ **कथयामः** काव्यप्रबन्ध की रचना करें, **कथं** किस प्रकार से **उमे !** हे पार्वति ! **कयाचिद्वा** किस विधि से, 'वा' संशयोक्ति है अर्थात् किसी भी प्रकार से नहीं, **साम्यं** सादृश्य **भजतु** स्वीकार करे **कलया** लेश मात्र से भी, **हन्त** वाक्यारम्भ अर्थ में प्रयुक्त है ।

'हन्त पद हर्ष के अर्थ में, अनुकम्पा अर्थ में तथा वाक्यारम्भ में और विषाद अर्थ में प्रयुक्त होता है' ऐसा अमरकोष में कहा है । **कमलं** पद्म **यदि** संशयार्थक है अर्थात् तथापि संशय है । **क्रीडल्लक्ष्मीचरणतललाक्षारसचणं** क्रीडा करती हुई लक्ष्मी के चरणतलों में लगे हुये लाक्षारस से युक्त है, यहाँ 'तेन वित्तश्चुञ्चुश्चणपौ' सूत्र से चणप् प्रत्यय हुआ है ।

**पदयोजना का अर्थ**—हे उमे ! अपने नखों के प्रकाश से प्रातःकाल में विकसित कमल की कान्ति को तिरस्कृत करने वाले आपके हाथों की शोभा किस प्रकार वर्णन करें, यह आप ही बताइए । यदि कमल किसी प्रकार—उन हाथों के लेश मात्र की भी तुलना कर सके तो करे । परन्तु खेद की बात यह है कि वह तो क्रीड़ा करती हुई लक्ष्मी के चरण तल की लाक्षा रस का वेत्ता है ।

यहाँ 'यदि' के अर्थ की उक्ति से अतिशय की कल्पना करने से अतिशयोक्ति अलङ्कार है । पूर्वार्ध में हाथ के नख की कान्ति से अलग कहे जाने के कारण तद्गुणालङ्कार है । 'नवनलिनरागं विहसतां' यहाँ उपमालङ्कार है और दोनों को मिलाकर संसृष्टि है, एक में मिलकर प्रयोजक होने से दोनों की ही संसृष्टि है ॥ ७१ ॥

**ध्यान—'न' । श्लोकस्थ वर्णबीज न का ध्यान—**

**न—** दलिताञ्जनवर्णाभां ललज्जिह्वां सुलोचनाम्।
चतुर्भुजां चकोराक्षीं चारुचन्दनचर्चिताम् ॥
कृष्णाम्बरपरीधानां ईशद्धास्यमुखीं सदा ।
एवं ध्यात्वा नकारं तु तन्मन्त्रं दशधा जपेत् ॥
नकारं शृणु चार्वङ्गि रक्तविद्युल्लताकृतिः ।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली ॥
त्रिगुणाशक्तिसंयुक्तं हृदि भावय पार्वति ।

**यक्षिणीवशीकरण यन्त्र**

**बीजाक्षर**—'न'; जपादि विधान पूर्ववत् ।
पूजनयन्त्र—वृत्त के मध्य षट्कोण और षट्कोण के मध्य में 'क्लीं' तथा कोणों के बाहर छः 'क्लीं' तथा कोणों के भीतर छः 'श्रीं' ।

**भावार्थ**—हे उमा ! आप के कर-कमल की कान्ति का, जिनके नख-ज्योति की आभा नवजात कमल की शोभा को तिरस्कृत करती है, वर्णन किस प्रकार किया जाय, आप ही बताएँ । श्री लक्ष्मी जी कमल कुसुमों पर खेलती एवं इधर उधर डोलती रहती हैं, उनके चरण-कमलों में लगे हुये आलता (लाल रंग) के रंग में लाल हुये कमलों को श्री हस्त से कुछ थोड़ी सी साम्यता मिल सकती है ॥ ७१ ॥

**समं देवि स्कन्दद्विपवदनपीतं स्तनयुगं**
**तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम् ।**
**यदालोक्याशङ्काकुलितहृदयो हासजनकः**
**स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झडिति ॥ ७२ ॥**

**लक्ष्मीधरा—समं** तुल्यकालं **देवि!** भगवति! **स्कन्दद्विपवदनपीतं** स्कन्दः कुमारः द्विपवदनो विनायकः ताभ्यां पीतं, **स्तनयुगं** कुचद्वन्द्वं तव भवत्याः, **इदं नः** अस्माकं, **खेदं** क्लेशं, **हरतु** अपनुदतु । **सततं** सर्वदा **प्रस्नुतमुखं** क्षीरस्राविमुखम्, यत् कुचद्वन्द्वं, **आलोक्य** विलोक्य, **आशङ्काकुलितहृदयः** आशङ्कायाः मदीयौ कुम्भौ अपहृतवतीत्या-शङ्कायाः आकुलितं अवस्कन्दितं व्यग्रतरमित्यर्थः, तादृशं हृदयं मनो यस्य, **हासजनकः** मातापित्रोः (कुमारस्य च) । असौ बालिश इति प्रेम्णा हसितवन्तावित्यर्थः । **स्वस्य कुम्भौ** कुम्भ स्थले, **हेरम्बः** विनायकः, **परिमृशति** परामृशति । विद्यते न वेति **हस्तेन** निमार्ष्टी-त्यर्थः । झडिति शीघ्रम् ॥

**अत्रेत्थं पदयोजना**—हे देवि ! तव समं स्कन्दद्विपवदनपीतं इदं स्तनयुगं प्रस्नुतमुखं नः खेदं सततं हरतु, यत् आलोक्य आशङ्काकुलितहृदयः हेरम्बः हासजनकः हस्तेन झडिति स्वकुम्भौ परिमृशति ॥

यस्याः पुत्रौ जगत्पूज्यपादौ विनायककुमारस्वामिनाविति देव्याः सर्वातिशायि माहात्म्यं इति प्रतीयते । देव्याः कुचकुम्भसाम्यं यदि स्यात्तदा विनायककुम्भयोरेव तौल्यमित्यतिशयोक्तिरपि प्रतीयते । विनायकः हस्तेन परिमृशतीत्यनेन विनायककुम्भयोस्तुल्यौ देवीकुचावेवेति उपमेयोपमापि ध्वन्यते । वस्त्वलङ्कारध्वनीनां एकव्यञ्जकानुप्रवेशेन सङ्करः ॥ ७२ ॥

*** सरला ***

**सममिति । समं** एक ही साथ, **देवि** भगवति !, **स्कन्दद्विपवदनपीतं** स्कन्द कुमार-कार्त्तिकेय, द्विपवदन अर्थात् विनायक उनके द्वारा पीये गये, **स्तनयुगं** दोनों कुच, **तव** आपके **इदं नः** हमारे, **खेदं** क्लेश को, **हरतु** दूर करें । **सततं** सर्वदा, **प्रस्नुतमुखं** अपने मुख से दूध की धारा स्रावित करने वाले, **यत्** जिस कुचद्वन्द्व को, **आलोक्य** देख कर **आशङ्काकुलित-हृदयः** 'कहीं इसने मेरे ही कुम्भों का अपहरण तो नहीं किया है' इस आशंका से व्यग्रहृदय है जिसका, **हासजनकः** माता पिता और कुमार के, 'यह अत्यन्त भोला है इसलिये प्रेमपूर्वक हास के जनक होने के कारण, **स्वस्यकुम्भौ** अपने कुम्भस्थल में, **हेरम्बः** विनायक, **परिमृशति** टटोलते हैं खोजते हैं, **झटिति** बड़ी शीघ्रता से हाथ से पकड़ते हैं ।

**पदयोजना का अर्थ**—हे देवि ! कार्त्तिकेय तथा गणपति के द्वारा एक साथ पीये गये दोनों स्तनयुग्म जिनके मुख से दूध की धारा सर्वदा बहती रहती है वे स्तन हमारे क्लेशों को दूर करते रहें जिन्हें पीते समय देखकर कहीं इसने मेरे कुम्भ की चोरी तो नहीं करवा-ली है इस आशङ्का से व्यग्रहृदय वाले श्रीगणेश अपने माता-पिता के हास्य का कारण बनते हुये अपने हाथ से बड़ी शीघ्रता से अपना कुम्भ टटोलने या खोजने लग जाते हैं ।

यहाँ 'जगत् के पूज्यपाद विनायक और कुमारस्वामी कार्त्तिकेय जिन देवी के पुत्र हैं' इससे देवी का माहात्म्यातिशय प्रतीत हो रहा है । देवी के कुचकुम्भ का साम्य यदि सम्भव हो सकता है, तो विनायक के दोनों कुम्भों से ही तुलना सम्भव है, इससे अतिशयोक्ति अलङ्कार की भी यहाँ प्रतीति होती है । 'विनायक अपने हाथ से अपने कुम्भस्थल को टटोलते हैं' इस कथन से विनायक के दोनों कुम्भों के तुल्य देवी के दोनों कुच हैं इससे उपमेयोपमा की भी ध्वनि है । वस्त्वलङ्कार ध्वनियों के एक व्यञ्जक अनुप्रवेश से यहाँ संकर है ॥ ७२ ॥

**ध्यान—'स' । श्लोकस्थ वर्णबीज 'स' का ध्यान—**

स्— करीषभूषिताङ्गीं च साट्टहासां दिगम्बराम् ।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम् ॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम् ।
सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम् ॥
एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत् ।
सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम् ।
कोटिविद्युल्लताकारं कुण्डलीमयसंयुतम् ॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा ।
रजस्सत्वतमोयुक्तं त्रिबिन्दुसहितं सदा ॥

**बीजाक्षर**—'स'; जप-संख्या—१०००; जप-स्थान—विशुद्धिचक्रः होम—तिल, शर्करा और जपाकुसुम से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—५।

**भावार्थ**—हे विश्वपोषिणी जगज्जननि ! आपके दिव्य स्तन आपके हम पुत्रों का महान् आपत्ति से संरक्षण करें। आपके उन पयधाराभरित दिव्य स्तनों का श्री षडानन कार्त्तिकेय तथा श्री गजानन एक साथ पान करते हैं। आप श्री के इन उत्तुङ्ग स्तनों को देख कर भ्रम से श्री गणेशजी शीघ्रता से अपने शिरस्थ कुम्भों को छूकर देखते हैं—इस भ्रम से कि इन स्तनों के स्थान में उनके शिरस्थ कुम्भ-द्वय तो नहीं चिपक गये। श्री गणेश जी की यह लीलामय क्रिया जगत् के माता-पिता के लिए अत्यन्त विनोदकर हास्य उत्पन्न करने वाली है ॥ ७२ ॥

**अमू ते वक्षोजावमृतरसमाणिक्यकुतुपौ**
**न सन्देहस्पन्दो नगपतिपताके मनसि नः।**
**पिबन्तौ तौ यस्मादविदितवधूसङ्गरसिकौ**
**कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ ॥ ७३ ॥**

**लक्ष्मीधरा**—**अमू** परिदृश्यमानौ, ते तव, **वक्षोजौ** कुचौ, **अमृतरसमाणिक्यकुतुपौ** अमृतरसस्य माणिक्यकुतुपौ अमृतरसपूरितमाणिक्यकुतुपावित्यर्थः। कुतुपशब्दो यद्यपि चर्मनिर्मितधृततैलाद्याधारभूतघटसन्निभपात्रीवाचकः तथापि तस्याः भगवतीस्तनसादृश्यावगाहने अनधिकारात् तदर्थं माणिक्यरचितत्वमङ्गीकृतं कुतुपयोः। **न सन्देहस्पन्दः** सन्देहस्य स्पन्दनं लेशमात्रमिति यावत्। **नगपतिपताके ! मनसि नः** अस्माकं, **पिबन्तौ तौ** माणिक्य कुतुपौ, **यस्मात्** कारणात्, **अविदितवधूसङ्गरसिकौ कुमारौ** शिशू भूत्वा, **अद्यापि** इदानीमपि श्लोकरचनाकालेऽपि, **द्विरदवदनक्रौञ्चदलनौ** द्विरदवदनो विनायकः क्रौञ्चदलनः क्रौञ्चाद्रि-भेदनः कुमारस्वामी तौ ॥

**अत्रेत्थं पदयोजना**—हे नगपतिपताके! अमू ते वक्षोजौ अमृतरसमाणिक्यकुतुपौ। अस्मिन्नर्थे नः मनसि सन्देहस्पन्दो नास्ति। यस्मात्तौ पिबन्तौ अविदितवधूसङ्गरसिकौ द्विरद-वदनक्रौञ्चदलनौ अद्यापि कुमारौ भवतः ॥

अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः स्पष्ट एव। पूर्वपादे रूपकं वक्षोजयोः कुतुप-त्वेनारोपणात्। यद्वा—निश्चयान्तस्सन्देहः इमौ वक्षोजौ उत कुतुपाविति सन्देहे कुतुपावेवेति निश्चयः, यतोऽमृतपानात् कुमारयोः शिशुत्वम्। स्तन्यपानमात्रात् शिशुत्वावस्थैवेति नियमो नास्ति, शैशवानन्तरं यौवनादेरनुभूतत्वादिति। विनायककुमारयोस्तु सर्वदा शिशुत्वं अमृत-पानवशादेवेति अमृतरसकुतुपसन्देहापनयने साधकं प्रमाणं द्वितीयार्धप्रमेयमिति सूक्तं निश्चया-न्तस्सन्देह इति। 'कविकल्पितकोटिद्वयस्यावाच्यत्वं नास्ति' इति मङ्खुकः ॥ ७३ ॥

## * सरला *

**अमू** इति। **अमू** ये दिखाई पड़ने वाले, ते आपके, **वक्षोजौ** दोनों कुच प्रदेश,

**अमृतरस माणिक्यकुतुपौ** अमृत रस के माणिक्य कुतुप् अर्थात् अमृत रस से परिपूर्ण मणिनिर्मित कुतुप हैं। यद्यपि 'कुतुप' शब्द चर्म निर्मित घृत-तैलादि के आधारभूत घड़ा के समान पात्री का वाचक है, किन्तु वह भगवती के स्तन की उपमा का अधिकारी नही है, इसलिये उसे यहाँ माणिक्य निर्मित कहा गया है। **न सन्देहस्पन्दः** सन्देह का स्पन्दन लेश मात्र भी नहीं है। **नगपतिपताके!** हे हिमालय की पताके! **मनसि नः** हमारे मन में, **पिबन्तौ तौ** माणिक्यकुतुप रूप दोनों स्तनों को पीने से, **यस्मात्** जिस कारण से **अविदितवधूसङ्गरसिकौ कुमारौ** श्रीगणेश एवं कार्त्तिकेय दोनों ही स्त्रीसम्भोग के सुख के ज्ञान से वञ्चित रह कर शिशु बनकर, **अद्यापि** इस श्लोक के रचना काल तक अर्थात् आज भी, **द्विरदवदनक्रौञ्चदलनौ** द्विरदवदन विनायक एवं क्रौञ्चदलन अर्थात् क्रौञ्चपर्वत का भेदन करने वाले कुमारस्वामी दोनों ही आज तक कुँआरे बने हुए हैं।

**पदयोजना का अर्थ**—हे नगपति पताके ! ये आपके कुचद्वय अमृत रस से परिपूर्ण मणिनिर्मित कुतुप हैं इस विषय में मुझे रञ्चमात्र भी सन्देह नहीं है क्योंकि उनके पीने से गणपति और स्वामी कार्त्तिक दोनो ही स्त्री संग के सुख ज्ञान से वञ्चित रह कर बाल्यावस्था का अनुभव करते हुये आज तक सम्प्रति भी कुमार (क्वारे) ही बने हुये हैं।

यहाँ वाक्यार्थहेतुक काव्यलिङ्गालङ्कार स्पष्ट ही है। पूर्वपद में वक्षोज में कुतुप के आरोपण से रूपकालङ्कार है, अथवा निश्चयान्त सन्देह है। ये वक्षोज हैं कि कुतुप हैं अर्थात् इस सन्देह में कुतुप ही हैं, ऐसा निश्चय है। यत: उस अमृतपान से दोनों कुमारों का आज तक शिशुत्व है इसलिये यह सिद्ध हो गया कि स्तन्य पान मात्र से शिशुत्वावस्था का नियम नहीं है। यद्यपि शैशवानन्तर युवावस्था का अनुभव होना चाहिए किन्तु प्रकृत में विनायक और कुमार का अमृतपान करने के कारण उनका सदैव शिशुत्व बना रहता है। यही स्तनों के अमृतरस के कुतुप के सन्देह को दूर करने के लिये पर्याप्त प्रमाण है। इसलिये श्लोक के द्वितीयार्ध प्रमेय सूक्त होने से निश्चयान्त सन्देह हो गया। यहाँ 'कवि के द्वारा कल्पित दोनो कोटियाँ अवाच्य नहीं हैं'—ऐसा मङ्खुक का मत है॥ ७३॥

**ध्यान**—'अ'। **श्लोकस्थ वर्णबीज 'अ' का ध्यान** इस प्रकार है—

**अ**— केतकीपुष्पगर्भाभां द्विभुजां हंसलोचनाम्।
शुक्लपट्टाम्बरधरां पद्ममालाविभूषिताम्॥
चतुर्वर्गप्रदां नित्यं नित्यानन्दमयीं पराम्।
वराभयकरां देवीं नागपाशसमन्विताम्॥
शृणु तत्त्वमकारस्य अतिगोप्यं वरानने।
शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा॥
पञ्चदेवमयं वर्णं शक्तिद्वयसमन्वितम्।
निर्गुणं सगुणोपेतं स्वयं कैवल्यमूर्तिमान्।
विन्दुत्रयमयं वर्णं स्वयं प्रकृतिरूपिणीम्॥

**तुष्टिप्रदायक यन्त्र**

**बीजाक्षर**—'अ', जपादि विधान पूर्ववत्; पूजन-यन्त्र—चतुरस्र में 'हाँ' लिखे।

**भावार्थ**—हे नगपतिपताके! अमृतरस से भरे हुये

आपके ये दोनों स्तन माणिक्य के दो कुम्भ (चर्म निर्मित घृत तैलादि रखने का पात्र) हैं, इस विषय में हमारे मन में तनिक भी सन्देह नहीं है। श्री गणेश तथा श्री स्कन्द, जो इन सुन्दर घटों में से अमृतरस दुग्ध का पान करते हैं, वे वधू-सङ्गम रस से आज भी अनभिज्ञ हैं अर्थात् वे अब भी छोटे-छोटे दूध-पीते बालक ही हैं ॥ ७३ ॥

**वहत्यम्ब स्तम्बेरमदनुजकुम्भप्रकृतिभिः**
**समारब्धां मुक्तामणिभिरमलां हारलतिकाम्।**
**कुचाभोगो बिम्बाधररुचिभिरन्तश्शबलितां**
**प्रतापव्यामिश्रां पुरदमयितुः कीर्तिमिव ते ॥ ७४ ॥**

**लक्ष्मीधरा—वहति** दधति। **अम्ब**! मात:! **स्तम्बेरमदनुजकुम्भप्रकृतिभिः** स्तम्बेरमदनुजः गजासुरः तस्य कुम्भस्थलमेव प्रकृतिः जन्मभूमिः येषां तैः गजकुम्भेषु मुक्तामणय उद्भवन्ति। यथोक्तं **सर्वज्ञसोमेश्वरेण**—

गजकुम्भेषु वंशेषु फणासु जलदेषु च।
शुक्तिकायामिक्षुदण्डे षोढा मौक्तिकसम्भवः॥
गजकुम्भे कर्बुराभाः वंशे रक्तसिताः स्मृताः।
फणासु वासुकेरेव नीलवर्णा प्रकीर्तिताः॥
ज्योतिर्वर्णास्तु जलदे शुक्तिकायां सिताः स्मृताः।
इक्षुदण्डे पीतवर्णाः मणयो मौक्तिकाः स्मृताः॥ इति ॥

गजकुम्भप्रकृतयो मौक्तिकमणयः कर्बुरवर्णाः, गजासुरकुम्भप्रकृतयस्तु विशेषत एवेति भावः। **समारब्धां** खचितां, **मुक्तामणिभिः** मौक्तिकैः, **अमलां** त्रासादिदोषरहितां न तु श्वेतां, गजकुम्भोद्भवानां कर्बुरत्वात्। **हारलतिकां** मुक्तावलिं, **कुचाभोगः** कुचमध्यप्रदेशः, **बिम्बाधररुचिभिः** बिम्बाकारोऽधरो बिम्बाधरः। शाकपार्थिवादित्वात् साधुः। बिम्बाधरस्य अधरबिम्बस्येव रुचिभिः **अन्तश्शबलितां** सञ्जातचित्रवर्णाम्—

चित्रकिम्मीरकल्माषशबलैताश्च कर्बुरे। इत्यमरः।

अधरकान्तिसंवलिता शुक्तिमुक्तामणिमालिकेव भातीति भावः। **प्रतापव्यामिश्रां पुरदमयितुः** त्रिपुरान्तकस्य, **कीर्तिमिव ते** तव। प्रतापस्तु रक्तवर्णः कीर्तिस्तु श्वेतवर्णेति महाकविप्रसिद्धिः। अत एवास्य कवेः गजकुम्भोद्भवाः मणयः पाटलवर्णाः न शबलवर्णाः, अन्तश्शबलितामित्युक्तिरपि पाटलवर्णपरेत्यभिप्राय इत्यनुसन्धेयम्॥

**अत्रेत्थं पदयोजना**—हे अम्ब! ते कुचाभोगः स्तम्बेरमदनुजकुम्भप्रकृतिभिः मुक्तामणिभिः समारब्धां अमलां हारलतिकां बिम्बाधररुचिभिः अन्तः शबलितां प्रतापव्यामिश्रां पुरदमयितुः कीर्तिमिव वहति॥

अत्रोत्प्रेक्षालङ्कारः, हारलतिकायाः प्रतापसम्वलितकीर्तित्वेन सम्भावनात् बिम्बाधररुचिभिरित्यत्र उत्प्रेक्षा, स्वभावतो रक्तवर्णेषु बिम्बाधररुचिभिः सम्वलनादिवेति हेतोरुत्प्रेक्षणात्। उभयोरनुप्राण्यानुप्राणकभावेन सम्बन्धः, अपृथक्स्थित्या उपकारकत्वात्॥ ७४ ॥

## * सरला *

**वहतीति**। **वहति** धारण करता है **अम्ब** हे मातः **स्तम्बेरमदनुजकुम्भप्रकृतिभिः**

स्तम्बेरमदनुजः अर्थात् गजासुर के कुम्भ स्थल में उत्पन्न होने वाली मणियों से । क्योंकि गजकुम्भ में मुक्तामणि उत्पन्न होती है । जैसा कि सर्वज्ञसोमेश्वर ने कहा है गजकुम्भेष्विति—

गजकुम्भ में, बाँस में, सर्पों के फणों में, बादल में, शुक्ति में और इक्षुदण्ड में इस प्रकार कुल ६ स्थानों में मोती उत्पन्न होती हैं । गजकुम्भ में कर्वुर वर्ण की, बाँस में रक्त और श्वेत वर्ण की, वासुकी आदि के फणों में नील वर्ण की, जल में बिजली के प्रकाश के समान, शुक्तिका में श्वेत तथा इक्षुदण्ड में पीतवर्ण की मणियाँ ही 'मौक्तिक' कही जाती हैं ।

हाथी के कुम्भ से उत्पन्न होने वाली मोती कर्वुर वर्ण की होती है और गजासुर के कुम्भ से उत्पन्न होने वाली मोती तो विशेष कर्वुर है यह भाव है, **समारब्धां** खचित, **मुक्तामणिभिः** मोतियों से, **अमलां** त्रासादिदोषरहित, श्वेत नहीं, क्योंकि गजकुम्भ से उत्पन्न मोती कर्वुर वर्ण की होती है । **हारलतिकां** मुक्तावली, **कुचाभोगः** कुचमध्यभाग, **बिम्बाधररुचिभिः** बिम्बाकार अधर के समान शोभा वाली, **अन्तःशबलितां** भीतर से चित्र वर्ण वाली । जैसा कि कहा भी है चित्रेति—

कर्वुर वर्ण में चित्र, किर्म्मीर कल्माष, और शवल वर्ण होते हैं—ऐसा अमरकोश है ।

जो अधर कान्ति के मिश्रित हो जाने से मोती की मणिमालिका के समान मालूम पड़ती है—यह भाव है । **प्रतापव्यामिश्रां पुरदमयितुः** त्रिपुरान्तक सदाशिव के प्रताप से मिली हुई, **कीर्त्तिमिव ते** आपके प्रताप का रक्त वर्ण है किन्तु कीर्त्ति का वर्ण श्वेत है—यह कवि सम्प्रदाय में प्रसिद्ध है । प्रतापवर्णन के कारण ही यहाँ कवि के मत में गजकुम्भ में उत्पन्न होने वाली मणियों को पाटलवर्ण कहा गया है शबलवर्ण नहीं कहा गया है । अन्तःशबलित इस उक्ति का अभिप्राय भी पाटलवर्णपरक समझना चाहिए ।

**पदयोजना का अर्थ**—हे मातः ! आपके कुचों का मध्य भाग गजासुर के कुम्भ से उत्पन्न हुई मुक्तामणियों से बनी हुई सर्वथा निर्दोष हारलतिका को, जो बिम्ब के समान अधरों की कान्ति से कुछ चित्रवर्ण की मालूम पड़ रही हैं, सदाशिव के प्रताप से मिली हुई उनकी कीर्त्ति के समान आप उसे धारण करती हैं ।

यहाँ उत्प्रेक्षालङ्कार है । क्योंकि 'हारलतिका' में प्रतापमिश्रित कीर्त्ति की सम्भावना की गई है अतः बिम्बाधररुचिभिः यहाँ उत्प्रेक्षा है । स्वभावतः रक्तवर्ण वाली मुक्ताहारावलि में 'बिम्बाधर रुचि से संवलित के समान' इस हेतु की उत्प्रेक्षा की गई है । दोनो में अनुप्राण्य और अनुप्राणक सम्बन्ध है । जो एक होने के कारण उपकारक बन गये हैं ॥ ७४ ॥

**ध्यान**—'व' । **श्लोकस्थ वर्णबीज 'व' का ध्यान** इस प्रकार है—

कुन्दपुष्पप्रभां देवीं द्विभुजां पङ्कजेक्षणाम् ।
शुक्लमाल्याम्बरधरां रत्नहारोज्ज्वलां पराम् ॥
साधकाभीष्टदां सिद्धां सिद्धिदां सिद्धसेविताम् ।
एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत् ॥
वकारं चञ्चलापाङ्गि कुण्डलीमोक्षमव्ययम् ।
पञ्चप्राणमयं वर्णं त्रिशक्तिसहितं सदा ।
त्रिबिन्दुसहितं मन्त्रमात्मादितत्त्वसंयुतम् ॥

पञ्चदेवमयं वर्णं पीतविद्युल्लतामयम् ।
चतुर्वर्गप्रदं शान्तं सर्वसिद्धिप्रदायकम् ॥

**कीर्तिदायक यन्त्र**

**बीजाक्षर**—'व'; जपादि विधान उपर्युक्त समान; पूजन-यन्त्र—त्रिकोण में 'ऐं क्लीं सौः' लिखे ।

**भावार्थ**—हे विश्वजननि! आपने जो (स्तम्बेरमदनुज) —गजासुर दैत्य के सिर से निकली हुई गज मुक्ताओं का हार पहना है, वह आपके कुच-प्रदेश में लटकता हुआ अत्यन्त शोभा पा रहा है। आपके बिम्बाधर की छाया के वर्ण सम्मिश्रण से चितकबरे वर्ण का परम दिव्य हो रहा है। श्री त्रिपुरहर शम्भु के प्रबल प्रताप के मिश्रण के समान वह वर्ण-श्री उनकी कीर्तिरूप से मानो झलक रहा सा प्रतीत होता है ॥ ७४ ॥

**तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः**
**पयःपारावारः परिवहति सारस्वतमिव ।**
**दयावत्या दत्तं द्रविलशिशुरास्वाद्य तव यत्**
**कवीनां प्रौढानामजनि कमनीयः कवयिता ॥ ७५ ॥**

**लक्ष्मीधरा—तव स्तन्यं** स्तनोद्भवं क्षीरं, **मन्ये** जानामि । **धरणिधरकन्ये ! हृदयतः** हृदयात्, **पयःपारावारः** क्षीरसमुद्रः । 'सुधाधारासारः' इति वा पाठः । सुधायाः धाराणामासारः सुधाप्रवाहः **परिवहति सारस्वतं** सरस्वतीमयम् इव, स्तन्यस्य श्वेतवर्णत्वात् सरस्वतीमयत्वेनोत्प्रेक्षणम्, माधुर्यात्सुधारूपत्वेन च । **दयावत्या** प्रशस्तकृपायुक्तया, **दत्तं** स्तन्यं **द्रविल-शिशुः** द्रविलजातिसमुद्भवः बालः एतत्स्तोत्रकर्ता **आस्वाद्य** पीत्वा, **तव यत्** कारणात्, **कवीनां** कवीश्वराणां **प्रौढानां** प्रगल्भानां मध्ये इति निर्धारणे षष्ठी । **अजनि** जातः । **कमनीयः** अतिरमणीयः, **कवयिता** कविः ॥

**अत्रेत्थं पदयोजना**—हे धरणिधरकन्ये ! तव स्तन्यं हृदयतः उत्थितः सुधाधारासारः पयः पारावारः सारस्वतमिव परिवहतीति मन्ये । यद्यस्मात् दयावत्या त्वया दत्तं तव स्तन्यं द्रविलशिशुरास्वाद्य प्रौढानां कवीनां मध्ये कमनीयः कवयिता अजनि ।

अत्रोत्प्रेक्षाद्वयं पदव्याख्यानावसरे कथितम् । उभयोः संसृष्टिः ॥ ७५ ॥

## * सरला *

तवेति । **तव स्तन्यं** स्तन से उत्पन्न होने वाला दूध, **मन्ये** मैं ऐसा मानता हूँ, जानता हूँ, **धरणिधरकन्ये ! हृदयतः पयः पारावरः** क्षीरसमुद्र है, 'सुधाधारासारः' यह भी पाठ है। सुधायाः अर्थात् अमृत की धारा का आसारः अर्थात् अमृत का प्रवाह है । **परिवहति सारस्वतं** सरस्वतीमय है । यतः दूध श्वेतवर्ण का है, इसलिये उसमें 'सरस्वतीमय' की उत्प्रेक्षा की गई है । फिर दूसरी बात माधुर्यसुधारूप भी है । **दयावत्या** प्रशस्तकृपा से युक्त होने के कारण, **दत्तं** आप द्वारा प्रदत्त, **द्रविलशिशुः** द्रविलजाति में उत्पन्न बालक, इस सौन्दर्यलहरीस्तोत्र का कर्त्ता, **आस्वाद्य पीकर, तव यत्** आपके कारण से, **कवीनां** कवीश्वरों

के, **प्रौढानां** प्रगल्भों के मध्य में, यहाँ निर्धारण में षष्ठी विभक्ति है । **अजनि** हो गया है । **कमनीयः** अत्यन्त रमणीय, **कवयिता** कवि ।

**पदयोजना का अर्थ**—हे धरणिधरकन्ये आपका दूध—हृदय से निकल कर बहते हुये (सुधाधारा का सारभूत क्षीर) समुद्र है, जो सारस्वत ज्ञान के समान सर्वदा बहता रहता है—ऐसा मैं मानता हूँ। क्योंकि आपकी दया से युक्त होने के कारण आपके द्वारा प्रदत्त उस दूध को यह द्रविड़ बालक पी कर उत्तमोत्तम प्रौढ़ कवियों के मध्य में रमणीय काव्य के कर्म में कुशल (सर्वश्रेष्ठ) कवि बन गया है ।

यहाँ दो उत्प्रेक्षाएँ हैं, जिसे पदों के व्याख्यान के अवसर पर टीका में ही कह दिया गया है । दोनों मिला कर संसृष्टि हैं ॥ ७५ ॥

**ध्यान**—'त' । **श्लोकस्थ वर्ण बीज 'त' का ध्यान**—

त— चतुर्भुजां महाशान्तां महामोक्षप्रदायिनीम् ।
सदा षोडशवर्षीयां रक्ताम्बरधरां पराम् ॥
नानाऽलङ्कारभूषां तां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा तकारं तु मन्त्ररूपं सदा यजेत् ॥
तकारं चञ्चलापाङ्गि स्वयं परमकुण्डली ।
पञ्चदेवात्मकं वर्णं पञ्चप्राणात्मकं तथा ॥
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ।
त्रिबिन्दुसहितं वर्णं पीतविद्युत्समप्रभम् ॥

**कवित्वप्राप्ति यन्त्र**

**बीजाक्षर**—'त'; जपादि विधान उपर्युक्त-समान; पूजन-यन्त्र—षट्कोण में 'ऐं क्लीं सौः' लिखे ।

**भावार्थ**—हे गिरिराजकन्ये ! मेरी धारणा यह है कि आपके हृदय से निकलता हुआ कविता-सागर स्तनों में से दुग्ध-रूपेण बहता है । आपकी दया-द्वारा पिलाये हुये उस दूध से मैं द्रविड़ बालक कवियों में एक उत्तम कवि हो गया हूँ ॥ ७५ ॥

**हरक्रोधज्वालावलिभिरवलीढेन वपुषा**
**गभीरे ते नाभीसरसि कृतसङ्गो मनसिजः ।**
**समुत्तस्थौ तस्मादचलतनये धूमलतिका**
**जनस्तां जानीते तव जननि रोमावलिरिति ॥ ७६ ॥**

**लक्ष्मीधरा**—**हरस्य क्रोधज्वालावलिभिः अवलीढेन** आविष्टेन, **वपुषा गभीरे** निम्ने अत एव **ते** तव, **नाभीसरसि** नाभ्येव सरः तस्मिन्, **कृतसङ्गो मनसिजः** मन्मथः निमग्न इत्यर्थः । **समुत्तस्थौ** उदभूत् । **तस्मात्** नाभीसरसः **अचलतनये!** पार्वति! **धूमलतिका** धूमावलिः, अङ्गारप्रशमसमयोद्भवा । **जनः** लोकः **तां** धूमलतिकां **जानीते** वर्णयति । **जननि!** मातः ! **तव रोमावलिरिति** रोमराजिरिति ।

**अत्रेत्थं पदयोजना**—हे अचलतनये! मनसिजः हरक्रोधज्वालावलिभिः अवलीढेन वपुषा गभीरे ते नाभीसरसि कृतसङ्गः ! तस्माद्धूमलतिका समुत्तस्थौ । हे जननि ! तां जनः तव रोमावलिरिति जानीते ।

अत्रोत्प्रेक्षालङ्कारः, रोमराजेः धूमलतिकात्वेनोत्प्रेक्षणात् । यद्वा जनस्तां जानीते इत्यनेन भ्रान्तिमान् प्रतीयते, रोमरेखादर्शनस्य धूमरेखाभ्रान्तिजनकत्वात् । यद्वा—अतिशयोक्तिः जनस्तां रोमावलिमध्यवस्यतीति प्रतीतेः । यद्वा—निश्चयान्तसन्देहः, तां रोमावलिरिति निश्चिनोतीति । एवं चतुर्णामलङ्काराणां जानीते इति पदादुत्थानात् एकवाचकानुप्रवेशेन सङ्करः ॥ ७६ ॥

### * सरला *

**हरक्रोधेति । हरस्य क्रोधज्वालावलिभिः** कामदेव भगवान् शङ्कर की क्रोधाग्नि से जलते हुए । **अवलीढेन** अविष्ट होने के कारण, **वपुषा** शरीर से, **गभीरे** गहरे अतएव **ते** आपके **नाभीसरसि** नाभिरूपी सरोवर में **कृतसङ्गो मनसिजः** कामदेव डूब गया । **समुत्तस्थौ** बाहर निकला, **तस्मात्** उस नाभीसरोवर से, **अचलतनये** हे पार्वति ! **धूमलतिका** धूमावलि अङ्गार की शान्ति से उत्पन्न होने वाली **जनः** लोग **तां** धूमलतिका को **जानीते** वर्णन करते हैं **जननि** हे मातः **तव रोमावलिरिति** ऐसी आपकी रोमराजि ।

**पदयोजना का अर्थ**—हे पार्वति ! कामदेव भगवान् सदाशिव के क्रोधाग्नि से जलते हुये शरीर से आपके अत्यन्त गहरे नाभी सरोवर में डूब कर स्नान किया । उससे जो धूमावलि ऊपर की ओर उठी लोग उसी को आपकी रोमावली कहने लगे ।

रोमराजि को धूमलतिका के रूप में उत्प्रेक्षा किये जाने के कारण यहाँ उत्प्रेक्षालङ्कार है । अथवा, 'जनस्ता जानीते' वहाँ भ्रान्तिमान् अलङ्कार है रोमराजि के देखने से धूम रेखा की भ्रान्ति हो जाने के कारण अथवा लोग उसे रोमावलि समझने लगे इस कारण अतिशयोक्ति भी है। अथवा उसे रोमावलि निश्चित करते हैं इस कारण निश्चयान्त सन्देहालङ्कार भी है । इस प्रकार चारों अलङ्कारों का 'जानीते' इस पद से उत्थित होने के कारण एकवाचक हो जाने से संकरालङ्कार हुआ ॥ ७६ ॥

**ध्यान—'ह'—श्लोकस्थ वर्णबीज 'ह' का ध्यान—**

**ह—** चतुर्भुजां रक्तवर्णां शुक्लाम्बरविभूषिताम् ।
रक्तालङ्कारसंयुक्तां वरदां पद्मलोचनाम् ॥
ईषद्धास्यमुखीं लोलां रक्तचन्दनचर्चिताम् ।
स्यादात्रीं च चतुर्वर्गप्रदां सौम्यां मनोहराम् ॥
गन्धर्वसिद्धदेवाद्यैर्ध्यातामाद्यां सुरेश्वरीम् ।
एवं ध्यात्वा हकारं तु तन्मन्त्रं दशधा जपेत् ॥
हकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम् ।
कुण्डलीद्वयसंयुक्तं रक्तविद्युल्लतोपमम् ॥
रजस्सत्वतमोयुक्तं पञ्चदेवमयं सदा ।
पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा ॥
त्रिबिन्दुसहितं वर्णं हृदि भावय पार्वति ! ।

ऊर्ध्वादाकुञ्चिता मध्ये कुण्डलीत्वगता त्वधः।
ऊर्ध्वगता पुनस्सैव तासु ब्रह्मदयः क्रमात् ॥

**बीजाक्षर**—'ह'; जप-संख्या—१०००; जप-स्थान—आज्ञाचक्रः होम—मधु, पायस, देवीपुष्प और बिल्वपत्र से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—६ ।

**वैराग्यकर यन्त्र**

**भावार्थ**—हे पार्वति ! मनसिज भगवान् शिव के तृतीय नेत्र से उत्पन्न क्रोधाग्नि की ज्वाला से दग्ध होंते हुये आपके गम्भीर नाभिसर में कूद कर गोता खाकर डूब गये । पश्चात् उस दिव्य नाभि-सरोवर में से एक धूमलतिका (लता के समान धुवाँ) उत्पन्न हुई । हे भगवति ! उस धूमलतिका को विश्व आपकी रोमावली के नाम से जानता है ॥ ७६ ॥

**यदेतत्कालिन्दीतनुतरतरङ्गाकृति शिवे**
**कृशे मध्ये किञ्चिज्जननि तव यद्भाति सुधियाम् ।**
**विमर्दादन्योन्यं कुचकलशयोरन्तरगतं**
**तनूभूतं व्योम प्रविशदिव नाभिं कुहरिणीम् ॥ ७७ ॥**

**लक्ष्मीधरा—यदेतत्** पुरः स्फुरत्। यच्छब्दस्य एतच्छब्दसहचरितस्य प्रसिद्धिवाचकत्वं नास्ति । अत एव पुनर्यच्छब्दोपादानम् । **कालिन्दीतनुतरतरङ्गाकृति** कालिन्द्याः यमुनायाः तनुतरतरङ्गः अतिसूक्ष्मतरङ्गः तस्याकृतिरिव आकृतिर्यस्य तत् । **शिवे !** भगवति! **कृशे** तनुनि, **मध्ये** अवलग्ने, **किञ्चित् जननि! तव यत् भाति** स्फुरति, **सुधियां** विदुषां, **विमर्दात्** सङ्घर्षात्, **अन्योन्यं** परस्परं, **कुचकलशयोः**, **अन्तरगतं** मध्यवर्ति, **तनूभूतं** सूक्ष्मभूतं, **व्योम** गगनं **प्रविशदिव** प्रवेशं कुर्वदिव । नीलं नभः इत्याबालगोपालप्रसिद्धम् । गगनस्य नीलिमां च मूर्तत्वं च कविप्रसिद्धम् । **नाभिं कुहरिणीं** कुहरवतीम् ।

**अत्रेत्थं पदयोजना**—हे शिवे ! जननि! तव कृशे मध्ये यदेतत्कालिन्दीतनुतरतरङ्गाकृति किञ्चित् रोमावलिरूपं वस्तु सुधियां यद्भाति कुचकलशयोरन्तरगतं तनूभूतं व्योम अन्योन्यं विमर्ददिव कुहरिणीं नाभिं प्रविशदिव भाति । नीलं मूर्तं नभः कुचकलशविमर्दवशात् अधोभागे स्रस्तं नाभिपर्यन्तं जतुलतान्यायेनावत्तिष्ठते तद्रोमावलिं वदन्तीति भावः ॥

अत्रोत्प्रेक्षालङ्कारः, रोमलतायाः गगनलतिकात्वेन सम्भावनात् । प्रथमपादे निदर्शनालङ्कारः । तरङ्गाकृतीति बिम्बप्रतिबिम्बभावाक्षेपात् । अनयोस्संसृष्टिः ॥ ७७ ॥

*** सरला ***

**यदेतदिति । यदेतत्** आगे दिखाई पड़ने वाला । यत् शब्द का एतत् शब्द के साथ साहचर्य की प्रसिद्धि नहीं है इसलिये यहाँ पुनः 'यत्' शब्द का प्रयोग किया गया है । **कालिन्दीतनुतरतरङ्गाकृति** यमुना के सूक्ष्म तरङ्ग के समान आकृति है जिसकी, **हे शिवे !**

भगवति !, **कृशे** अत्यन्त पतले, **मध्ये** अवलग्न में, **किञ्चित् जननि ! तव यत् भाति** स्फुरित होती है, **सुधियां** विद्वानों के मत में, **विमर्दात्** संघर्ष से, **अन्योन्यं** परस्पर, **कुचकलशयोः अन्तर्गतं** मध्यवर्त्ती, **तनुभूतं** सूक्ष्मभूत, **व्योम** आकाश, **प्रविशदिव** प्रवेश करने के समान 'नीलं नभः' यह आबालगोपाल में प्रसिद्ध है । आकाश की नीलिमा और मूर्त्तत्व कवि प्रसिद्धि है । **नाभिं कुहरिणीं** कुहर वाली नाभि को ।

**पदयोजना का अर्थ**—हे शिवे ! आपके अत्यन्त पतले कटितट में जो कालिन्दी के सूक्ष्म तरङ्ग की आकृति के समान यह रोमावलि जैसी किञ्चिद् वस्तु विद्वानों को प्रतीत हो रही है, वह कुचकलश के मध्य में रहने वाला अत्यन्त सूक्ष्म आकाश, जो दोनों कुचों के रगड़ से पतला पड़ गया है, आपके नाभिरूपी बिल में प्रवेश करते-जैसा ज्ञात हो रहा है । 'नीलं मूर्त्तं नभः' कुच कलश के रगड़ के कारण नीचे की ओर खिसक कर नाभिपर्यन्त जतुलता न्याय के समान स्थित है उसी को लोग रोमावली कहने लगे ।

यहाँ रोमलता की गगनलता के समान उत्प्रेक्षा किये जाने के कारण उत्प्रेक्षालङ्कार है । श्लोक के प्रथम पाद में 'तरङ्गाकृति' इस स्थल में बिम्बप्रतिबिम्ब भाव के आक्षेप से निदर्शनालङ्कार है । दोनों की संसृष्टि है ॥ ७७ ॥

**ध्यान**—'य' । **श्लोकस्थ वर्णबीज 'य' का ध्यान** इस प्रकार है—

धूम्रवर्णां महारौद्रीं षड्भुजां रक्तलोचनाम् ।
रक्ताम्बरपरीधानां नानालङ्कारभूषिताम् ॥
महामोक्षप्रदां नित्यामष्टसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा यकारं तु तन्मन्त्रं दशधा जपेत् ॥
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये ।
प्रणमामि सदा दिव्यं शक्तिं श्रीमोक्षमव्ययम् ॥
यकारं शृणु चार्वङ्गि चतुर्वर्गमयं सदा ।
पलालधूमसङ्काशं स्वयं परमकुण्डली ।
पञ्चप्राणमयं वर्णं पञ्चदेवमयं तथा ॥

**बीजाक्षर**—'य'; जप-संख्या—१०००; जप-स्थान—आज्ञाचक्र: होम—मधु, पायस, देवीपुष्प और बिल्व-पत्र से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—६ ।

**राजावश्यकर यन्त्र**

**भावार्थ**—हे अम्बे ! आपकी पतली कमर में एक वस्तु (= रोमावलि) जो यमुना तरङ्गवत् है, वह सुधी लोगों के मत से आपके कुचमध्यान्तर्गत अवकाश में दोनों कुचों के संघर्षण के दबाव से खिसक कर नाभि में प्रवेश करती प्रतीत होती है ।

**विमर्श**—एक वस्तु—रोमावलि । कालिन्दी जल काला (श्याम वर्ण का) है, आकाश का रंग भी तद्वत् है ॥ ७७ ॥

**स्थिरो गङ्गावर्तः स्तनमुकुलरोमावलिलता-**
**कलावालं कुण्डं कुसुमशरतेजोहुतभुजः ।**
**रतेर्लीलागारं किमपि तव नाभिर्गिरिसुते**
**बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते ॥ ७८ ॥**

**लक्ष्मीधरा—स्थिरः** विनाशरहितः, **गङ्गावर्तः** गङ्गायाः अम्भसां भ्रमः, आवर्तस्य क्षणिकत्वात् तद्व्यतिरेकः स्थिर इति । **स्तनमुकुलरोमावलिलताकलावालं** स्तनावेव मुकुलौ पुष्पकोरकौ तयोः रोमावलिरेव लता आधारभूता, जनयित्री तस्याः कला रेखा तस्याः आवालं आलवालम् । **कुण्डं** होमार्धं सम्पादितं वृत्तं अग्निस्थानं, **कुसुमशरतेजोहुतभुजः** कुसुमशरस्य मन्मथस्य तेजः दीप्तिरेव हुतभुक् वह्निः तस्य । **रतेः** मदनपत्न्याः, **लीलागारं** विलासगृहं तत्रैव सर्वदा मन्मथसद्भावात् तत्प्रेयसी तत्रैव वर्तत इति । **किमपि** अनिर्वाच्यं अतिसुन्दरमित्यर्थः । **तव नाभिः गिरिसुते !** पार्वति! **बिलद्वारं** गुहाद्वारं, **सिद्धेः** तपःसिद्धेः, **गिरिशनयनानां** सदाशिवचक्षुषां **विजयते** सर्वोत्कर्षेण स्फुरति ।

**अत्रेत्थं पदयोजना**—हे गिरिसुते ! तव नाभिः स्थिरो गङ्गावर्तः स्तनमुकुलरोमावलिलताकलावालं कुसुमशरतेजोहुतभुजः कुण्डं रतेर्लीलागारं गिरिशनयनानां सिद्धेर्बिलद्वारं किमपि विजयते ।

अत्रोल्लेखालङ्कारः, एकस्या नाभेरनेकरीत्या उल्लेखात् । नायमतिशयोक्तिः एकस्यानेकत्वोल्लेखनादेव । नाप्यतिशयोक्तिमाला, किमपीत्यध्यवसितुमशक्यत्वात् किमपीत्य-नेन सार्धं मालात्वस्यानुचितत्वादिति रहस्यम् ॥ ७८ ॥

## * सरला *

**स्थिर इति—स्थिरः** विनाशरहित, **गङ्गावर्त्तः** गङ्गा के जल का भ्रम (= भँवर) ऐसे तो आवर्त्त क्षणिक होता है किन्तु उसके प्रतिकूल यहाँ स्थिर कहा गया हैं । **स्तनमुकुल-रोमावलिलता कलावालं** स्तनरूप पुष्पकोरक को जन्म देने वाली, अथवा उनकी आधारभूता जो रोमावलि, उसकी कला अर्थात् रेखा, उसका आलवाल (= गमला) है । **कुण्डं** होम के लिये बनाया गया वृत्ताकार अग्निस्थान, **कुसुमशरतेजोहुतभुजः** कामदेव के तेजःस्वरूप अग्नि का, **रतेः** मंदनपत्नी का **लीलागारं** अर्थात् विलासगृह । यतः कामदेव का वहाँ निवास है, इसलिये उसकी प्रेयसी भी वहीं रहती है । **किमपि** अनिर्वाच्य अत्यन्त सुन्दर, **तव नाभिः** आपकी नाभि, **गिरिसुते** हे पार्वति, **बिलद्वारं** गुहाद्वार, **सिद्धेः** तपः-सिद्धि का, **गिरीश-नयनानां** सदाशिव के चक्षुओं का, **विजयते** सर्वोत्कर्ष रूप से स्फुरण करने वाला है ।

**पदयोजना का अर्थ**—हे गिरिसुते ! आपकी नाभि स्थिर गङ्गावर्त्त है स्तनरूपी पुष्पकली की जनयित्री (आधारभूता) रोमावलि का आलवाल (= गमला) है । कामदेव के तेजरूपी अग्नि का हवन कुण्ड है । रति का लीलागार है और गिरीश के नेत्रों की सिद्धि का विलद्वार है ऐसी अनिर्वचनीय अत्यन्त मनोहर आपकी नाभि सर्वोत्कर्ष रूप में स्फुरित होती है ।

एक नाभि का अनेक प्रकार से उल्लेख होने से यहाँ उल्लेखालङ्कार है । एक का

अनेक रूप में उल्लेख होने से यह अतिशयोक्ति नहीं है। किसी भी अध्यवसाय का अशक्य होना 'किमपि' इसके साथ मालात्व का अनुचित होने के कारण यहाँ अतिशयोक्तिमालालङ्कार भी नहीं है ॥ ७८ ॥

**ध्यान**—स्थि = स् + थ् + इ। **श्लोकस्थ वर्णबीज 'स्थि' का ध्यान**—

**स्**— करीषभूषिताङ्गीं च साट्टहासां दिगम्बराम्।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम् ॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम्।
सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम् ॥
एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत्।
सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम्।
कोटिविद्युल्लताकारं कुण्डलीमयसंयुतम् ॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा।
रजस्सत्वतमोयुक्तं त्रिबिन्दुसहितं सदा ॥

**थ**— नीलवर्णां त्रिनयनां षड्भुजां वरदां पराम्।
पीतवस्त्रपरीधानां सदा सिद्धिप्रदायिनीम् ॥
एवं ध्यात्वा थकारं तु तन्मन्त्रं दशधा जपेत्।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं शिवे ॥
तरुणादित्यसङ्काशं थकारं प्रणमाम्यहम्।
थकारं चञ्चलापाङ्गि कुण्डली मोक्षरूपिणी ॥
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये।

**इ**— इकारं परमानन्दं सुगन्धं कुंकुमच्छविः।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये ॥
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम् ॥
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गता भवेत्।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत् ॥
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम्।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम् ॥
चतुर्भुजां च वरदां हरिचन्दनभूषिताम्।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत् ॥

**सर्वसम्मोहन यन्त्र**

ह्रीं

**बीजाक्षर**—'स्थि'; जपादि विधान उपर्युक्त समान; पूजन-यन्त्र—त्रिकोण के मध्य में 'ह्रीं' लिखे।

**भावार्थ**—हे गिरिजे ! आपकी सुन्दर नाभि की जय हो, जिसका इस प्रकार से वर्णन किया जा सकता है—

१. यह नाभि श्री गङ्गा जी की स्थिर भँवर है, २. यह स्तन-रूपकली वाली नीचे की ओर फैली हुई लता (रोमावलिलता) की

क्यारी है । ३. यह मनसिज कामदेव के तेजरूप अग्नि का कुण्ड है, ४. कामदेव की पत्नी रति का लीलागार है, ५. श्री योगेश्वर शिव के नेत्रों की योगि-सिद्धिदा वह गिरि-गुहा है, जिसमें बैठकर आराधना करते हुये भगवान् शिव के नेत्र शान्ति चाहते हैं ॥ ७८ ॥

**निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो**
**नमन्मूर्तेर्नारीतिलकशनकैस्त्रुट्यत इव ।**
**चिरं ते मध्यस्य त्रुटिततटिनीतीरतरुणा**
**समावस्थास्थेम्नो भवतु कुशलं शैलतनये ॥ ७९ ॥**

**लक्ष्मीधरा—निसर्गक्षीणस्य** स्वभावेन क्षीणस्यातिकृशस्य, **स्तनतटभरेण** स्तनतटयोः कुचतटयोः भरेण, **क्लमजुषः** क्लान्तिमतः **नमन्मूर्तेः नारीतिलक !** स्त्रीरत्नभूते ! **शनकैः** स्तोकं, **त्रुट्यत इव** भिद्यमानस्येव, **चिरं** बहुकालं, **ते** तव, **मध्यस्य** अवलग्नस्य **त्रुटिततटिनीतीरतरुणा** त्रुटिते भग्ने तटिन्याः वाहिन्याः तीरे तरुः वृक्षः तेन **समावस्थास्थेम्नः** समायां तुल्यायां अवस्थायां स्थेमा स्थैर्यं यस्य, तस्य **भवतु** भूयात् । **कुशलं** क्षेमं त्रुटनाभावः, **शैलतनये** पार्वति !

**अत्रेत्थं पदयोजना**—हे शैलतनये ! नारीतिलक! निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषः नमन्मूर्तेः शनकैः त्रुट्यत इव त्रुटिततटिनीतीरतरुणा समावस्थास्थेम्नः ते मध्यस्य चिरं कुशलं भवतु ॥

मध्येस्येत्यवमादिप्रयोगाः सहृदयहृदयाह्लादकारिणो महाकविशिक्षाभ्याससमासादिताः । एतादृशप्रयोगनिपुणः महाकविरित्युच्यते ॥

अत्रोपमालङ्कारः, भग्ननदीकूलवर्तिमहीरुहशिखामूलिकासाम्यं मध्यस्येति ॥ ७९ ॥

*** सरला ***

**निसर्गेति । निसर्गक्षीणस्य** स्वभावतः अत्यन्तकृश, **स्तनतटभरेण** दोनों स्तन तटों के भार से अत्यन्त, **क्लमजुषः** खेद प्राप्त करने वाले, **नमन्मूर्त्तेः नारीतिलक !** स्त्री रत्नभूते, **शनकैः** स्तोक रूप में, **त्रुट्यत इव** विद्यमान की तरह, **चिरं** बहुत काल तक, **ते** आपके, **मध्यस्य** कटिभाग का, **त्रुटिततटिनीतीरतरुणा** भग्न होने वाले नदी के तीर पर रहने वाले वृक्ष के समान, **समावस्थास्थेम्नः** उसके समान अवस्था में भी स्थिर रहने वाले, **भवतु** होवे, **कुशलं** क्षेम टूटने का अभाव, **शैलतनये !** हे पार्वति ! ।

**पदयोजना का अर्थ**—हे शैलतनये ! हे नारीतिलक ! स्वभावतः अत्यन्त क्षीण स्तनतट के भार से अत्यन्त खेद प्राप्त करने वाले अतएव झुके हुये होने के कारण, कहीं धीरे-धीरे ये ऊपर से टूट न जाँय, इस प्रकार तथा भग्न होते हुये नदी के तट पर भग्न होने से वहाँ स्थित वृक्ष के मूल भाग से टूटने जैसी अवस्था प्राप्त होकर भी चिरकाल तक वहाँ स्थिर रहने के समान स्थिर आपके मध्य भाग का चिरकाल तक क्षेम (कुशल) हो ।

'मध्यस्य' इत्यादि प्रयोग सहृदयों के हृदय में आह्लाद उत्पन्न करने वाले हैं जिसे महाकवि ने शिक्षा के अभ्यास से प्राप्त किया है । ऐसे ही प्रयोगनिपुण विद्वान् महाकवि कहे जाते हैं ।

यहाँ उपमा अलङ्कार है। गिरते हुये नदी के तट के वृक्ष के शिखा और मूल से मध्यभाग की उपमा दी गई है ॥ ७९ ॥

**ध्यान—नि = न् + इ। श्लोकस्थ वर्णबीज 'नि' का ध्यान—**

**न—** दलिताञ्जनवर्णाभां ललज्जिह्वां सुलोचनाम्।
चतुर्भुजां चकोराक्षीं चारुचन्दनचर्चिताम् ॥
कृष्णाम्बरपरीधानां ईशद्धास्यमुखीं सदा।
एवं ध्यात्वा नकारं तु तन्मन्त्रं दशधा जपेत् ॥
नकारं शृणु चार्वङ्गि रक्तविद्युल्लताकृतिः।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली ॥
त्रिगुणाशक्तिसंयुक्तं हृदि भावय पार्वति।

**इ—** इकारं परमानन्दं सुगन्धं कुंकुमच्छविः।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये ॥
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम् ॥
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गता भवेत्।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत् ॥
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम्।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम् ॥
चतुर्भुजां च वरदां हरिचन्दनभूषिताम्।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत् ॥

**बीजाक्षर**—'नि'; जप-संख्या—१०००; जप-स्थान—आज्ञाचक्र; होम—मधु, पायस, देवीपुष्प और बिल्वपत्र से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—६।

**सम्मोहन यन्त्र**

क्लीं
सर्वजनमोहनम्

**भावार्थ**—हे शिवे ! आपकी अत्यन्त क्षीण कटि का सदैव कुशल हो, जो स्वभावतः क्षीण है और इतनी सुकुमार है कि नाभि (के नीचे) तथा कमर पर टूटकर गिर पड़ती-सी दीखती है और जिसकी दृढ़ता नदी-तीर के भग्न वृक्षवत् अनिश्चित है। नदी-तीर का वृक्ष कभी भी नदी की धार में बह जा सकता है ॥ ७९ ॥

**कुचौ सद्यस्स्विद्यत्तटघटितकूर्पासभिदुरौ**
**कषन्तौ दोर्मूले कनककलशाभौ कलयता।**
**तव त्रातुं भङ्गादलमिति वलग्नं तनुभुवा**
**त्रिधा नद्धं देवि त्रिवलि लवलीवल्लिभिरिव ॥ ८० ॥**

**लक्ष्मीधरा—कुचौ** स्तनौ, **सद्यः** तदानीमेव, **स्विद्यत्तटघटितकूर्पासभिदुरौ** स्विद्यन्तौ स्वेदवन्तौ तटौ पार्श्वौ तयोर्घटितस्य कूर्पासस्य भिदुरौ । 'कर्मकर्तरि कुरच्' इत्यत्र कर्तर्यपि कुरच् । रक्षितस्तु—'कर्मणि कर्तरि च कुरच्' इति व्याचष्टे । 'सद्यस्तनघटितकूर्पासभिदुरौ' इति पाठे सद्यस्तनं तदानीन्तनं नूतनत्वेन घटितं कूर्पासकं तस्य भिदुरौ । प्रतिक्षणं प्राणेश्वरस्य सदाशिवस्य रूपानुसन्धानेन उत्सिक्तावयवैर्भिद्यते सन्धिबन्धेषु कञ्चुलिकेति भावः । **कषन्तौ** निकषन्तौ **दोर्मूले** कक्षप्रान्तदेशे, **कनककलशाभौ** कनककलशयोर्हेमकुम्भयोरिव आभा सौभाग्यं ययोस्तौ, **कलयता** रचयता निर्मिमाणेन, **तव** भवत्याः, **त्रातुं** रक्षितुं वलग्नमिति शेषः । यद्वा—प्रथमान्तस्य वलग्नशब्दस्य अत्र कर्मत्वेनान्वयः । **भङ्गात्** स्तनभरजनितात् **अलमिति** अलंशब्दोऽत्र वारणार्थः । भङ्गो मा भूदित्यर्थः । **वलग्नं** मध्यप्रदेशं, **तनुभुवा** मन्मथेन, **त्रिधा** त्रिप्रकारेण, **नद्धं** बद्धं, **देवि !** दीव्यन्ति ! भगवति ! **त्रिवलि** तिस्रो वलयो विभङ्गाः यस्य तत् । **लवलीवल्लिभिरिव** लवलीनां वल्लयः ताभिः । पीतवल्ली लवली, तत्पुष्पाणि श्वेतानि । अकारादिनिघण्टौ तु लवलीत्युक्त्वा तल्लता वनकुलत्थलतेत्युक्तम् । यथात्रापि स्वीकार्यम् । इवशब्दः सम्भावनायां, ध्रुवमित्यर्थः । इवशब्दस्य सम्भावनाद्योतकत्वमप्यस्तीति पूर्वमेवोक्तम् ।

**अत्रेत्थं पदयोजना**—हे देवि! सद्यः स्विद्यत्तटघटितकूर्पासभिदुरौ दोर्मूले कषन्तौ कनककलशाभौ कुचौ कलयता तनुभुवा भङ्गादलमिति वलग्नं त्रातुं त्रिवलि तव वलग्नं लवलीवल्लिभिः त्रिधा नद्धमिव ।

अत्र उत्प्रेक्षालङ्कारः, त्रिवलीनां लवलीवल्लीत्वेन सम्भावनात् । पूर्वार्धे अतिशयोक्तिरलङ्कारः, भगवत्याः कुचनिर्माणे मन्मथस्यैवाधिकारो न जरद्ब्रह्मण इति जरद्ब्रह्मनिर्माणसम्बन्धेऽप्यसम्बन्धोक्त्या अभेदाध्यवसायः कविकृतवस्तुकृतयोः सौन्दर्ययोरेवेति । उभयोरङ्गाङ्गिभावेन सङ्करः । **नन्वेवं** कुचौ रचयता मन्मथेनेत्यनुवाद्यविशेषणमहिम्ना मन्मथकर्तृत्वस्य सिद्धवदनुमानात् कुचनिर्माणे वर्तमानसम्बन्धाभावात् असम्बन्धे सम्बन्धोक्तेरप्याञ्जस्यमेवेति चेत्—**मैवम्;** कुचौ कनककलशाभौ कलयतेति शतृप्रत्ययेन वर्तमानार्थेन कुचकरणस्य वर्तमानकालसम्बन्धप्रतीतेरसम्बन्धे सम्बधोक्तिराञ्जसीति न वाच्यम् । भूतकालसम्बन्धेऽपि भूतकालक्रियावाचकाख्यातान्तधातुप्रयोगे युज्यते सम्बन्धेऽप्यसम्बधकथनं न त्वनुवाद्यगतत्वेन सिद्धवदनुवादे ॥ ८० ॥

*** सरला ***

**कुचाविति । कुचौ** दोनों स्तन, **सद्यः** उसी समय, **स्विद्यत्तटघटितकूर्पासभिदुरौ** पार्श्वभाग के स्वेद युक्त हो जाने से कोने पर फट जाने वाले । यहाँ कर्मकर्त्तरि कुरच से कर्त्ता में कुरच् प्रत्यय है, अमरकोष के टीकाकार रक्षित ने कर्म के कर्त्ता हो जाने पर कुरच् प्रत्यय होता है ऐसा व्याख्यान किया है । प्रतिक्षण प्राणेश्वर सदाशिव के रूप का ध्यान करने से स्वेद युक्त शरीरावयवों से सन्धि स्थान पर कञ्चुलिका फट जाती है यह भाव है । **कषन्तौ** कसो **दोर्मूले** काँख के प्रान्त प्रदेश में, **कनककलशाभौ** सुवर्णनिर्मित कलश की आभा के समान आभा वाले, **कलयता** रचना करते हुये, **तव** आपके, **त्रातुं** कटिभाग की रक्षा करने के लिये, **भङ्गात्** स्तन के भार से उत्पन्न होने वाले, **अलमिति** यहाँ अलं शब्द वारण के अर्थ में प्रयुक्त है अर्थात् कहीं टूट कर गिर न जायँ । इसे रोकने के लिये **वलग्नं** शरीर का मध्यभाग अर्थात्

कटिप्रदेश, **तनुभुवा** कामदेव ने, **त्रिधा** तीन प्रकार से, **नद्धं** बाँध दिया है। देवि ! प्रकाशित करने वाली ! हे भगवति !, **त्रिवलि** तीन विभङ्गों वाली, **लवलीवल्लिभिरिव** लवलियों की लताओं से, पीतवल्ली लवली है, उसके फूल श्वेत होते हैं। अकारादि निघण्टु में 'लवली' इतना कह कर 'तल्लता वनकुलत्थलता' ऐसा कहा है। जैसे वहाँ कहा है उसी प्रकार यहाँ भी समझना चाहिए। **इव** शब्द सम्भावनार्थक है जिसका अर्थ 'निश्चय' है इव शब्द सम्भावना अर्थ में भी प्रयुक्त होता है, यह बात पहले भी कह आये हैं।

**पदयोजना का अर्थ**—काँखों की रगड़ से तत्क्षण सिकुड़न आने के कारण जिनके किनारे पर से अंगिया फट गई हैं ऐसे दोनों काँखों में बँधे हुये कनक कलश की कान्ति के समान कान्ति वाले आपके कुच-कलश के निर्माण करने वाले कामदेव ने कहीं इनके भार से लग्न प्रदेश (कटिभाग) टूट न जावें इसलिये उसे बचाने के लिये त्रिवली युक्त आपके कटिभाग को मानों लवली की लता से तीन फेरे में लपेट कर बाँध रखा है।

त्रिवली में लवली वल्ली की सम्भावना के कारण यहाँ उत्प्रेक्षा अलङ्कार है। पूर्वार्ध में भगवती के कुच निर्माण में मात्र कामदेव का ही अधिकार है। बूढ़े ब्राह्मदेव बावा का नहीं। यहाँ उसमें जरद्ब्रह्म का निर्माण सम्बन्ध होने पर भी सम्बन्धाभाव कहा गया है। इसलिये अतिशयोक्ति अलङ्कार है। दोनों में अङ्गाङ्गिभाव सम्बन्ध होने से सङ्कर है। यदि कहा जाय कि 'कुचौ रचयता मन्मथेन' इस प्रकार के अनुवाद्य विशेषण की महिमा से मन्मथकर्तृत्व इस सिद्धियुक्त अनुवाद से कुचनिर्माण में वर्त्तमान का सम्बन्ध न होने से असम्बन्ध में सम्बन्धोक्ति भी उचित है, तो यह कहना ठीक नहीं है। 'कुचौ कनक कलशाभौ कलयता' यहाँ शतृप्रत्यय होने से वर्त्तमान अर्थ में कुच निर्माण के वर्त्तमान काल के सम्बन्ध की प्रतीति से असम्बन्ध में सम्बन्ध की उक्ति उचित है, तो यह भी नहीं कह सकते। 'भूतकाल' के सम्बन्ध में भी भूतकाल की क्रिया के वाचक आख्यातान्त धातुप्रयोग उचित ही है। यहाँ सम्बन्ध में असम्बन्ध का कथन है, अनुवाद्य में रहने के कारण सिद्ध हुये अनुवाद में नहीं ॥ ८० ॥

**ध्यान**—'क'। श्लोकस्थ **वर्णबीज 'क' का ध्यान** इस प्रकार है—

**क**— जपापावकसिन्दूरसदृशीं कामिनीं पराम्।
चतुर्भुजां त्रिनेत्रां च बाहुवल्लीविराजिताम्॥
कदम्बकोरकाकारः स्तनयुग्मविराजिताम्।
रत्नकङ्कणकेयूरहारनूपुरभूषिताम्॥
एवं ककारं ध्यात्वा तु तन्मन्त्रं दशधा जपेत्।
शङ्खकुन्दसमा कीर्तिर्मात्रा साक्षात्सरस्वती॥
कुण्डली चांकुशाकारा कोटिविद्युल्लताऽऽकृतिः।
कोटिचन्द्रप्रतीकाशो मध्ये शून्यः सदाशिवः॥
शून्यगर्भस्थिता काली कैवल्यपददायिनी।
अर्थश्च जायते देवि तथा धर्मश्च नान्यथा॥
ककारः सर्ववर्णानां मूलप्रकृतिरेव च।
कामिनी या महेशानि स्वयं प्रकृतिसुन्दरी॥
माता सा सर्वदेवानां कैवल्यपददायिनी।
ऊर्द्ध्वकोणे स्थिता वामा ब्रह्मशक्तिरितीरिता॥

वामकोणे स्थिता ज्येष्ठा विष्णुशक्तिरितीरिता ।
दक्षकोणे स्थिता शक्तिः श्रीरौद्री संहाररूपिणी ॥
ज्ञानात्मा सा तु चार्वङ्गी चतुःषष्ट्यात्मकं कुलम् ।
इच्छाशक्तिभवेद्ब्रह्मा(दुर्गा) विष्णुश्च ज्ञानशक्तिमान् ॥
क्रियाशक्तिर्भवेद्रुद्रः सर्वप्रकृतिमूर्तिमान् ।
आत्मविद्याशिवैस्तत्त्वैः पूर्णा मात्रा प्रतिष्ठिता ॥
आसनं त्रिपुरा देव्याः ककारः पञ्चदैवतः ।
ईश्वरो यस्तु देवेशि त्रिकोणे तत्त्वसंस्थितः ॥
त्रिकोणमेतत्कथितं योनिमण्डलमुत्तमम् ॥
कैवल्यं प्रपदे यस्याः कामिनी सा प्रकीर्तिता ।
एषा सा कादिविद्या चतुर्वर्गफलप्रदा ॥

उ— पीतवर्णां त्रिनयनां पीताम्बरधरां पराम् ॥
द्विभुजां जटिलां भीमां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
उकारं परमेशानि अधःकुण्डलिनी स्वयम् ।
पीतचम्पकसङ्काशं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम् ॥

**बीजाक्षर**—'कु'; जप-संख्या—१०००; जप-स्थान—आज्ञाचक्रः होम—मधु, पायस, देवीपुष्प और बिल्वपत्र से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक पाठ-संख्या—१०; श्लोक पाठ-आहुति—६ ।

**स्तम्भन यन्त्र**

**भावार्थ**—हे भगवति ! आपकी त्रिवली युक्त कटि को श्रीभगवान् कामदेव ने लवलीवल्लि-लता से तीन बार कस कर बाँधा है, जिससे वह टूट न जाय । उन मकरध्वज ने आपके कनककलशोपम कुचद्वय से (प्रस्वेद के कारण) वस्त्र हटाकर आपको कुक्षि में रगड़ने पर बाध्य किया है ।

**विमर्श**—इस श्लोक में मदनोन्माद से पसीना उत्पन्न होने के कारण वक्ष से वस्त्र हटाकर बगल से पसीना पोंछने का भाव कहा गया है ॥ ८० ॥

**गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजात्**
**नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे ।**
**अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं**
**नितम्बप्राग्भारस्स्थगयति लघुत्वं नयति च ॥ ८१ ॥**

**लक्ष्मीधरा**—**गुरुत्वं** गौरवं, **विस्तारं** आयामपरिणाहं, **क्षितिधरपतिः** हिमवान्, **पार्वति** ! शैलतनये ! **निजात्** स्वकीयात्, **नितम्बात्** नितम्बप्रदेशात्, **आच्छिद्य** अवयुत्य,

**त्वयि** भवत्यां, **हरणरूपेण** हरणात्मना, **निदधे** समर्पितवान् । हरणं नाम स्त्रीधनं—अध्यग्न्यध्यावाहनिकम् । यथोक्तं **हारीतेन**—

**अध्यग्न्यध्यावाहनिकं हरणं स्त्रीधनं स्मृतम्** ॥ इति ।

**अस्यार्थः**—अग्निमधिकृत्य दत्तमध्यग्नि विवाहसमये अग्निसमीपे पित्रादिभिर्यद्दत्तं तदध्यग्नि, विवाहानन्तरं वधूं गृहीत्वा स्वगृहं प्रतिजिगमिषावसरे पित्रादिभिर्यद्दत्तं तदध्यावाहनिकमिति । एतदुभयं हरणशब्दवाच्यमिति मन्वादिभिः स्मृतमिति ।

अत: तस्मात्कारणात्, **ते** तव **विस्तीर्णः** आयामत:, **गुरुः** पृथु:, **अयं** परिदृश्यमान:, **अशेषां** कृत्स्नां, **वसुमतीं** पृथ्वीं **नितम्बप्राग्भारः** नितम्बस्य प्राग्भार: अतिशय:, **स्थगयति** छादयति । **लघुत्वं** लाघवं **नयति** प्रापयति **च** । चकार: शङ्काच्छेदे अस्मिन्नर्थे न शङ्कितव्यमित्यर्थ: ।

**अत्रेत्थं पदयोजना**—हे पार्वति ! क्षितिधरपति: गुरुत्वं विस्तारं निजात् नितम्बाद्-आच्छिद्य त्वयि हरणरूपेण निदधे । अत: ते अयं नितम्बप्राग्भार: गुरु: विस्तीर्णस्सन् अशेषां वसुमतीं स्थगयति लघुत्वं नयति च ।

विस्तारेण स्थगनं गुरुत्वेन लाघवापादनमित्यर्थ: । प्रपञ्चे वसुमत्यामेव गुरुत्वविस्तारौ एकत्र स्थितौ तयोस्तिरस्करणमेकत्र स्थिताभ्यां गुरुत्वविस्ताराभ्यामेव विधेयमिति हिमाद्रिगत-गुरुत्वविस्तारौ हिमाद्रेः भूधरत्वात् भूमिगतगुरुत्वविस्ताराभ्यामधिकाविति भावेन गृहीत्वा तत्तिरस्करणमिति क्षितिधरपति: अशेषां वसुमतीमिति च पदं प्रयुञ्जानस्य भाव: ।

अत्रातिशयोक्तिरलङ्कार:, हिमाद्रिगतगुरुत्वविस्तारयो: पार्वतीनितम्बगतगुरुत्वविस्तार-योर्भेदेऽप्यभेदेनाध्यवसानात् । सेयं भेदे अभेदनिबन्धनादतिशयोक्तिरलङ्कार: ॥ ८१ ॥

## * सरला *

**गुरुत्वमिति** । **गुरुत्वं** गौरव, **विस्तारं** आयाम का परिणाह, **क्षितिधरपतिः** हिमवान्, **पार्वति** ! हे शैलतनये, **निजात्** अपने, **नितम्बात्** नितम्बप्रदेश से, **आच्छिद्य** अलग कर, **त्वयि** आपमें, **हरणरूपेण** हरणात्मक रूप से, **निदधे** समर्पित किया । हरण स्त्री धन को कहते हैं । जैसा कि **हारीत** ने कहा है—

**अद्यानीति** । अग्नि को साक्षी कर जो दिया जाय वह अध्यग्नि कहा गया है ।

अर्थात् विवाह काल में अग्नि के समीप पिता के द्वारा दिये गये धन को 'अध्यग्नि' कहते हैं । विवाह के बाद वधू को अपने घर भेजने के अवसर पर 'पिता के द्वारा दिये गये धन' को अध्यावाहनिक कहते हैं । ये दोनों ही 'हरण' कहे जाते हैं—ऐसा मनु आदि स्मृतिकारों ने कहा है । **अतः** इस कारण, **ते** आपका, **विस्तीर्णः** आयाम से, **गुरुः** पृथु, **अयं** यह दिखाई पड़ने वाला, **अशेषां** सम्पूर्ण, **वसुमतीं** पृथ्वी को, **नितम्बप्राग्भारः** नितम्ब का प्राग्भारातिशय, **स्थगयति** आच्छादित करता है, **लघुत्वं** हल्कापन, लाघव, **नयति** प्राप्त करता है, **च** यहाँ चकार शङ्का के दूर करने के अर्थ में प्रयुक्त है, अर्थात् इस बात में सन्देह नहीं करना चाहिए, इसका यही अर्थ है ।

**पदयोजना का अर्थ**—हे पार्वति ! पर्वतराज हिमालय ने आपको अपने नितम्ब भाग से अलग कर गुरुत्व और विस्तार दोनों दहेज रूप में दिया है, इसलियें आपके नितम्ब का

भारातिशय और गुरुत्व विस्तीर्ण होने के कारण इस समस्त पृथ्वी को आच्छादित करता है और उसे लघु भी बना देता है।

विस्तृत होने के कारण आच्छादित करता है और गुरु होने के कारण उसे लघु भी बनाता है—यह अर्थ है। इस प्रपञ्च में वसुमती में सबसे अधिक गुरुत्व और सबसे अधिक विस्तार एक जगह प्राप्त है। किन्तु उन दोनों का तिरस्कार एकत्र स्थित 'गुरुत्व और विस्तार' किं बहुना, उसके पृथ्वी के धारण करने के कारण भूमि में रहने वाले गुरुत्व और विस्तार की अपेक्षा अधिक है—इस भाव को लेकर उसका तिरस्कार कहा गया है तथा 'क्षितिधरपतिः अशेषां वसुमतीं' इस पद के प्रयोग का यही भाव भी है।

यहाँ हिमाद्रि में रहने वाले गुरुत्व और विस्तार को पार्वती के नितम्ब में होने वाले गुरुत्व और विस्तार में भेद होने पर भी अभेद के अध्यवसाय के कारण अतिशयोक्ति अलङ्कार है। जैसा कि कहा गया है—यह वही अतिशयोक्ति अलङ्कार है जो भेद में भी अभेद का प्रतिपादन करे ॥ ८१ ॥

**ध्यान—गु = ग + उ। श्लोकस्थ वर्णबीज 'गु' का ध्यान—**

**ग—** दाडिमीपुष्पसङ्काशां चतुर्बाहुसमन्विताम्।
रक्ताम्बरधरां नित्यां रक्तालङ्कारभूषिताम् ॥
एवं ध्यात्वा गकारं तु तन्मन्त्रं दशधा जपेत्।
पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये ॥
तरुणादित्यसङ्काशां कुण्डलीं प्रणमाम्यहम्।
अग्राकुञ्चितरेखा या गणेशी सा प्रकीर्त्तिता ॥
ततो दक्षगता या तु कमला तत्र संस्थिता।
अधोगता गता या तु तस्यामीशः सदा वसेत् ॥

**उ—** पीतवर्णां त्रिनयनां पीताम्बरधरां पराम् ॥
द्विभुजां जटिलां भीमां सर्वसिद्धिप्रदायिनीम्।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
उकारं परमेशानि अधःकुण्डलिनी स्वयम्।
पीतचम्पकसङ्काशं पञ्चदेवमयं सदा।
पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम् ॥

**बीजाक्षर**—'गु'; जप-संख्या—१०००; जप-स्थान—आज्ञाचक्रः होम—मधु, पायस, देवीपुष्प और बिल्वपत्र से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—६।

**अग्निस्तम्भन यन्त्र**

**भावार्थ**—हे भगवति! श्री पर्वतराज ने हरण (कन्याधन) रूप से आपको अपने नितम्ब से निकाल कर गुरूत्व तथा विस्तार दोनों प्रदान किया है। अतः ये

आपके नितम्ब चौड़े तथा भारी हैं तथा इस सारी पृथ्वी के गुरुत्व की महिमा को हरण कर उसे लघु बना देते हैं ॥ ८१ ॥

ऊरू जानुनी च सकृदेव वर्णयति—

**करीन्द्राणां शुण्डान् कनककदलीकाण्डपटलीं**
**उभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवति ।**
**सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते**
**विधिज्ञे जानुभ्यां विबुधकरिकुम्भद्वयमसि ॥ ८२ ॥**

**लक्ष्मीधरा—करीन्द्राणां** गजेन्द्राणां, **शुण्डान्** करदण्डान्, शुण्डाशब्दस्य पुल्लिङ्गताप्यस्ति इति रक्षितमतम् । **कनककदलीकाण्डपटलीं** सुवर्णरम्भास्तम्भसंहतिं, **उभाभ्यामूरुभ्याम् उभयं** करिकररम्भास्तम्भात्मकं, **अपि निर्जित्य** विजित्य, **भवति** । त्वं, **सुवृत्ताभ्यां** शोभनाभ्यां, वर्तुलाभ्यां **पत्युः** परमेश्वरस्य, **प्रणतिकठिनाभ्यां** प्रणतिभिः कठिनाभ्यां प्रणतिदशायां जान्वोः भूमिस्पर्शादित्यर्थः । **गिरिसुते !** हिमाद्रितनये, **विधिज्ञे !** विधिं वेदार्थं जानातीति विधिज्ञा सर्वज्ञेत्यर्थः । यद्वा—वेदार्थानुष्ठात्री । अत एव पत्युर्नमस्कारः प्रतिदिनं वैध इति कृतः न तु तस्याधिक्यानुरोधादिति नर्मवचनम् । तस्याः सम्बुद्धिः । **जानुभ्यां विबुधकरिकुम्भद्वयं** दिग्दन्तिकुम्भस्थलद्वितयं **असि** भवसि ॥

**अत्रेत्थं पदयोजना**—हे विधिज्ञे ! गिरिसुते ! भवति ! करीन्द्राणां शुण्डान् कनककदलीकाण्डपटलीम् उभाभ्यामूरुभ्यां उभयमपि निर्जित्य सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां जानुभ्यां विबुधकरिकुम्भद्वयमपि निर्जित्य असि वर्तसे स्फुरसीति यावत् ॥

अत्र भवच्छब्दयोगेऽपि असीति मध्यमपुरुष एव भवति, तस्य सम्बोधनमात्रपरत्वात् । अत्रेदं तत्त्वम्—भवच्छब्दो द्विविधः सम्बोध्यपरः सम्बोधनमात्रपरश्चेति । सम्बोध्यपरत्वे भवच्छब्दस्य युष्मदर्थत्वाभावात् 'युष्मद्युपपदे' इत्यादिना प्राप्त्यभावात् शेषे प्रथम एव तद्योगे । यथा—

**'सूते जगन्ति भवती भवती बिभर्ति**
**जागर्तितत्क्षयकृते भवती भवानि'** ॥ इत्यादि । (चर्चास्तवः ४)

यदा—सम्बोधनमात्रपरत्वं भवच्छब्दस्य तदा युष्मदर्थत्वात् मध्यमपुरुषः स्यादेव । यथा 'भवति भिक्षां देहि' इति । तत्र सम्बोधनमात्रपरत्वेऽपि ङीप्प्रत्ययः गौरादौ भवतेः प्रातिपदिकस्य पाठात् सिद्धः । अत एव **रक्षित** आह—

'भवतु प्रातिपादिकसामर्थ्यात् स्त्रीलिङ्ग एव भवच्छब्दस्य सम्बोधनमात्रपरत्वम्' इति ।

अयमाशयः—भवच्छब्दस्य सर्वनामसु 'भवतु' इति प्रातिपादिकग्रहणात् 'उगितश्च' इति ङीप् सिद्ध एवेति अत्र गौरादौ पठितस्य भवच्छब्दस्य वैयर्थ्यात् स्त्रीत्व एव सम्बोधनमात्रपरत्वमिति ज्ञापयतीति ॥

नन्वेवं **रक्षितेनैव** 'युष्मदस्मदो स्त्रीपुत्रपुंसकेषु तुल्यलिङ्गत्वं, सम्बोधनमात्रपरत्वात् युष्मदस्मदोः, एकद्विबहुत्वपरत्वं तु सम्बोध्यलक्षणतया । न च लिङ्गलक्षणा, आकांक्षाभावात्' इत्युक्तम् । तद्वद्भवच्छब्दस्याप्यलिङ्गत्वं प्राप्नोतीति । मैवं, दत्तोत्तरत्वादित्यलमति-

विस्तरेण । यत्तु 'त्वामस्मि वच्मि विदुषां' इति श्लोकव्याख्यानावसरे काव्यप्रकाशिका-टीकाकारेण भास्करेणोक्तं तदमूलमिति नोपन्यस्य दूषितम् ॥

अत्रोपमालङ्कारस्पष्ट इव ॥ ८२ ॥

## * सरला *

अब भगवती के दोनों ऊरु और जानु का एक साथ वर्णन करते हैं—

**करीन्द्राणामिति । करीन्द्राणां** बड़े-बड़े गजराजों के, **शुण्डान्** करदण्ड सूँड, शुण्ड शब्द पुल्लिङ्ग भी है, ऐसा रक्षित का मत है । **कनककदलीकाण्डपटलीं** सुवर्ण निर्मित कदली स्तम्भ की संहति, **उभाभ्यामूरुभ्यामुभयं** करिकर रम्भास्तम्भात्मक, **अपि निर्जित्य** विजित करके, **भवति** आप, **सुवृत्ताभ्यः** शोभा संयुक्त वर्त्तुलाकार, **पत्युः** परमेश्वर के, **प्रणतिकठिनाभ्यां** प्रणाम करने से कठिन हो जाने वाले, प्रणाम करने की दशा में जानुओं के द्वारा पृथ्वी का स्पर्श होने के कारण, **गिरिसुते** हे हिमाद्रिसुते ! हे हिमाद्रितनये !, **विधिज्ञे** विधि अर्थात् वेदार्थ को जानने वाली होने के कारण विधिज्ञा, उसके सम्बोधन का रूप है, अर्थात् सर्वज्ञा, अथवा वेदार्थ के अनुसार अनुष्ठान करने वाली, पति को नमस्कार करने का प्रतिदिन विधान है इसलिये वेधकर्म करती है, पति उससे अधिक है इस दृष्टि से नहीं, **जानुभ्यां विबुधकरिकुम्भद्वयं** दोनों जानुओं से दिग्गजों के दोनों कुम्भस्थल जीतकर, **असि** आप सुशोभित हो ।

**पदयोजना का अर्थ**—हे विधिज्ञे ! हे गिरिसुते ! हे भवति ! गजराजों के शुण्ड को तथा सुवर्ण निर्मित कदली स्तम्भ की संहति को अपने दोनों ऊरुओं से दोनों को जीत कर अपने शोभायुक्त गोले किन्तु पति के नमस्कार में कठिन अपने दोनों जानुओं से दिग्गजों के दोनों कुम्भों को भी जीत कर आप सुशोभित हो रही हैं ।

यहाँ भवच्छब्द के योग में भी 'असि' यह मध्यमपुरुष का प्रयोग ठीक ही हैं क्योंकि 'भवति' यह सम्बोधन का रूप है जिसका तात्पर्य इस प्रकार है—'भवत्' शब्द दो प्रकार का है—एक सम्बोध्यपरक एवं दूसरा सम्बोधनपरक । जहाँ सम्बोध्यपदवाला 'भवत्' शब्द का प्रयोग है वहाँ युष्मदर्थ न होने से 'युष्मद्युपपदे' इस सूत्र की प्राप्ति नहीं है । अतः उसमें 'शेषे प्रथमः' सूत्र से प्रथमपुरुष की क्रिया का प्रयोग होता है । जैसे **चर्चास्तव** में कहा है—**सूते जगन्ति भवती भवती बिभर्त्ति, जागर्त्ति तत्क्षयकृते भवती भवानि'** इत्यादि में युष्मदर्थ नहीं है ।

जब सम्बोधन मात्र परक 'भवत्' शब्द का प्रयोग होता है तो वहाँ उसका युष्मदर्थ होने के कारण मध्यमपुरुष की क्रिया होगी ही । जैसे 'भवति भिक्षां देहि' इत्यादि । उसके सम्बोधन मात्र परक होने पर गौरादि गण में भवत् शब्द का पाठ होने से ङीप् प्रत्यय हो कर 'भवती' यह प्रयोग सिद्ध होता है । इसीलिये रक्षित कहते हैं—'भवतु' इस प्रातिपदिक सामर्थ्य से स्त्री लिङ्ग में ही भवच्छन्द सम्बोधनमात्रपरक होता है । इसका आशय इस प्रकार है—'भवत्' शब्द का सर्वनाम में 'भवतु' इस प्रातिपदिक ग्रहण से 'उगितश्च' सूत्र से ङीष् कर लेने पर 'भवती' शब्द जब सिद्ध हो जाता है तव गौरादि गण में उसके पाठ की आवश्यंकता ही क्या है । अतः वह व्यर्थ होकर कल्पना करता है कि भवती इस स्त्री लिङ्ग के शब्द का प्रयोग स्त्री लिङ्ग में वह भी सम्बोधन मात्र में होता है ।

यहाँ यह सन्देह होता है कि **रक्षित** ने 'युष्मदस्मत् शब्दों का स्त्रीलिङ्ग, पुल्लिङ्ग तथा नपुंसक लिङ्ग में एक समान लिङ्ग होता है। युष्मदस्मत् शब्दों का एकवचन, द्विवचन और बहुवचन में जो रूप होता है वह सम्बोध्य की लक्षणा द्वारा होता है। वहाँ लिङ्ग लक्षणा नहीं होती। क्योंकि उसमें आकांक्षा नहीं है'—ऐसा कहा है। उसी प्रकार 'भवत्' शब्द में भी अलिङ्गता प्राप्त होती है—तो यह कहना ठीक नहीं है क्योंकि इसका उत्तर हम पहले ही दे चुके हैं क्योंकि अनावश्यक विस्तार उचित नहीं है। जो **'त्वामस्मि वच्मि विदुषां समवायोऽत्र विद्यते'** इस श्लोक की व्याख्या के काल में काव्यप्रकाश के टीकाकार भास्कर ने कहा है वह अमूल है। इसलिये हमने यहाँ उपन्यस्त न कर उसे दूषित नहीं किया है।

यहाँ उपमालङ्कार स्पष्ट है ॥ ८२ ॥

**ध्यान**—'क'। श्लोकस्थ **वर्णबीज 'क' का ध्यान** इस प्रकार है—

क— जपापावकसिन्दूरसदृशीं कामिनीं पराम्।
चतुर्भुजां त्रिनेत्रां च बाहुवल्लीविराजिताम्॥
कदम्बकोरकाकारः स्तनयुग्मविराजिताम्।
रत्नकङ्कणकेयूरहारनूपुरभूषिताम् ॥
एवं ककारं ध्यात्वा तु तन्मन्त्रं दशधा जपेत्।
शङ्खकुन्दसमा कीर्तिर्मात्रा साक्षात्सरस्वती॥
कुण्डली चांकुशाकारा कोटिविद्युल्लताऽऽकृतिः।
कोटिचन्द्रप्रतीकाशो मध्ये शून्यः सदाशिवः॥
शून्यगर्भस्थिता काली कैवल्यपददायिनी।
ककारः सर्ववर्णानां मूलप्रकृतिरेव च।
कामिनी या महेशानि स्वयं प्रकृतिसुन्दरी॥
माता सा सर्वदेवानां कैवल्यपददायिनी।
ऊर्द्ध्वकोणे स्थिता वामा ब्रह्मशक्तिरितीरिता॥
वामकोणे स्थिता ज्येष्ठा विष्णुशक्तिरितीरिता।
दक्षकोणे स्थिता शक्तिः श्रीरौद्री संहाररूपिणी॥
ज्ञानात्मा सा तु चार्वङ्गी चतुःषष्ट्यात्मकं कुलम्।
इच्छाशक्तिभवेद्ब्रह्मा(दुर्गा) विष्णुश्च ज्ञानशक्तिमान्॥
क्रियाशक्तिर्भवेद्रुद्रः सर्वप्रकृतिमूर्तिमान्।
आत्मविद्याशिवैस्तत्वैः पूर्णा मात्रा प्रतिष्ठिता॥
अर्थश्च जायते देवि तथा धर्मश्च नान्यथा॥
आसनं त्रिपुरा देव्याः ककारः पञ्चदैवतः।
ईश्वरो यस्तु देवेशि त्रिकोणे तत्त्वसंस्थितः॥
त्रिकोणमेतत्कथितं योनिमण्डलमुत्तमम्॥
कैवल्यं प्रपदे यस्याः कामिनी सा प्रकीर्तिता।
एषा सा कादिविद्या चतुर्वर्गफलप्रदा॥

**बीजाक्षर**—'क'; जप-संख्या—१०००; जप-स्थान—आज्ञाचक्र: होम—मधु, पायस, देवीपुष्प और बिल्वपत्र से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—६ ।

**जलगमनसामर्थ्यसिद्धिकर यन्त्र**

**भावार्थ**—हे हिमाद्रिसुते ! आपकी सुरम्य जङ्घाओं ने हाथी के शुण्ड तथा कनककदली-स्तम्भ इन दोनों को विजय कर लिया है । आपके गोल एवं कमनीय घुटनों ने, जो घुटने भगवान् शिव को नमस्कार करते-करते कठिन हो गये हैं, ऐरावत हाथी के सुरम्य कुम्भस्थल को भी हरा दिया है ॥ ८२ ॥

**पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते**
**निषङ्गौ जङ्घे ते विषमविशिखो बाढमकृत ।**
**यदग्रे दृश्यन्ते दशशरफलाः पादयुगली-**
**नखाग्रच्छद्मानः सुरमकुटशाणैकनिशिताः ॥ ८३ ॥**

**लक्ष्मीधरा—पराजेतुं** तिरस्कर्तुं **रुद्रं** हरं, **द्विगुणशरगर्भौ** द्विगुणीकृताः शराः पञ्चबाणाः गर्भे ययोस्तौ । **गिरिसुते** ! पार्वति ! **निषङ्गौ** तूणीरौ, **जङ्घे** जङ्घाकाण्डौ, **ते** तव **विषिमविशिखः** पञ्चबाणः, **बाढं** ध्रुवं. **अकृत** कृतवान् । **यदग्रे** ययोः निषङ्गयोरग्रे, **दृश्यन्ते । दशशरफलाः** दशानां शराणां द्विगुणितानां पञ्चानामित्यर्थः, तेषां फलाः अयोमुखानि, **पादयुगलीनखाग्रच्छद्मानः** पादयोः प्रपदयोः युगली द्वितयं तस्या नखाग्राणां दशानां छद्म व्याजो येषां ते, **सुरमकुटशाणैकनिशिताः** सुराणां इन्द्रादीनां मकुटेष्वेव शाणेषु एकनिशिताः मुख्यतया उत्तेजिताः ।

**अत्रेत्थं पदयोजना**—हे गिरिसुते ! विषमविशिखः रुद्रं पराजेतुं द्विगुणशरगर्भौ निषङ्गौ ते जङ्घे अकृत बाढम् । यदग्रे पादयुगलीनखाग्रच्छद्मानः सुरमकुटशाणैकनिशिताः दश-शरफला दृश्यन्ते ॥

अत्र उत्प्रेक्षालङ्कारः, जङ्घयोः तूणीरतया सम्भावनात् । अपह्नवालङ्कारश्च, नखा-ग्राणां फलत्वेनापह्नवात् । अनयोस्संसृष्टिः, अपृथक्स्थित्या प्रयोज्यप्रयोजकभावावगतेः। विषमविशिखो बाढमकृतेत्यत्र अतिशयोक्तिरलङ्कारः, साधारणब्रह्मसृष्टिव्यतिरिक्तत्वेन प्रतीतेः । एतच्च पूर्वमेव स्पष्टीकृतं 'कुचौ सद्यः स्विद्यत्' इति (८०) श्लोकव्याख्यानावसरे । अलङ्कारेण अलङ्कारध्वनिरपि, द्विगुणशरगर्भौ दशशरफला इति पदद्वयेन पादाङ्गुलीनां शराणां च अभेदाध्यवसायप्रतीतेरित्यलम् ॥ ८३ ॥

## * सरला *

**पराजेतुमिति । पराजेतुं** तिरस्कृत करने के लिये, **रुद्रं** सदाशिव को, **द्विगुणशरगर्भौ** दुगुने पञ्चबाण अपने गर्भ में धारण किया है, जिन दोनों ने उसके, **गिरिसुते** ! हे पार्वति !, **निषङ्गौ** दो तूणीर, **जंघे** जंघा के काण्ड, **ते** आपके, **विषमविशिखः** पञ्चबाण **बाढं** निश्चय

ही, **अकृत** किया है, **यदग्रे** जिन दो निषङ्गों के आगे, **दृश्यन्ते** दिखाई पड़ रहे हैं, **दशशरफलाः** पञ्चशर बाण के दूने फल वाले अयोमुख—**पादयुगलीनखाग्रच्छद्मानः** दोनों पैरों के दश नखाग्रों के व्याज (बहाने) वाले **सुरमुकुटशाणैकनिशिताः** इन्द्रादि देवगणों के मुकुट रूप शाण पर मुख रूप से उत्तेजित किये गये।

**पदयोजना का अर्थ**—हे गिरिसुते! कामदेव ने रुद्र को पराजित करने के लिये अपने पञ्चबाण से दुगुने बाणों को रखने के लिये आपके दोनों जंघों को मानो दो तूणीर के रूप में स्थापित किया है, जिसके आगे दोनों पैरो में दश नखों के बहाने से इन्द्रादि देवताओं के मुकुट रूपी शाण पर उत्तेजित दश बाणों के अयोमुख फल दिखाई पड़ रहे हैं।

दोनों जाँघों को तूणीर रूप में सम्भावना किए जाने के कारण यहाँ उत्प्रेक्षालङ्कार है। नखाग्रों की फल रूप से अपह्नुति की गई है अतः अपह्नवालङ्कार भी है। दोनों मिलाने से संसृष्टि है। एकत्र रूप से स्थित होने पर भी प्रयोज्य-प्रयोजकभाव का ज्ञान होने के कारण 'विषमविशिखो बाढमकृता' यहाँ अतिशयोक्ति है, क्योंकि ब्रह्मसृष्टि से भिन्न रूप में जंघों को (तूणीर) बाणों के रखने का स्थान बताया गया है। यह बात पूर्व में भी 'कुचौ सद्यः स्विद्यत्' इस श्लोक (८०) की व्याख्या के अवसर पर स्पष्ट की गई है। अलङ्कार से अलङ्कार ध्वनि भी है। क्यों द्विगुणशरगर्भौ दशशरफलाः' इन दो पदों से पादाङ्गुलियों में शरों में अभेदाध्यवसाय की प्रतीति होती है॥ ८३॥

**ध्यान—'प'। श्लोकस्थ वर्णबीज 'प' का ध्यान—**

**प—** विचित्रवसनां देवीं द्विभुजां पङ्कजेक्षणाम्।
रक्तचन्दनलिप्ताङ्गीं पद्ममालाविभूषिताम्॥
मणिरत्नादिकेयूररत्नहारैकरविग्रहाम्।
चतुर्वर्गप्रदां नित्यां नित्यानन्दमयीं पराम्।
एवं ध्यात्वा पकारं तु तन्मन्त्रं दशधा जपेत्।
अतःपरं प्रवक्ष्यामि पकाराक्षरमव्ययम्।
चतुर्वर्गप्रदं वर्णं त्रिशक्तिसहितं प्रिये॥
पञ्चदेवमयं वर्णं शरच्चन्द्रमयप्रभम्॥
पञ्चप्राणमयं वर्णं स्वयं परमकुण्डली॥
त्रिगुणीसहितं वर्णं आत्मादितत्त्वसंयुतम्।
महामोक्षप्रदं देवि हृदि भावय पार्वति॥

सैन्यस्तम्भन यन्त्र

**बीजाक्षर**—'प'; जप-संख्या—१०००; जप-स्थान—आज्ञाचक्रः होम—मधु, पायस, देवीपुष्प और बिल्वपत्र से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—६।

**भावार्थ**—हे भगवति! श्री भगवान् रुद्र को युद्ध में जीतने की इच्छा वाले विषमविशिख कामदेव ने अपना पञ्चबाणात्मक निषङ्ग आपकी दोनों जङ्घाओं को बनाकर बाण द्विगुणित कर दिये हैं (अर्थात् एक जङ्घा-निषङ्ग में पाँच बाण

तथा दूसरे जङ्घा-निषङ्ग में पाँच)। हे भगवति ! उन दश बाणों के फल आपके युगल पद में नखरूप से दिख रहे हैं तथा उन चरणों में देवताओं के मुकुट-मणि का सदैव घर्षण होने से शरधार और भी अधिक पैनी होती जा रही है ॥ ८३ ॥

**श्रुतीनां मूर्धानो दधति तव यौ शेखरतया**
**ममाप्येतौ मातः शिरसि दयया धेहि चरणौ ।**
**ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी**
**ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ८४ ॥**

**लक्ष्मीधरा—श्रुतीनां** निगमानां, **मूर्धानः** शिरांसि, वेदान्ता इत्यर्थः । **दधति** धारयन्ति प्रतिपादयन्तीत्यर्थः । **तव** भवत्याः, **यौ** चरणौ पादौ, **शेखरतया** उत्तंसतया । यद्वा—श्रुतीनां श्रुतिवधूनां मूर्धानः श्रुतयः भगवतीपादाब्जं उत्तंसयन्ति । यथोक्तम्—श्रुतिवाक्यं शक्तिं प्रति **वशिष्ठेन**—

नमो देव्यै महालक्ष्म्यै श्रियै सिद्ध्यै नमो नमः ।
ब्रह्मविष्णुमहेशानवेदकैः पूजिताङ्घ्रये ॥

वेदकैरित्यत्र वेदानां कैः शिरोभिरिति । नमस्त्रिपुरसुन्दर्यै शिवायै विश्वमूर्तये । इत्यादि ॥

एवं स्तुता महादेवी श्रुतिभिः प्रीतमानसा ।
प्राह ताः प्रति तादृग्भिः वचोभिरमरेश्वरी ॥

इत्यादि **वसिष्ठसंहितायाम्** । **ममापि एतौ** चरणौ, **मातः** ! जननि ! **शिरसि** मूर्धनि, **दयया** कृपया, कृपाविष्टचित्तेनेत्यर्थः । **धेहि** निधेहि । **चरणौ** पादौ **ययोः** चरणयोः सम्बन्धि, **पाद्यं पाथः** पादनिर्णेजनजलम् । यद्यपि पाद्यमित्युक्ते पादसम्बन्धः प्रतीयते तथापि पाद्यमित्युक्ते पादप्रक्षालनार्हं पाद्यमित्यर्हतामात्रप्रतीतौ विशेषाकारेण ययोरित्यस्यान्वय इति न पौनरुक्त्यम् । **पशुपतिजटाजूटतटिनी** पशुपतेः शिवस्य जटाजूटे कपर्दे तटिनी गङ्गा, **ययोः** चरणयोः, **लाक्षालक्ष्मीः** लाक्षारसकान्तिः, **अरुणहरिचूडामणिरुचिः** अरुणश्चासौ हरिचूडामणिश्च कौस्तुभः तस्य रुचिः रक्तिमा ॥

**अयमर्थः**—प्रणयकोपशान्तये प्रणतस्य पशुपतेः जटाजूटवर्तिनी गङ्गा पादाग्रवर्तिनी आसीदिति गङ्गायाः पाद्यजलत्वं कथितम् । प्रतिदिनं सायंप्रातः सेवार्थं नमस्कुर्वाणस्य विष्णोः मकुटघटितकौस्तुभमणेः श्वेतवर्णस्य लाक्षारसप्रसादजन्योऽरुणिमेति ध्येयम् ॥

**अत्रेत्थं पदयोजना**—हे जननि! तव यौ चरणौ श्रुतीनां मूर्धानः शेखरतया दधति । हे मातः ! एतौ चरणौ ममापि शिरसि दयया धेहि । ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी ययोः लाक्षालक्ष्मीः अरुणहरिचूडामणिरुचिः ॥

एतदुक्तं भवति—भगवत्याः पादाम्बुजद्वितयस्य वेदमूर्धनि सदाशिवमूर्धनि विष्णुमूर्धन्येव सञ्चार इति मूर्धसञ्चारस्वाभाव्यमस्ति । अतो मम मूर्धन्यपि सञ्चरतु पादाम्बुजमिति प्रार्थनासामञ्जस्यमिति कवेरभिप्रायः । यद्वा—प्रपञ्चजनयित्र्याः सादाख्यायाः प्रपञ्चान्तःपातिनः हरिविरिञ्चिपशुपतिवेदान्ताः पादाम्बुजं शिरसि धारयन्ति तन्निर्णेजनजलेन पवित्रितगात्राः तन्महिम्ना तत्तदधिकारान् भजन्त इति युज्यत एवेति ॥

अत्र रूपकालङ्कारः स्पष्टः ॥ ८४ ॥

*** सरला ***

**श्रुतीनामिति । श्रुतीनां** निगमों के, **मूर्धानः** शिर, अर्थात् वेदान्त, **दधति** धारण करते हैं, प्रतिपादन करते हैं, **तव** उन आप के यौ चरणी जो पैर शेखरतया उत्तंस होने के कारण अथवा श्रुतीनां श्रुति रूप बन्धुओं के मूर्धानः श्रुतयः भगवती के पादाब्ज का उत्तंस (कर्णफूल) धारण करती है जैसा कि श्रुति के वाक्य भी हैं । **वशिष्ठ** ने शक्ति के प्रति कहा है—

देवी को नमस्कार है । महालक्ष्मी, श्री और सिद्धि को बारम्बार नमस्कार है । ब्रह्मा, विष्णु, महेशान और वेदज्ञों के द्वारा पूजित पादपद्मों वाली देवी को नमस्कार है । यहाँ 'वेदकैः' का तात्पर्य 'वेद के शिरों से' है । त्रिपुरसुन्दरी शिवा विश्वमूर्त्ति को नमस्कार है ।

इत्यादि श्रुतियों के द्वारा इस प्रकार स्तुति की जाने पर प्रसन्न हुई उन परमेश्वरी महाभगवती ने वैसे ही वचनों से उन श्रुतियों से कहा, इत्यादि वाक्य **वशिष्ठ संहिता** में कहे गये हैं । **ममापि एतौ** मेरे ऊपर भी इन दोनों, **मातः** हे जननि, **शिरसि** शिर पर, **दयया** कृपापूर्वक, कृपाविष्टचित्त से, **धेहि** रखो, **चरणौ** दोनों पैरों को, **ययोः** जिन चरणों के, **पाद्यं पाथः** पाद निर्णेजन जल को । यद्यपि 'पाद्यं' इस उक्ति से भी पाद सम्बन्ध की प्रतीति हो जाती है, तथापि 'पाद्यं' इस उक्ति से पादप्रक्षालन के योग्य पाद्य इस अर्हता मात्र की प्रतीति होगी । यहाँ विशेषरूप से 'ययोः' में अन्वय है, इसलिये पुनरुक्ति नहीं है । **पशुपतिजटाजूटतटिनी** सदाशिव के जटाजूट में निवास करने वाली गङ्गा, **ययोः** जिन चरणों के, **लाक्षालक्ष्मीः** लाक्षारस कान्ति, **अरुणहरिचूडामणिरुचिः** अरुणवर्ण वाले कौस्तुभ की रक्तिमा में विराजमान है ।

यहाँ यह आशय है—प्रणयकोप की शान्ति के लिये प्रणत पशुपति के की जटाजूट-वर्त्तिनी गङ्गा जो भगवती के पैर के आगे हो गई, इसलिये उन्हें पाद्यजलरूप से यहाँ कहा गया है । प्रतिदिन सायं प्रातः सेवा के लिये नमस्कार करने वाले विष्णु के मुकुट में रहने वाली कौस्तुभ मणि यद्यपि श्वेत वर्ण युक्त है तथापि प्रणाम करते समय लाक्षारस के प्रसाद से उसमें अरुणिमा आ जाती है, ऐसा समझना चाहिए ।

**पदयोजना का अर्थ**—हे जननि ! आपके जिन दोनों चरणों को श्रेष्ठ होने के कारण वेदान्त शास्त्र अपने शिर पर धारण करते हैं, अथवा श्रुति रूप वधुओं की श्रुतियाँ (कान) जिन चरणों को अवतंस के रूप में धारण करती हैं, हे मातः ! आप उन्हीं अपने दोनों चरणों को दया कर मेरे शिर पर धारण कीजिए । जिन चरणों का निर्णेजनजल भगवान् पशुपति की जटाजूट-वर्त्तिनी श्रीगङ्गा हैं और जिन दोनों चरणों की लाक्षा लक्ष्मी (रक्तिमा) विष्णु के मस्तक में विराजमान कौस्तुभ मणि है ।

यहाँ यह रहस्य कथन है कि भगवती के दोनों पादकमलों को वेद के शिर (वेदान्तशास्त्र) पर एवं सदाशिव के शिर पर और विष्णु के शिर पर संचार होता है, क्योंकि मूर्धा पर संचरण करने का उनका स्वभाव है, इसलिये मेरे भी शिर पर वे सञ्चरण करें । इसी प्रार्थना के सामञ्जस्य को कवि ने अपने अभिप्राय रूप से वर्णन किया है, अथवा सारे प्रपञ्च को उत्पन्न करने वाली सादाख्या भगवती के पादाम्बुज को प्रपञ्च के भीतर रहने वाले वेदान्त, हरि एवं विरञ्चि (ब्रह्मा) और पशुपति अपने शिर पर धारण करते हैं उस निर्णेजन जल से

उनके गात्र पवित्र हो जाते हैं और उसी निर्णेजन की महिमा से वे अपने-अपने अधिकारों का ठीक-ठीक पालन करते हैं। जो उचित भी है।

यहाँ रूपकालङ्कार स्पष्ट है ॥ ८४ ॥

**ध्यान**—श्रु = श् + र् + उ। **श्लोकस्थ वर्णबीज 'श्रु' का ध्यान**—

**श**— चतुर्भुजां चकोराक्षीं चारुचन्दनचर्चिताम्।
शुक्लवर्णां त्रिनयनां वरदां च शुचिस्मिताम् ॥
रत्नालङ्कारभूषाढ्यां श्वेतमाल्योपशोभिताम्।
देववृन्दैरभिवन्द्यां सेवितां मोक्षकाङ्क्षिभिः ॥
शकारं परमेशानि शृणु वर्णं शुचिस्मिते।
रक्तवर्णं प्रभाकारं स्वयं परमकुण्डली ॥
चतुर्वर्गप्रदं देवि शकारं ब्रह्मविग्रहम्।
पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं प्रिये ॥
रत्नपञ्चतमोद्युक्तं त्रिकूटसहितं सदा।
त्रिशक्तिसहितं वर्णं आत्मादितत्त्वसंयुतम् ॥

**र**— ललज्जिह्वां महारौद्रीं रक्तास्यां रक्तलोचनाम्।
रक्तमाल्याम्बरधरां रक्तालङ्कारभूषिताम् ॥
रक्तवर्णामष्टभुजां रक्तपुष्पोपशोभिताम्।
महामोक्षप्रदां नित्यां अष्टसिद्धिप्रदायिकाम् ॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्।
रेफं च चञ्चलापाङ्गि कुण्डलीद्वयसंयुतम् ॥
रक्तविद्युल्लताकारं पञ्चदेवात्मकं सदा।
त्रिशक्तिसहितं देवि आत्मादि तत्त्वसंयुतम् ॥
सर्वतेजोमयं वर्णं सततं मनसि चिन्तयेत्।

**उ**— पीतवर्णां त्रिनयनां पीताम्बरधरां पराम् ॥
द्विभुजां जटिलां भीमां सर्वसिद्धिप्रदायिनीम्।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
उकारं परमेशानि अधःकुण्डलिनी स्वयम्।
पीतचम्पकसङ्काशं पञ्चदेवमयं सदा।
पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम् ॥

**बीजाक्षर**—'श्रु'; जप-संख्या—१०००; जप-स्थान—आज्ञाचक्र: होम—मधु, पायस, देवीपुष्प और बिल्वपत्र से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—६।

**परकायाप्रवेश यन्त्र**



**भावार्थ**—हे दयामयि भगवति! आपके दिव्य चरण, जिनको वेद-वेदाङ्ग के प्रधान देव शिरोमुकुटव-

द्धारण करते हैं और जिनके चरण धोवन से वे श्री गङ्गा जी प्रकट हुई हैं, जिन्हें भगवान् पशुपति ने अपनी जटा में धारण किया है तथा जिन श्री चरणों में लगा हुआ महावर श्री हरि मुकुटस्थ कौस्तुभमणि के समान चमकता है, वह श्री चरण, हे जननि ! आप कृपया मुझ दास के सिर पर रक्खें ॥ ८४ ॥

**नमोवाकं ब्रूमो नयनरमणीयाय पदयोः**
**तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते ।**
**असूयत्यत्यन्तं यदभिहननाय स्पृहयते**
**पशूनामीशानः प्रमदवनकङ्केलितरवे ॥ ८५ ॥**

**लक्ष्मीधरा—नमोवाकं** नम इति वाक्यम् । नमोवाकशब्दो निपातनात्साधुः । **ब्रूमः** वदामः नमस्कुर्म इत्यर्थः । **नयनरमणीयाय** नेत्रयोः प्रियकराय, **पदयोः** चरणयोः, **तव** अस्मै परिदृश्यमानाय, **द्वन्द्वाय** युग्माय, **स्फुटरुचिरसालक्तकवते** स्फुटरुचये स्फुरत्प्रभाय रसालक्तकवते सार्द्रालक्तकाय, विशेषणसमासः । **असूयति** ईर्ष्यति । **अत्यन्तं** नितरां, **यदभिहननाय** येन पदयुगेन अभिहननं ताडनं तस्मै, अभिहननं न सहत इत्यर्थः । अशोकश्चरणाहतिव्यक्तपुष्प इति दोहलकौतुके । **स्पृहयते** स्पृहां कुर्वते, **पशूनामीशानः** पशुपतिः, **प्रमदवनकङ्केलितरवे** प्रमदवनं उद्यानवनं तत्र कङ्केलितरुरशोकः तस्मै असूयति ईर्ष्यति । उभयत्र 'क्रुधद्रुह' इत्यादिना 'स्पृहेरीप्सितः' इत्यनेन च सम्प्रदाने चतुर्थी ॥

**अत्रेत्थं पदयोजना**—हे भगवति! तव नयनरमणीयाय स्फुटरुचिरसालक्तकवते पदयोरस्मै द्वन्द्वाय नमोवाकं ब्रूमः पशूनामीशानः यदभिहननाय स्पृहयते प्रमदवनकङ्केलितरवे अत्यन्तं असूयति ॥

प्रणयकलहसमये अनुग्रहात्मा पादाघातो न कस्यापि सम्भाव्यत इति अचेतनवस्तुनोऽपि कङ्केलितरोः कथं स्यादिति तत्रैवासूया नान्यत्रेति भावः । अनेनात्यन्तं पातिव्रत्यं पार्वत्याः प्रतिपादितम् । एतादृशं पातिव्रत्यं लक्ष्मीसरस्वत्योर्नास्तीति ध्वन्यते ॥

अत्रातिशयोक्तिरलङ्कारः, पशुपतेरीर्ष्ययाऽसम्बन्धेऽपि सम्बन्धकथनादभेदाध्यवसायप्रतीतेः ॥ ८५ ॥

## * सरला *

**नम** इति । **नमोवाकं** नमः यह वाक्य 'नमो वाक शब्द निपातन से सिद्ध होता है', **ब्रूमः** कहता हूँ नमस्कार करता हूँ, **नयनरमणीयाय** नेत्रों के प्रिय करने वाले, **पदयोः** चरणों में, **तव अस्मै** आपके दिखाई पड़ने वाले चरण युग्म के लिये, **स्फुटरुचिरसालक्तकवते** देदीप्यमान कान्ति वाले अलक्तक रस से सर्वथा आर्द्र के लिए । विशेषण समास है । **असूयति** ईर्ष्या करते हैं, **अत्यन्तं** नितरां, **यदभिहननाय** जिस पदयुग्म से ताड़न करने के लिये अर्थात् जो अभिहनन नहीं सह सकते । अशोक पतिव्रता स्त्रियों के चरण के ताड़न से प्रसन्नतापूर्वक पुष्पित हो जाता है यह बात दोहलकौतुक ग्रन्थ में है । **स्पृहयते** स्पृहा करने वाले, **पशूनामीशानः** पशुपति, **प्रमदवनकङ्केलितरवे** उद्यान वन के अशोक वृक्ष से असूया (ईर्ष्या) करते हैं । यहाँ 'क्रुध द्रुह' इत्यादि सूत्र से एवं 'स्पृहेरीप्सितः' इस सूत्र से सम्प्रदान में चतुर्थी विभक्ति है ।

**पदयोजना का अर्थ**—नेत्रों के लिये अत्यन्त मोहक अपनी प्रभा को विकीर्ण करते हुये तथा अलक्तक रस से आर्द्र आपके इस दृश्यमान पद द्वन्द्वों को मैं नमस्कार करता हूँ, जिन चरणों के संताडन के लिये पशुपति स्पृहा करते हैं और प्रमाद वन में स्थित अशोक वृक्ष से अत्यन्त असूया करते हैं ॥

प्रणयकलह के समय में भगवती का अनुग्रहात्मक पादाघात किसी के ऊपर नहीं होता। फिर सर्वथा अचेतन इस अशोक वृक्ष पर भगवती ने अपना अनुग्रहात्मक पादाघात किस प्रकार किया? इसलिये भगवान् सदाशिव की ईर्ष्या उस अशोकवृक्ष से है अन्यों से नहीं। इससे भगवती पार्वती के महान् पातिव्रत्य का प्रतिपादन किया गया है। ऐसा पातिव्रत्य तो लक्ष्मी और सरस्वती दोनों में नहीं है—ऐसी ध्वनि निकलती है।

यहाँ अतिशयोक्ति अलङ्कार है क्योंकि पशुपति के ईर्ष्या का सम्बन्ध न होने पर भी ईर्ष्या सम्बन्ध का प्रतिपादन किया गया है और अभेद अध्यवसाय की प्रतीति होने से भी अतिशयोक्ति है ॥ ८५ ॥

**ध्यान**—'न'। **श्लोकस्थ वर्णबीज न का ध्यान**—

**न**— दलिताञ्जनवर्णाभां ललज्जिह्वां सुलोचनाम्।
चतुर्भुजां चकोराक्षीं चारुचन्दनचर्चिताम् ॥
कृष्णाम्बरपरीधानां ईशद्धास्यमुखीं सदा।
एवं ध्यात्वा नकारं तु तन्मन्त्रं दशधा जपेत् ॥
नकारं शृणु चार्वङ्गि रक्तविद्युल्लताकृतिः।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली ॥
त्रिगुणाशक्तिसंयुक्तं हृदि भावय पार्वति।

**बीजाक्षर**—'न'; जप-संख्या—१०००; जप-स्थान—आज्ञाचक्र; होम—मधु, पायस, देवीपुष्प और बिल्वपत्र से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—६। पूजन यन्त्र—चतुरस्र में 'रं' की छः आवृत्ति लिखे।

**सौभाग्यवर्धक यन्त्र**

**भावार्थ**—हे जननि ! आपके इन दोनों श्री चरणों में, जो अत्यन्त सुन्दर और अति शुभ्र हैं तथा जो महावर से रक्तिम वर्ण के हैं, हमारा बारम्बार अष्टाङ्ग प्रणाम है। हे माँ, आप श्री के सुन्दर उद्यान में लगे हुये कङ्केलि (= अशोक) वृक्ष को श्री पशुपतिनाथ अत्यन्त ईर्ष्या की दृष्टि से देखते हैं क्योंकि इन वृक्षों को आप के चरण कमल की ठोकर लगा करती है। जिससे यह प्रफुल्लित रहते हैं।

**विमर्श**—श्री शिव की ईर्ष्या का कारण यह कि उन कङ्केलि वृक्षों का यह अहोभाग्य है कि वे श्री भगवती पार्वती के चरणों की ठोकर के पात्र हैं। इस सौभाग्य-प्राप्ति की भगवान् शिव को भी इच्छा होती है, यह भाव है ॥ ८५ ॥

**मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं**
**ललाटे भर्तारं चरणकमले ताडयति ते।**
**चिरादन्तश्शल्यं दहनकृतमुन्मूलितवता**
**तुलाकोटिक्वाणैः किलिकिलितमीशानरिपुणा॥ ८६॥**

**लक्ष्मीधरा—मृषा** अकस्मादेव, **कृत्वा गोत्रस्खलनं** गोत्रस्य स्खलनं नाम नायिकायामनुरागं प्रकटयतस्तत्समीप एव प्रमादात् नायिकान्तराविष्टचित्तस्य तन्नामोच्चारणम्। **अथ** गोत्रस्खलनानन्तरं, **वैलक्ष्यनमितं** वैलक्ष्येण इतिकर्तव्यतामौढ्येन नमितम्। अत्र नमितमिति वैलक्ष्यप्राधान्यात् वैलक्ष्येणैव नमितः न तु स्वयं वैलक्ष्यान्नमितः। अत्युत्कृष्टं वैलक्ष्यमासीदिति नमितशब्दं प्रयुञ्जानस्य भावः। **ललाटे** निटिलप्रदेशे, **भर्तारं** पशुपतिं, **चरणकमले** पादाम्बुजे, **ताडयति** घ्नति सति चरणकमलेन भर्तुर्ललाटं ताडितवत्यां भवत्यामित्यर्थः। ललाटताडनं भर्तृपर्यन्तं गच्छतीति भर्तारं ताडयतीत्युक्तिराञ्जसीति एतादृशप्रयोगाः महाकविशिक्षावशादायाताः सहृदयहृदयाह्लादकाः। **ते** तव, **चिरात्** चिरकालमनुस्यूतं, **अन्तश्शल्यं** हृदयशल्यं, वैरमित्यर्थः। **दहनकृतं** नयनाग्निना प्लोषणकृतं, **उन्मूलितवता तुलाकोटिक्वाणैः** तुला नूपुरं तस्य कोटयः अग्राणि, तैरन्तर्गता मणयः क्षुद्रघण्टादयः लक्ष्यन्ते, तेषां क्वाणैः शिञ्जितैः। **किलिकिलितम्** किलिकिलेत्यनुकरणं विजयिनः सुप्रसिद्धम्। किलिकिलिरवः कृत इत्यर्थः। **ईशानरिपुणा** मन्मथेन। मन्मथस्य ईशानं प्रति रिपुत्वं तदा सिद्धमिति भावः॥

**अत्रेत्थं पदयोजना**—हे भगवति! मृषा गोत्रस्खलनं कृत्वा अथ वैलक्ष्यनमितं भर्तारं ते चरणकमले ललाटे ताडयति सति ईशानरिपुणा चिरात् दहनकृतं अन्तःशल्यं उन्मूलितवता तुलाकोटिक्वाणैः किलिकिलितम्॥

अत्रातिशयोक्तिरलङ्कारः, तुलाकोटिक्वाणानां किलिकिलितध्वनित्वेनाध्यवसानात् भेदे अभेदनिबन्धनातिशयोक्तिः॥ ८६॥

## * सरला *

**मृषेति। मृषा** अकस्मात् ही **कृत्वा गोत्रस्खलनं** अपनी नायिका में अनुराग प्रकट करते समय उसी के समीप में ही अन्य नायिका में आसक्त पुरुष जब उसका नाम उच्चारण कर बैठता है उसे 'गोत्रस्खलन' कहते हैं। **अथ** गोत्रस्खलन के पश्चात् **वैलक्ष्यनमितं** अब क्या करूँ? इस प्रकार की इतिकर्त्तव्यता से मोहित हो जाने के कारण नमित, यहाँ नमित। इस क्रियापद में वैलक्ष्य की प्रधानता है। इसलिये वैलक्ष्य से नमित, अपने वैलक्ष्य से नमित नहीं अर्थात् उनमें अत्यन्त वैलक्ष्य था, यह नमित शब्द के प्रयोग का भाव है। **ललाटे** निटिल अर्थात् भाल प्रदेश में, **भर्त्तारं** पशुपति सदाशिव के, **चरणकमले** पादाम्बुज को, **ताडयति सति** हनन करने पर, चरण कमल से पति के ललाट में ताडित करने वाली आपके। यहाँ 'ललाट ताडन' पति के पास तक पहुँच जायगा, इस अभिप्राय से 'भर्त्तारं ताडयति' यह उक्ति आञ्जस्येन रमणीय है। ऐसे प्रयोग महाकवियों के अत्यन्त शिक्षाभ्यास से होते हैं, जो सहृदय-हृदय संवेद्य होते हैं। **ते** आपके, **चिरात्** चिरकाल से अनुस्यूत, **अन्तःशल्यं** हृदय प्रदेश में गड़ जाने वाले काँटे। इसका अर्थ वैर है। **दहनकृतं** नेत्राग्नि से दग्ध किये जाने वाले, **उन्मूलितवता तुलाकोटि क्वाणैः** नूपुर के अग्रभाग के भीतर रहने

वाली क्षुद्रघण्टिकाएँ, उनके शिञ्जनों से, **किल किलितम्** 'किलकिल' शब्द विजयी पुरुष का अनुकरण है यह प्रसिद्ध है। जैसा कि 'किलकिलरवः कृतः' इत्यादि स्थल में प्रयोग होता है। **ईशानरिपुणा** मन्मथ के द्वारा अर्थात् मन्मथ का ईशान के प्रति रिपुत्वभाव तब सिद्ध हुआ।

**पदयोजना का अर्थ**—हे भगवति ! नर्मकाल में आपके पति सदाशिव द्वारा अन्य नायिका के नामो-च्चारण रूप अपराध कर दिए जाने पर किंकर्त्तव्यविमूढ़ हो, उनके द्वारा आपके चरण कमलों में अपने शिर के ताड़न किये जाने पर, कामदेव ने प्रसन्न हो कर अपने बहुत दिनों के दहन कृत अन्तःकरण के काँटे को निकाल कर आपके मञ्जीर में लगे क्षुद्र घण्टिकाओं के शिञ्जन (= रुनझुन ध्वनि) के बहाने 'किलकिल' शब्द से अपनी प्रसन्नता की अभिव्यक्ति की।

यहाँ भी अतिशयोक्ति अलङ्कार है, मञ्जीर के क्षुद्रघण्टिकाओं के शिञ्जन में 'किल-किल' ध्वनि का अध्यवसाय होने से भेद में अभेद प्रदर्शित किए जाने से अतिशयोक्ति अलङ्कार है ॥ ८६ ॥

**ध्यान**—मृ = म् + ऋ। **श्लोकस्थ वर्णबीज 'मृ' का ध्यान**—

**म**— कृष्णां दशभुजां भीमां पीतलोहितलोचनाम्।
कृष्णाम्बरधरां नित्यां धर्मकामार्थमोक्षदाम् ॥
एवं ध्यात्वा मकारं तु तन्मन्त्रं दशधा जपेत्।
मकारं शृणु चार्वङ्गि स्वयं परमकुण्डली ॥
तरुणादित्यसङ्काशं चतुर्वर्गप्रदायकम्।
पञ्चदेवमयं वर्णं पञ्चप्राणमयं तथा ॥

**ऋ**— षड्भुजां नीलवर्णां च नीलाम्बरधरां पराम्।
नानालङ्कारभूषाढ्यां सर्वालंकृतमस्तकाम् ॥
भक्तिप्रदां भगवतीं भोगमोक्षप्रदायिनीम्।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
पञ्चप्राणमयं वर्णं चतुर्ज्ञानमयं तथा।
रक्तविद्युल्लताकारं ऋकारं प्रणमाम्यहम् ॥
ऋकारः परमेशानि! कुण्डलीमूर्तिमान् स्वयम्।
अत्र ब्रह्मा च विष्णुश्च, रुद्रश्चैव वरानने ॥
सदाशिवयुतं वर्णं सदा ईश्वरसंयुतम्।
ऊर्ध्वा दक्षगता वक्रा त्रिकोणा वामतस्ततः ॥
पुनस्त्वधो दक्षगता मात्रा शक्तिः परास्मृता।
मात्रा तु ब्रह्मविष्णवीशाः तिष्ठन्ति क्रमतोपरा ॥

**'बीजाक्षर**—'म्-ऋ'; जपादि उपर्युक्त समान;
पूजन-यन्त्र—चतुष्कोण में 'यं यं यं' लिखे।

**सौभाग्यवर्धक यन्त्र**

| यं<br>यं<br>यं |
|---|

**भावार्थ**—हे भगवति ! जब आपने अपने श्री चरणों से शिव-जटा का ताड़न किया अर्थात् शिव-जटा में श्री गङ्गाभार असह्य हो जाने से, जब आपने

भारतमहरण करने की इच्छा से श्री शिव-जटा को अपने श्री चरणों से स्पर्श किया तथा उस स्पर्श मात्र से ही श्री गङ्गा का महावेगरूप तम दब गया, तब आपकी अमोघ शक्ति के आगे कामदेव अपने देह को भस्म कर निर्मूल कर देने वाले श्री शिव का मान-खण्डन होते देखकर आनन्द से घुँघरू के रुनझुन के बहाने से मानो किल-किल अर्थात् विजयनाद हास्य करने लगे ॥ ८६ ॥

**हिमानीहन्तव्यं हिमगिरिनिवासैकचतुरौ**
**निशायां निद्राणं निशि चरमभागे च विशदौ ।**
**वरं लक्ष्मीपात्रं श्रियमतिसृजन्तौ समयिनां**
**सरोजं त्वत्पादौ जननि जयतश्चित्रमिह किम् ॥ ८७ ॥**

**लक्ष्मीधरा**—**हिमानीहन्तव्यं** हिमान्या हिमसंहत्या हन्तव्यं नाशितव्यं, **हिमगिरिनिवासैकचतुरौ** सर्वदा हिमगिरावेव बसन्तावित्यर्थः । **निशायां** शर्वर्यां, **निद्राणं** मुकुलितं, **निशि चरमभागे च विशदौ** प्रसन्नौ, चेतनाशक्तेः तत्रैवोत्पत्तेरिति भावः । चकारात् दिवापि प्रसन्नावित्यर्थः । **वरं** ईप्सितं, **लक्ष्मीपात्रं** लक्ष्म्या अधिष्ठितमित्यर्थः । **श्रियं** लक्ष्मीं, **अतिसृजन्तौ** उत्पादयन्तौ, **समयिनां** स्वभक्तानाम्, समयस्वरूपं 'तवाधारे मूले' इति (४१) श्लोके निरूपितम् । **सरोजं** कमलं कर्मभूतं, **त्वत्पादौ जननि !** हे मातः ! **जयतः** विजयते । **चित्रं** आश्चर्य, **इह** अस्मिन्नर्थे, **किं** न किमपीत्यर्थः ॥

**अत्रेत्थं पदयोजना**—हे जननि ! हिमगिरिनिवासैकचतुरौ निशि चरमभागे च विशदौ समयिनां श्रियमतिसृजन्तौ त्वत्पादौ हिमानीहन्तव्यं निशायां निद्राणं वरं लक्ष्मीपात्रं सरोजं जयतः; इह किं चित्रं, आधिक्यस्य स्फुटत्वादित्यर्थः ।

अत्र व्यतिरेकालङ्कारः स्फुटः ॥ ८७ ॥

*** सरला ***

**हिमानीति । हिमानीहन्तव्यम्** हिमानी के द्वारा नाशितव्य होने के कारण, **हिमगिरिनिवासैकचतुरौ** सर्वदा हिमालय पहाड़ पर ही निवास करने में प्रवीण, **निशायां** शर्वरी अर्थात् रात्रि में, **निद्राणं** मुकुलित, **निशि चरमभागे च विशदौ** रात दिन प्रसन्न रहने वाले अर्थात् चेतना शक्ति के उत्पत्ति का स्थान होने से निद्रा रहित, **वरं** भक्तों को अभीष्ट पदार्थ का दान देने वाले, **श्रियं** महालक्ष्मी की, **अतिसृजन्तौ** उत्पत्ति करने वाले, **समयिनां** अपने समयाचारी भक्तों के, समय का स्वरूप हमने 'तवाधारे मूले' इस (४१) श्लोक में कह दिया है । **सरोजं** कमल को, यह कर्मभूत है । **त्वत्पादौ जननि** हे मातः !, **जयतः** आपके दोनों पैर विजय प्राप्त करते है, **चित्रं** आश्चर्य, **इह** इस अर्थ में, **किं** और कुछ नहीं है ।

**पदयोजना का अर्थ**—हे मातः बर्फीले हिमालय पर्वत पर निवास करने में सर्वथा कुशल, रात दिन जागते रहने वाले तथा प्रसन्न रहने वाले, समयमतावलम्बी अपने भक्तों को प्रचुरलक्ष्मी देने वाले आपके पैरों की तुलना बर्फ से नष्ट हो जाने वाले तथा रात में सो जाने वाले लक्ष्मी के अत्यन्त प्रिय पात्र 'सरोज' को यदि जीत लेते हैं तो इसमें आश्चर्य की कौन सी बात है । क्योंकि आपके चरण कमल की अपेक्षा वे अधिक गुणों से संयुक्त हैं ।

यहाँ व्यतिरेकालङ्कार स्पष्ट है ॥ ८७ ॥

**ध्यान—हि = ह् + इ । श्लोकस्थ वर्णबीज 'ह' का ध्यान—**

ह— चतुर्भुजां रक्तवर्णां शुक्लाम्बरविभूषिताम् ।
रक्तालङ्कारसंयुक्तां वरदां पद्मलोचनाम् ॥
ईषद्धास्यमुखीं लोलां रक्तचन्दनचर्चिताम् ।
स्याद्दात्रीं च चतुर्वर्गप्रदां सौम्यां मनोहराम् ॥
गन्धर्वसिद्धदेवाद्यैर्ध्यातामाद्यां सुरेश्वरीम् ।
एवं ध्यात्वा हकारं तु तन्मन्त्रं दशधा जपेत् ॥
हकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम् ।
कुण्डलीद्वयसंयुक्तं रक्तविद्युल्लतोपमम् ॥
रजस्सत्वतमोयुक्तं पञ्चदेवमयं सदा ।
पञ्चप्राणात्मकं वर्णं त्रिशक्तिसहितं सदा ॥
त्रिबिन्दुसहितं वर्णं हृदि भावय पार्वति ।
ऊर्ध्वादाकुञ्चिता मध्ये कुण्डलीत्वगता त्वधः ॥
ऊर्ध्वं गता पुनस्सैव तासु ब्रह्मादयः क्रमात् ॥

इ— इकारं परमानन्दं सुगन्धं कुंकुमच्छविः ।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये ॥
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा ।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम् ॥
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गता भवेत् ।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत् ॥
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम् ।
कामदां सिद्धिदां सौम्यां नित्योत्साहविवर्द्धिनीम् ॥
चतुर्भुजां च वरदां हरिचन्दनभूषिताम् ।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधा जपेत् ॥

**बीजाक्षर**—'हिं'; जपादि विधान पूर्ववत्; पूजन-यन्त्र—त्रिकोण मे मध्य में 'ह्रीं सर्प सर्प मं' लिखे ।

**सर्वजनवशीकरण यन्त्र**

**भावार्थ**—हे जगज्जननि ! आपके चरण कमल हिम-भरे हिमालय में रहने के अभ्यासी हैं । दिन-रात दिव्य प्रकाशवत् खिले रहते हैं तथा स्वभक्तों को परम श्रेय देने वाले हैं । वे कमल से कहीं अधिक श्रेष्ठ हैं तो इसमें आश्चर्य ही क्या है? कमल तो हिम से गल जाते हैं और रात्रि को सो भी जाते हैं अर्थात् उन्हें श्री लक्ष्मी जी की कृपा दृष्टि पाने का सौभाग्य बहुत कम मिलता है ॥ ८७ ॥

**पदं ते कीर्तीनां प्रपदमपदं देवि विपदां**
**कथं नीतं सद्भिः कठिनकमठीकर्परतुलाम् ।**

**कथं वा बाहुभ्यामुपयमनकाले पुरभिदा**
**यदादाय न्यस्तं दृषदि दयमानेन मनसा ॥ ८८ ॥**

**लक्ष्मीधरा—पदं** स्थानं; **ते** तव, **कीर्तीनां** यशसां, **प्रपदं** पादाग्रं **अपदं** अस्थानं, **देवि!** द्योतनशीले ! भगवति ! **विपदां** आपदां, **कथं** कथङ्कारं, **नीतं** प्रापितं, **सद्भिः** कवीन्द्रैः, **कठिनकमष्ठीकर्परतुलां** कठिनस्य **कमठीकर्परस्य** कूर्मपृष्ठकपालस्य तुलां, **कथं वा** कथं कृत्वा, **बाहुभ्यां** हस्ताभ्यां, **उपयमनकाले** विवाहसमये, **पुरभिदा** सदाशिवेन, **यत् पदं आदाय** गृहीत्वा, **न्यस्तं** क्षिप्तं, **दृषदि** उपलाधारभूता शिला दृषत्, उपलं हरिद्रादि-द्रव्यस्य पेषणिका शिला । तदाधारभूता शिला दृषत् । सा विवाहसमये अश्मस्थापनानुष्ठानार्थं पात्रत्वेन प्रयुक्ता । तस्यां दृषदि **दयमानेन** दयावता, **मनसा** । दयां विहायातिमृदुलं पादाम्बुजं दृषदि कथं स्थापितं शम्भुना । अमृतस्यन्दिनीभिः वाग्विलासैः कवीश्वराः कमठपृष्ठेन तुल्यतया कथं? एतदुभयमयुक्तमित्यर्थः ॥

**अत्रेत्थं पदयोजना**—हे देवि! कीर्तीनां पदं विपदामपदं ते प्रपदं सद्भिः कठिनक-मठीकर्परतुलां कथं नीतम्? दयमानेन मनसा पुरभिदा उपयमनकाले बाहुभ्यां यदादाय कथं वा दृषदि न्यस्तम्?

अत्रानन्वयालङ्कारो ध्वन्यते, सदृशान्तरनिषेधात् असदृशस्य पादाम्बुजवस्तुनः स्वयमेव स्वस्य तुल्यमिति प्रतीतेः ॥ ८८ ॥

*** सरला ***

**पदमिति । पदं** स्थान, **ते** आपकी, **कीर्त्तीनां** यशों के, **प्रपदं** पादाग्र, **अपदं** अस्थान, **देवि** हे द्योतनशीले, हे भगवति, **विपदां** आपत्तियों के, **कथं** किस प्रकार, **नीतं** प्राप्त करवाया, **सद्भिः** उत्तमोत्तम कवीन्द्रों के द्वारा, **कठिनकमठीकर्परतुलां** अत्यन्त कठिन कूर्म-दृष्ट की खोपड़ी के समान, **कथं वा** किस प्रकार, **बाहुभ्यां** अपने हाथों से, **उपयमनकाले** विवाह काल में, **पुरभिदा** सदाशिव के द्वारा, **यत्** जो पद, **आदाय** पकड़ कर, **न्यस्तं** रखा, **दृषदि** उपला, आधारभूता शिला पर विवाह काल में अश्मस्थापना के अनुष्ठान के लिये पात्र के रूप में प्रयुक्त होती है । उस पत्थर पर **दयमानेन** दया करते हुये, **मनसा** (दया छोड़कर निर्दय) मन से सदाशिव ने उस कोमल चरण को विवाह के समय अपने हाथों से उठाकर भला किस प्रकार उसे कठोर पत्थर पर रखा । अमृत के समान वाग् विलास से कवीश्वरों ने भगवती के चरण की तुल्यता कमठ पृष्ठ के कठोर खोपड़े से भला कैसे की? यह दोनों ही अयुक्त है ।

**पदयोजना का अर्थ**—हे भगवति ! आपका जो पादाग्र भाग कीर्त्तियों का स्थान है, विपत्तियों को दूर भगाने वाला है, उस पादाग्र भाग की उत्तमोत्तम कवीन्द्रों ने भला किस प्रकार कमठ के कठोर पृष्ठभाग के समान उपमा दी है? यह बात समझ में नहीं आती । इतना ही नहीं उस पदाग्र भाग को सदाशिव ने विवाह काल में अत्यन्त दयार्द्र मन से अपने दोनों बाहुओं से उठाकर किस प्रकार पत्थर पर स्थापित किया?

यहाँ अनन्वयालङ्कार की ध्वनि है । अन्य सादृश्यों का निषेध किये जाने के कारण,

यत: पादाम्बुज का सादृश्य किसी अन्य वस्तु में न होने से, वह स्वयं ही स्वसदृश है ऐसी प्रतीति होने से अनन्वयालङ्कार है ॥ ८८ ॥

**ध्यान—'प' । श्लोकस्थ वर्णबीज 'प' का ध्यान—**

**प—** विचित्रवसनां देवीं द्विभुजां पङ्कजेक्षणाम् ।
रक्तचन्दनलिप्ताङ्गीं पद्ममालाविभूषिताम् ॥
मणिरत्नादिकेयूररत्नहारैकरविग्रहाम् ।
चतुर्वर्गप्रदां नित्यां नित्यानन्दमयीं पराम् ।
एवं ध्यात्वा पकारं तु तन्मन्त्रं दशधा जपेत् ।
अत:परं प्रवक्ष्यामि पकाराक्षरमव्ययम् ।
चतुर्वर्गप्रदं वर्णं त्रिशक्तिसहितं प्रिये ॥
पञ्चदेवमयं वर्णं शरच्चन्द्रमयप्रभम् ॥
पञ्चप्राणमयं वर्णं स्वयं परमकुण्डली ॥
त्रिगुणीसहितं वर्णं आत्मादितत्त्वसंयुतम् ।
महामोक्षप्रदं देवि हृदि भावय पार्वति ॥

**बीजाक्षर**—'प'; जप-संख्या—१०००; जप-स्थान—आज्ञाचक्र: होम—मधु, पायस, देवीपुष्प और बिल्वपत्र से—१०० अथवा १०; तर्पण—१०; मार्जन—१०, श्लोक-पाठसंख्या—१०; श्लोकपाठ-आहुति—६ ।

**सर्वमृगवशीकरण यन्त्र**

ह्रीं ह्रीं
ह्रीं

**भावार्थ**—हे महेश्वरि ! यह समझ में नहीं आता कि आपके कीर्ति-स्थान, आपत्ति-रहित तथा जिन चरणों को विवाह-काल में श्री सदाशिव ने अत्यन्त करुणार्द्र हृदय से उठाकर पाषाण पर रक्खा था, ऐसे सुकोमल श्रीचरणों के अग्रभाग को श्रेष्ठ सत्पुरुषों ने कठिन कमठ-खर्पर (कछुवे की पीठ) की उपमा भला क्यों कर दी होगी ? ॥ ८८ ॥

**नखैर्नाकस्त्रीणां करकमलसङ्कोचशशिभि:**
**तरूणां दिव्यानां हसत इव ते चण्डि चरणौ ।**
**फलानि स्वस्स्थेभ्य: किसलयकराग्रेण ददतां**
**दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥ ८९ ॥**

**लक्ष्मीधरा—नखै:** नखरै:, **नाकस्त्रीणां** सुराङ्गनानां शच्यादीनां, **करकमल-सङ्कोचशशिभि:** करा एव कमलानि तेषां सङ्कोचे मुकुलीभावे शशिन: चन्द्रात्मका: पाद-दर्शनवेलायां नखकान्तय: चन्द्रकिरणा इव तत्करान् मुकुलयन्ति अञ्जलिसन्धानं कारयन्ति । **तरूणां** वृक्षाणां **दिव्यानां** दिवि भवानां, **हसत:** । तरूणां हसत इति कर्मणि षष्ठी । हसन्तौ **इव ते** तव, **चण्डि!** भगवति! **चरणौ फलानि स्वस्स्थेभ्य:** स्वर्गस्थेभ्य एव न तु दरिद्रेभ्य इति विशेषणवशात् प्रतीयते । **किसलयकराग्रेण** किसलया एव करा: तेषामग्रं तेन, **ददतां** दिशतां, **दरिद्रेभ्यो** दीनेभ्यश्च, **भद्रां** अमन्दां, **श्रियं** लक्ष्मीं, **अनिशं** सर्वदा, **अह्नाय** शीघ्रं, ददतौ ॥

**अयमर्थः**—कल्पवृक्षाः किसलयकरैः स्वस्स्थेभ्य एव आशानुसारेण शनैः शनैः फलं ददति । ते पादाम्बुजं तु स्वस्स्थेभ्यो दरिद्रेभ्यश्च शीघ्रं भद्रां श्रियं ददातीति व्यतिरेकः ॥

**अत्रेत्थं पदयोजना**—हे चण्डि! किसलयकराग्रेण स्वस्स्थेभ्यः एव फ़लानि ददतां दिव्यानां तरूणां दरिद्रेभ्यो भद्रां श्रियं अनिशमह्नाय ददतौ ते चरणौ नाकस्त्रीणां करकमलसङ्कोचशशिभिः नखैः हसत इव ॥

अत्र व्यतिरेकालङ्कारः स्फुट एव । स च स्वस्स्थेभ्य इत्यत्र श्लेषानुप्राणित इत्यनुसन्धेयम् ॥ ८९ ॥

*** सरला ***

**नखैरिति । नखैः** नखों से, **नाकस्त्रीणां** शच्यादि सुराङ्गनाओं के, **करकमल-संकोचशशिभिः** उनके हाथरूपी कमलों के मुकुलीभाव में चन्द्रमा के समान, पाददर्शन काल में चन्द्रकिरणों के समान नख की कान्ति उनके कमलसदृश करों को सङ्कुचित कर देती है, अञ्जलि बँधवा देती है, **तरूणां** वृक्षों के, **दिव्यानां** स्वर्ग में होने वाले, **हसतः** 'तरूणां हसतः' यहाँ कर्म में षष्ठी है । हसते हुये के, **इव** समान, **ते** आपके, **चण्डि** हे भगवति, **चरणौ फलानि स्वस्थेभ्यः** मात्र स्वर्गस्थों के लिये, दरिद्रों के लिये नहीं—ऐसी विशेषण-वश प्रतीति होने से, **किसलयकराग्रेण** किसलयरूपी हाथों के अग्रभाग से, **ददतां** देने वाले, **दरिद्रेभ्यो** दीनों के लिये, **भद्रां** अधिक से अधिक, **श्रियं** लक्ष्मी को, **अनिशं** सर्वदा, **अह्नाय** शीघ्रातिशीघ्र, **ददतौ** प्रदान करते हैं ।

इसका तात्पर्य इस प्रकार है—कल्पवृक्ष अपने किसलय करों से केवल स्वर्गवासी जनों को उनकी आशा के अनुसार ही फल देते हैं, किन्तु देवी के चरणकमल तो दरिद्रों को भी शीघ्रातिशीघ्र रात एवं दिन आशा से अधिकाधिक श्री प्रदान करते हैं । अतः व्यतिरेकालङ्कार है ।

**पदयोजना का अर्थ**—हे चण्डि ! अपने किसलयकराग्र से मात्र स्वर्गवासी जनों को ही फल देने वाले कल्पवृक्षों का, दरिद्रों को आशा से अधिक दिन-रात शीघ्रातिशीघ्र श्री प्रदान करने वाले आपके वे चरण, उपहास करते हैं जिनके नखरूपी चन्द्रमा के प्रकाश से शच्यादि देवाङ्ग-नाओं के कर कमल संकुचित होकर अञ्जलि बाँधने के लिये उन्हें विवश कर देते हैं ॥

यहाँ व्यतिरेकालङ्कार स्पष्ट है जो 'स्वस्थेभ्यः' इस पद में श्लेषानुप्राणित है ॥८९॥

**ध्यान—'न' । श्लोकस्थ वर्णबीज न का ध्यान—**

**न**— दलिताञ्जनवर्णाभां ललज्जिह्वां सुलोचनाम् ।
चतुर्भुजां चकोराक्षीं चारुचन्दनचर्चिताम् ॥
कृष्णाम्बरपरीधानां ईशद्धास्यमुखीं सदा ।
एवं ध्यात्वा नकारं तु तन्मन्त्रं दशधा जपेत् ॥
नकारं शृणु चार्वङ्गि रक्तविद्युल्लताकृतिः ।
पञ्चदेवमयं वर्णं स्वयं परमकुण्डली ॥
त्रिगुणाशक्तिसंयुक्तं हृदि भावय पार्वति ।

**बीजाक्षर**—'न'; जपादि विधान उपर्युक्त समान; पूजन-यन्त्र—त्रिकोण के मध्य में 'ह्रीं' लिखे ।

**सर्वरोगनिवारक यन्त्र**

**भावार्थ**—हे चण्डि ! आपके चरण-युगल, जो गरीबों की सर्वकामना पूर्ण करने वाले तथा सदा बहुधन देने वाले हैं, कल्पवृक्ष पर हँसते हैं—यह बताते हुए कि गरीबों की सर्वकामना-सिद्धि-शक्ति तो आपके चरणों के अँगूठे के नख में है । कल्पवृक्षादि को जिनकी आवश्यकता नहीं, ऐसी धनाढ्य देव-शक्तियों की कामनाओं को अपने कोंपलरूप अँगुलियों से पूर्ण करते हैं परन्तु भगवती विश्व के सभी गरीबों की मनोकामनाओं को पूर्ण करने वाली हैं । हे जगज्जननि ! आपके दिव्य चरणों के अँगूठों के नखों की ज्योति बहुत से चन्द्रमाओं के समान है, जिनकी बहुत-सी देव-स्त्रियाँ वन्दना करती हैं । जिस प्रकार चन्द्रोदय होने से कमल बन्द हो जाता है, उसी प्रकार उन देव-स्त्रियों के कर-कमल आपके चरण-नख की वन्दना में बन्द हो जाते हैं और कुछ दे नहीं पाते ॥ ८९ ॥

**ददाने दीनेभ्यश्श्रियमनिशमाशानुसदृशीं**
**अमन्दं सौन्दर्यप्रकरमकरन्दं विकिरति ।**
**तवास्मिन् मन्दारस्तबकसुभगे यातु चरणे**
**निमज्जन् मज्जीवः करणचरणष्षट्चरणताम् ॥ ९० ॥**

**लक्ष्मीधरा**—**ददाने** ददति, **दीनेभ्यो** दरिद्रेभ्यः, **श्रियं** लक्ष्मीं, **अनिशं आशानुसदृशीं** वाञ्छानुरूपां, **अमन्दं** अधिकं, **सौन्दर्यप्रकरमकरन्दं** सौन्दर्यस्य लावण्यस्य प्रकरः समूह एव मकरन्दः पुष्परसः तं, **विकिरति** क्षिपति, **तव** भवत्याः, **अस्मिन्** दृश्यमाने, **मन्दारस्तम्बकसुभगे** कल्पवृक्षगुच्छसौभाग्यवति, **यातु** प्राप्नुयात् । **चरणे** पादाब्जे, **निमज्जन्** नितरां मज्जनं कुर्वन् **मज्जीवः** अहं चासौ जीवश्च मज्जीवः, **करणचरणः** करणानि पञ्चेन्द्रियाणि मनष्षष्ठानि तान्येव चरणा यस्य सः, **षट्चरणतां** भ्रमरत्वम् ॥

**अत्रेत्थं पदयोजना**—हे भगवती ! दीनेभ्यः आशानुसदृशीं श्रियम् अनिशं ददाने अमन्दं सौन्दर्यप्रकरमकरन्दं विकिरति मन्दारस्तबकसुभगे अस्मिन् तव चरणे करणचरणः मज्जीवः निमज्जन् षट्चरणतां यातु ॥

अत्रातिशयोक्तिरलङ्कारः, चरणस्य कमलत्वेन निगीर्याध्यवसानात् । मन्दारस्तबकसुभग इत्यत्र उपमालङ्कारः । अनयोः संसृष्टिः । करणचरण इत्यत्र रूपकं करणानां चरणत्वेन रूपणात् । मज्जीवष्षट्चरणतां यात्वित्यत्र परिणामालङ्कारः स्पष्टः । अनयोरङ्गाङ्गिभावेन सङ्करः । सौन्दर्यप्रकरमकरन्दं विकिरतीत्यत्र रूपकं निगीर्याध्यवसाने निमित्तम् । अत एव नैकदेशरूपकम्, अवयवानां प्रतिपादनात् । करणचरणष्षट्चरणतां यात्विति फलत्वेनोद्देशात् अवयवत्वं तस्य । अतोऽस्मिन् चरण इति आरोपविषया चरणमुपादाय कमलमारोप्यमाणबुद्ध्या निगीर्णमिति सम्यक् । एवं परिणामातिशययोः सङ्कर एव, न तु संसृष्टिरिति ध्येयम् ॥ ९० ॥

*** सरला ***

**ददाने** इति । **ददाने** देते हुये, **दीनेभ्यः** दरिद्रों के लिये, **श्रियं** लक्ष्मी, **अनिशं** आशानुसदृशीं वाञ्छा के अनुसार, **अमन्दं** अधिकाधिक, **सौन्दर्यप्रकरमकरन्दं** लावण्य समूह पुष्पों के रस को, **विकिरति** विकीर्ण करते हुये, **तव** आपके, **अस्मिन्** इस दिखाई पड़ने वाले, **मन्दारस्तबकसुभगे** कल्पवृक्ष के गुच्छों के समान सौभाग्यवान्, **यातु** प्राप्त करे, **चरणे** पादकमल में, **निमज्जन्** अच्छी तरह डूबता हुआ, **मज्जीवः** अहङ्कार स्वरूप मेरा जीव, **करचरणः** पञ्चज्ञानेन्द्रियाँ और छठा मन रूप चरणों वाला है जिसके, **षट्चरणतां** भ्रमरत्व को (प्राप्त करे) ।

**अर्थ**—हे भगवति ! दीन जनों को उनकी आशानुरूप श्री देने वाले, अधिक से अधिक सौन्दर्यसमूहों के पुष्परस को विकीर्ण करने वाले, कल्पवृक्ष के गुच्छ के समान सौभाग्यशाली, आपके इस परिदृश्यमान चरणों में, पञ्चेन्द्रिय और छठे मन रूप चरणों वाला अहङ्कार स्वरूप मेरा जीव डूबता हुआ भ्रमरत्व को प्राप्त करे ।

चरण में कमलत्व के निगरण (छिपा कर) के अध्यवसाय करने से यहाँ अतिशयोक्ति अलङ्कार है । 'मन्दारस्तबकसुभगे' यहाँ उपमालङ्कार है । दोनों मिलाकर संसृष्टि है । 'कर चरणम्' करों को चरण के रूप में निरूपण करने के कारण यहाँ रूपक है । 'मज्जीवः षट्चरणतां यातु' यहाँ परिणामालङ्कार स्पष्ट है । दोनों का अङ्गाङ्गिभाव होने से संकर है । 'सौन्दर्यप्रकरमकरन्दं विकिरति' यहाँ भी रूपक है । पुष्प का निगरण इस अध्यवसान में निमित्त है । इसलिये वह अनेक देशीय रूपक है । अवयवों के प्रतिपादन के कारण, 'करणचरणष्षट्चरणता यातु' यहाँ इस फल के उद्देश्य होने के कारण वह अवयव है । इसलिये इस चरण में जितने भी आरोप के विषय हैं वे सभी चरण को लेकर कमल के आरोप्यमाण बुद्धि से निगीर्ण किये गये हैं । यह उचित भी हैं । इस प्रकार यहाँ परिणामातिशय संकर है, संसृष्टि नहीं—यह विचार कर लेना चाहिए ॥ ९०॥

**ध्यान—'द' । श्लोकस्थ वर्णबीज 'द' का ध्यान—**

द— चतुर्भुजां पीतवस्त्रां नवयौवनसंस्थिताम् ।
अनेकरत्नघटितहारनूपुरशोभिताम् ॥
एवं ध्यात्वा दकारं तु तन्मन्त्रं दशधा जपेत् ।
त्रिशक्तिसहितं देवि ! त्रिबिन्दुसहितं प्रिये ! ॥
आत्मादितत्त्वसंयुक्तं दकारं प्रणमाम्यहम् ।
दकारं शृणु चार्वङ्गि चतुर्वर्गप्रदायकम् ॥
पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा ॥

**क्षुद्रबाधानिवृत्त्यर्थयन्त्र**

| क्षां | क्षां |
|---|---|
| क्षीय | क्षीय |
| ह्रीं | |

**बीजाक्षर**—'द'; जपादि विधान उपर्युक्त समान । पूजन-यन्त्र—चतुष्कोण में 'क्षां क्षां क्षीय क्षीय ह्रीं' लिखे ।

**भावार्थ**—हे महेश्वरि ! आपके चरणकमल, जो निराधार निर्धनों को उनकी आवश्यकतानुसार द्रव्य देने वाले हैं वे दीनों की आशा पूर्ण करने

वाले हों। हे मातेश्वरि ! मेरा जीवात्मा छः पैर वाली उस मधु-मक्षिका के समान हो, जो सौन्दर्य-छटा की अखण्ड मधु-धारा को बनाने तथा चोषण करने वाली है।

**विमर्श**—आपके मन्दार-मकरन्द-सम दिव्य रसमय श्री चरणों का यह प्रताप है कि उनसे दीनजन सदैव पोषण पाते हैं ॥ ९० ॥

**पदन्यासक्रीडापरिचयमिवारब्धुमनसः**
**स्खलन्तस्ते खेलं भवनकलहंसा न जहति।**
**अतस्तेषां शिक्षां सुभगमणिमञ्जीररणित—**
**च्छलादाचक्षाणं चरणकमलं चारुचरिते ॥ ९१ ॥**

**लक्ष्मीधरा—पदन्यासक्रीडापरिचयं** पदयोर्न्यासः तस्मिन् क्रीडा विनोदः तस्य परिचयमिव अभ्यासमिव। इवशब्दः सम्भावनावचनः नूनमित्यर्थः। **आरब्धुमनसः** सम्पादयितुकामाः, **स्खलन्तः** स्खलद्गतयः, **ते** तव **खेलं** खेलनं विलासं सञ्चारं, **भवनकलहंसाः** भवने परिपोषिताः कलहंसाः हंसविशेषाः, **न जहति** न परित्यजन्ति, त्वदनुसरणं न कदाचिदपि त्यजन्तीत्यर्थः। **अतः** कारणात्, **तेषां** कलहंसानां, **शिक्षां** खेलनशिक्षां, **सुभगमणिमञ्जीररणितच्छलात्** मणिमञ्जीरो मणिप्रधाननूपुरः स चासौ 'सुभगः रम्यतरः, यद्वा सुभगैः मणिभिः पद्मरागादिभिः युक्तः, तस्य मञ्जीरस्य रणितानां शिञ्जितानां छलात् व्याजात्। **आचक्षाणं** उपदिशत्, **चरणकमलं** पादाम्बुजं, **चारुचरिते**! शोभनगमने!

**अत्रेत्थं पदयोजना**—हे चारुचरिते ! पदन्यासक्रीडापरिचयम् आरब्धुमनसः भवनकलहंसाः स्खलन्तः ते खेलं न जहति; अतः चरणकमलं सुभगमणिमञ्जीररणितच्छलात् तेषां शिक्षां आचक्षाणमिव।

अत्रोत्प्रेक्षालङ्कारः मञ्जीररणितानां शिक्षावचनात्मतया सम्भावनात्। पूर्वार्धे अतिशयोक्तिः, भवनकलहंसानां स्वाभाविके पोषकजनानुसरणे पदन्यासक्रीडापरिचयार्थत्वेन अध्यवसानात् असम्बन्धे सम्बन्धनिबन्धनातिशयोक्तिः। उभयोरङ्गाङ्गिभावेन सङ्करः ॥ ९१ ॥

*** सरला ***

**पदन्यासेति। पदन्यासक्रीडापरिचयं** पदन्यास में विनोद का अभ्यास करने के समान, **इव** यहाँ इव शब्द सम्भावना का वाचक है, निश्चय ही **आरब्धुमनसः** सम्पादन की इच्छा वाले, **स्खलन्तः** स्खलद्गति वाले, **ते** आपके, **खेलं** खेलन अर्थात् विलास अथवा संचार, **भवनकलहंसाः** घर में पोषे गये हंसविशेष, **न जहति** परित्याग नहीं करते अर्थात् आपका पीछा कदापि नहीं छोड़ते, **अतः** इस कारण, **तेषां** उन कलहंसों का, **शिक्षा** खेल के द्वारा दी जाने वाली शिक्षा को, **सुभगमणिमञ्जीररणितच्छलात्** अत्यन्त सुन्दर पद्मरागादि मणियों से युक्त नूपुर के शिञ्जित शब्द के बहाने से, **आचक्षाणं** उपदेश देते हुये, **चरणकमलं** पादाम्बुज **चारुचरिते** हे शोभनगमने ! अर्थात् कलहंसों को मानो शिक्षा दे रहे हैं।

**पदयोजना का अर्थ**—हे चारुचरिते ! आपके पादन्यास की क्रीडा से शिक्षा प्राप्त करने के लिये आपके घर में पोसे गये कलहंस स्खलित गति होते हुये भी आपकी क्रीडा का परित्याग नहीं करते। इस कारण आपके चरण कमल अपने पद्मरागादि मणियों से

संयुक्त मञ्जीर के शिञ्जन के बहाने उन कलहंसों को शिक्षा प्रदान करते हुये जैसे प्रतीत होते हैं ॥

यहाँ मञ्जीर के रणन में शिक्षा वचन की सम्भावना की गई है, इसलिये उत्प्रेक्षा अलङ्कार है। पूर्वार्ध में अतिशयोक्ति है। भवन में पोषे गये कलहंस स्वभावतः अपने पोषक का अनुसरण करते हैं। उनमें पदन्यासक्रीड़ा को शिक्षा के रूप में कहा गया है, इसलिये असम्बन्ध में सम्बन्ध का निबन्धन होने से अतिशयोक्ति है, दोनों का अङ्गाङ्गिभाव सम्बन्ध होने से संकर है।

**ध्यान—'प'। श्लोकस्थ वर्णबीज 'प' का ध्यान—**

**प—** विचित्रवसनां देवीं द्विभुजां पङ्कजेक्षणाम्।
रक्तचन्दनलिप्ताङ्गीं पद्ममालाविभूषिताम्॥
मणिरत्नादिकेयूररत्नहारैकविग्रहाम्।
चतुर्वर्गप्रदां नित्यां नित्यानन्दमयीं पराम्॥
एवं ध्यात्वा पकारं तु तन्मन्त्रं दशधा जपेत्।
अतःपरं प्रवक्ष्यामि पकाराक्षरमव्ययम्॥
चतुर्वर्गप्रदं वर्णं त्रिशक्तिसहितं प्रिये।
पञ्चदेवमयं वर्णं शरच्चन्द्रमयप्रभम्॥
पञ्चप्राणमयं वर्णं स्वयं परमकुण्डली।
त्रिगुणीसहितं वर्णं आत्मादितत्त्वसंयुतम्।
महामोक्षप्रदं देवि हृदि भावय पार्वति॥

**बीजाक्षर—**'प'; जपादि विधान उपर्युक्त समान। पूजन-यन्त्र—त्रिकोण के मध्य में 'ॐ ह्लीं ह्लीं ह्लीं' लिखे।

**धन/भूमिलाभकर यन्त्र**

**भावार्थ**—हे परमेश्वरि, हे चारुचरिते! आपके पाले हुए हंस भी आपके श्री चरण-कमल को नहीं छोड़ते। वे आपकी चरणगति से शिक्षा पाकर हंसगति-गमन का अभ्यास करते हैं। उनके मणि मञ्जीरयुक्त पग नूपुर अत्यन्त मधुर एवं कलामय स्वर निकालते हैं॥ ९१॥

एवं मकुटादिपादान्तं वर्णयित्वा पुनः स्वरूपं प्रस्तौति—

**गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः**
**शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः।**
**त्वदीयानां भासां प्रतिफलनरागारुणतया**
**शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम्॥ ९२॥**

**लक्ष्मीधरा—गताः** प्राप्ताः, **ते** तव, **मञ्चत्वं** खट्वारूपत्वं **द्रुहिणहरिरुद्रेश्वरभृतः** द्रुहिणो ब्रह्मा हरिर्विष्णुः रुद्रः ईश्वरः, एते अधिकारपुरुषाः महेश्वरतत्त्वान्तर्गताः ते च ते भृतश्च। क्विबन्तोऽयं शब्दः बहुवचनान्तः। भृतो भृतकाः विशेषणसमासः। तेषां कामरूपाणां अत्यन्तसन्निकृष्टसेवार्थं मञ्चस्य पादचतुष्टयरूपता युज्यत एव। **शिवः** शिवशब्दो व्याख्यातः

शिवतत्त्वात्मक एवाधिकारिपुरुषः । यद्वा—सदाशिवतत्त्वम् । **स्वच्छच्छायाघटितकपट-प्रच्छदपटः** स्वच्छा चासौ छाया च स्वच्छच्छाया, कान्तिः सैव घटितः कपटप्रच्छदपटः शुभ्रकान्तिरेववस्त्रात्मनावस्थित इत्यर्थः । **त्वदीयानां** भवत्सम्बन्धिनीनां, **भासां** कान्तीनाम्, **प्रतिफलनरागारुणतया** प्रतिफलनेन यो रागः रक्तिमा सङ्क्रान्तः तेनारुणो रक्तवर्णः तस्य भावस्तत्ता तया । **शरीरी** मूर्तः, **शृङ्गारः** शृङ्गाराख्यो, **रस इव** । शृङ्गाररसः रक्तवर्ण इति महाकविप्रसिद्धिः । इवशब्दः सम्भावनायाम् । **दृशां** भवद्वीक्षणानां, **दोग्धि** दुग्धे प्रसूते करोतीति यावत्, **कुतुकम्** आनन्दम् ॥

**अत्रेत्थं पदयोजना**—हे भगवति ! ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः गताः; शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः सन् त्वदीयानां भासां प्रतिफलनरागारुणतया शरीरी शृङ्गारो रस इव दृशां कुतुकं दोग्धि ॥

**अत्रेदमनुसन्धेयम्**—आधारस्वाधिष्ठानमणिपूरानाहतविशुद्ध्याज्ञाचक्रात्मकं षट्चक्र-सदनं पृथिव्यग्निजलवायुगगनमनस्तत्त्वाधिष्ठितानि एकादशेन्द्रियाधिष्ठानं च । एवं आज्ञा-चक्रान्ते एकविंशतितत्त्वान्यधिष्ठितानि तदात्मनावस्थितानि । तव उपरि मायाशुद्धविद्या-महेश्वरसदा शिवात्मकतत्त्वचतुष्टयं ब्रह्मग्रन्थ्यनन्तरभाविचतुर्द्वारात्मकभूपुरत्रितयात्मक श्रीचक्र-द्वारचतुष्टये स्थितम् । प्रागादिद्वारदेशेषु मायादीनि चत्वारि तत्त्वानि । तान्येव मञ्चस्य चतुष्पदानि । शुद्धविद्यायाः सदाशिवतत्त्वाभिनिवेशात् तच्छायापत्त्या सहस्रकमलान्तर्गतशिवः सदाशिवात्मा अनुरागवशात् शुद्धविद्यायाः संवलनात् तादात्म्यं प्रतीयते । सहस्रकमलान्त-स्स्थितस्य चतुर्द्वारात्मकस्य कर्णिकारूपस्य श्रीचक्रस्य मध्यवर्तिचतुरश्रात्मकबैन्दवापरपर्याय-सरघाशब्दवाच्यसुधासिन्धौ शिवशक्त्योर्मेलनमिति । अवशिष्टं सर्वं 'सुधा-सिन्धोर्मध्ये' इति (८) श्लोकव्याख्यानावसरे कथितम् ॥

अत्र तद्गुणालङ्कारानुप्राणित उत्प्रेक्षालङ्कारः, शिवस्यातिधवलस्य कामेश्वरीतनुकान्त्या ताद्गुण्यात् शरीरी शृङ्गारो रस इवेत्युत्प्रेक्षणादिति ॥ ९२ ॥

## * सरला *

अब तक मुकुटादि पादान्त वर्णन कर पुनः भगवती के स्वरूप को प्रस्तुत करते हैं—

**गतास्त** इति । **गताः** प्राप्त है, **ते** आपके, **मञ्चत्वं** खट्वा रूप को, **द्रुहिण हरि-रुद्रेश्वरभृतः** ब्रह्मा, विष्णु, रुद्र और ईश्वर ये अधिकारी पुरुष हैं, जो महेश्वर तत्त्व के अन्तर्गत आते हैं । **भृतः** यह क्विबन्त है । यहाँ इसका प्रयोग बहुवचन में हुआ है । **भृतः** भृतक विशेषण समास है । ये अपनी इच्छानुसार रूप धारण करने में समर्थ हैं, अतः भगवती की अत्यन्त सन्निकृष्ट सेवा के लिये मञ्च के चार पाद की रूपता इनमें उचित ही है । **शिवः** शिव शब्द की व्याख्या की जा चुकी है, खट्वा में शिवतत्त्वात्मक ही अधिकार पुरुष हो सकते हैं, अथवा यही सदाशिव के तत्त्व हैं—**स्वच्छच्छायाघटितकपटप्रच्छदपटः** सदाशिव की शुभ्र कान्ति ही वस्त्रात्मना स्थित है इसका यही अर्थ है **त्वदीयानां** आप से सम्बन्ध रखने वाली, **भासां** कान्तियों की, **प्रतिफलनरागारुणतया** आप के प्रतिबिम्ब की रक्तिमा के संक्रान्त होने के कारण रक्तवर्णता को प्राप्त हुये, **शरीरी** मूर्तिमान्, **शृङ्गारः** शृङ्गार नामक, **रस इव** रस के समान, शृङ्गार रस का वर्ण रक्त हैं ऐसी कविजनों में प्रसिद्धि है । यहाँ इव शब्द सम्भावना अर्थ में है, **दृशां** आप की आँखों का, **दोग्धि** उत्पन्न करता है । **कुतुकं** आनन्द ॥

**पदयोजना का अर्थ**—हे भगवति ! ब्रह्मदेव, विष्णु, रुद्र और ईश्वर ये भृतक बनकर आपके मञ्च के चारपाये के रूप में स्थित हैं और सदाशिव, अपनी शुभ्र कान्ति के बहाने प्रच्छदपट (चादर) बन कर स्थित हैं जिन पर आपके शरीर की कान्ति प्रतिबिम्बित होने से वे मूर्त्तिमान् शृङ्गार रस के समान (लाल) आपके नेत्रों में कुतूहल उत्पन्न कर रहे हैं ॥

यहाँ यह अनुसंधातव्य है कि आधार, स्वाधिष्ठान, मणिपूर, अनाहत, विशुद्ध और आज्ञाचक्र ये षट्चक्र सदन, पृथ्वी, अग्नि, जल, वायु, आकाश एवं मन तत्त्वों से अधिष्ठित हैं, तथा एकादशेन्द्रियों के अधिष्ठान भी हैं। इसी प्रकार आज्ञाचक्र के अन्त में २१ तत्त्व भी उन-उन रूपों से अधिष्ठित हैं। उसके भी ऊपर माया, शुद्धविद्या, महेश्वर सदाशिवात्मक ये तत्त्व-चतुष्टय ब्रह्मग्रन्थि के अनन्तर रहने वाले चतुर्द्वारात्मक भूपुरत्रितयात्मक 'श्रीचक्र' के द्वार में स्थित हैं। पूर्वादि द्वारदेश में माया आदि चार तत्त्वों की स्थिति हैं। वही मञ्च के चार पाये हैं। शुद्धविद्या के सदाशिवतत्त्व में अभिनिवेश से उसकी छाया पड़ने से सहस्र कमलान्तर्गत शिव सदाशिवात्मा अनुरागवश शुद्धविद्या से संवलित (मिल) जाने के कारण तादात्म्य रूप से एक होकर एक-जैसे भासित होते हैं। सहस्रकमल के अन्त में स्थित चतुर्द्वारात्मक कर्णिका रूप 'श्रीचक्र' के मध्य में रहने वाले चतुष्कोणात्मक बैन्दवस्थान, जिसका परपर्याय सरघाशब्दवाच्य सुधासिन्धु है, उसी में शिव-शक्ति का सम्मिलन होता है। शेष बातें 'सुधासिन्धोर्मध्ये' इस आठवें श्लोक की व्याख्या के अवसर पर कह दी गई हैं।

यहाँ तद्गुण अलङ्कार से अनुप्राणित उत्प्रेक्षालङ्कार है। अत्यन्त शुभ्र वर्ण वाले शिवतत्त्व के कामेश्वरी की शरीर की कान्ति से तद्गुण हो जाने के कारण उनमें (शरीर पर) शृङ्गार रस की उत्प्रेक्षा होने से उत्प्रेक्षालङ्कार है ॥ ९२ ॥

**ध्यान—'ग'। श्लोकस्थ वर्णबीज 'ग' का ध्यान—**

ग— दाडिमीपुष्पसङ्काशां चतुर्बाहुसमन्विताम्।
रक्ताम्बरधरां नित्यां रक्तालङ्कारभूषिताम् ॥
एवं ध्यात्वा गकारं तु तन्मन्त्रं दशधा जपेत्।
पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये ॥
तरुणादित्यसङ्काशां कुण्डलीं प्रणमाम्यहम्।
अग्राकुञ्चितरेखा या गणेशी सा प्रकीर्त्तिता ॥
ततो दक्षगता या तु कमला तत्र संस्थिता।
अधोगता गता या तु तस्यामीशः सदा वसेत् ॥

**बीजाक्षर**—'ग'; जप-संख्या—१०२०; जप-स्थान—सहस्रारचक्रः होम—द्राक्षा, बिल्वफल, पायस और रक्तकमल से—१०२ अथवा १२; तर्पण—१२; मार्जन—१२, श्लोक-पाठसंख्या—१२; श्लोकपाठ-आहुति—८।

**राज्यलाभकर यन्त्र**

ॐ ह्रीं
ह्रीं
ह्रीं

**भावार्थ**—हे भगवति ! आपके चार सेवकों अर्थात् द्रुहिण, हरि, रुद्र और ईश्वर—इनसे आपका मञ्च बना है। श्री शिव आपके स्फटिक-वर्ण वाले बिस्तर हैं। वे आपकी अरुण वर्ण की आभा से लाल देह वाले दीखते हैं।

उनके शरीर में झलकती हुई आपके देह की वह रक्त छाया आपके रसमय नेत्रों को आनन्द देती है ।

**विमर्श**—षट्चक्र के मूलाधार से आज्ञापर्यन्त षट्तत्त्व कहे गए हैं—भू, जल, अग्नि, वायु, आकाश और मनस् । फिर दश इन्द्रियों के २१ तत्त्व हैं । इनके परे चार तत्त्व हैं—माया, विद्या, महेश्वर और सदाशिव । इन चारों का स्थान श्रीचक्रभूपुर के चार द्वारों पर है । चक्र की पूर्व दिशा से प्रारम्भ कर इन दैवतों का स्थितिक्रम है । ये चार महातत्त्व आपके पर्यङ्क के चार पाए हैं । श्री शुद्धविद्या श्री सदाशिव के साथ एकरूप है । यह तन्मयी भाव है । इन दोनों शिव-शक्ति की एकता श्रीचक्र के केन्द्र-बिन्दु (बैन्दव स्थान) में कही गयी है ॥ ९२ ॥

**अराला केशेषु प्रकृतिसरला मन्दहसिते**
**शिरीषाभा चित्ते दृषदुपलशोभा कुचतटे ।**
**भृशं तन्वी मध्ये पृथुरुरसिजारोहविषये**
**जगत्त्रातुं शम्भोर्जयति करुणा काचिदरुणा ॥ ९३ ॥**

**लक्ष्मीधरा**—**अराला** वक्रा, **केशेषु** नान्यत्रेत्यर्थः । **प्रकृतिसरला** प्रकृत्या स्वभावेन सरला ऋज्वी, **मन्दहसिते** मन्दस्मिते, **शिरीषाभा** शिरीषकुसुमाभा अतिमृद्वीत्यर्थः । **चित्ते** अतःकरणे **दृषदुपलशोभा** दृषदि य उपलः पेषणिका दृषदुपल इति पूर्वमेवोक्तं तस्येव शोभा यस्याः सा । **कुचतटे** स्तनतटे, **भृशं** अत्यर्थं, **तन्वी** कृशा, **मध्ये** वलग्ने, **पृथुः** स्थूला, **उरसिजारोहविषये** स्तनविषये नितम्बविषये च । विषयशब्दः स्थलवाची । **जगत्** प्रपञ्चं, **त्रातुं** रक्षितुं, **शम्भोः** सदाशिवस्य, **जयति** अहमेवेति स्फुरतीत्यर्थः । **करुणा** कृपात्मिका, **काचित्** अनिर्वाच्या, **अरुणा** अरुणाख्या शक्तिः । यद्वा—अरुणवर्णा काचित् करुणा कृपा करुणाया आरुण्यारोपात् मूर्ता करुणेव भातीति वाक्यार्थः । अरुणाख्या शक्तिरर्थादवगता ॥

**अत्रेत्थं पदयोजना**—शम्भोः काचित् केशेषु अराला मन्दहसिते प्रकृतिसरला चित्ते शिरीषाभा कुचतटे दृषदुपलशोभा मध्ये भृशं तन्वी उरसिजारोहविषये पृथुः अरुणा करुणा जगत् त्रातुं जयति ॥

अत्र कामेश्वर्याः अरुणाकरुणाशब्दाभ्यां निगीर्याध्यवसानात् अतिशयोक्तिः ॥ ९३ ॥

*** सरला ***

**अराला** इति । **अराला** वक्र, **केशेषु** केवल केश में ही, अन्यत्र नहीं । **प्रकृतिसरला** स्वभावतः ऋजु, **मन्दहसिते** मन्दस्मित में, **शिरीषाभा** शिरीषपुष्प के समान अत्यन्त कोमल, **चित्ते** अन्तःकरण में, **दृषदुपलशोभा** लोढे के समान शोभा वाली, **कुचतटे** स्तनतट में, **भृशं** अत्यन्त, **तन्वी** कृश, **मध्ये** कटिभाग में, **पृथुः** स्थूल, **उरसिजारोहविषये** स्तन और नितम्ब दोनों के विषय में । यहाँ विषय शब्द 'स्थल' का वाचक है । **जगत्** इस प्रपञ्च की, **त्रातुं** रक्षा करने के लिये, **शम्भोः** सदाशिव की, **जयति** केवल मैं ही हूँ इस रूप में स्फुरित हो रही है, **करुणा** कृपात्मिका, **काचित्** अनिर्वाच्य रूप वाली, **अरुणा** अरुणा नामक शक्ति, अथवा अरुणवर्णा काचित् कृपा । यहाँ करुणा का अरुणा में आरोप होने से जो मूर्त्तिमान् करुणा जैसी भासित होती है, यह वाक्यार्थ है, अरुणा नाम की शक्ति इस प्रकार अर्थ की प्रतीति हो रही है ।

**पदयोजना का अर्थ**—सदाशिव की कोई अनिर्वाच्य शक्ति जो केश में वक्र है, मन्दहास मे स्वभावतः सरल है, नित्त में शिरीषपुष्प के समान अत्यन्त कोमल है, कुचतट मे लोढ़े के समान कठिन है, मध्य भाग अर्थात् कटितट में अत्यन्त सूक्ष्म या कृश है, स्तन तथा नितम्ब स्थल में अत्यन्त पृथु है ऐसी अरुणा—करुणा का रूप धारण कर संसार की रक्षा के लिये स्फुरित होती हुई प्रतीत हो रही है ।

यहाँ कामेश्वरी को अरुणा एवं करुणा शब्द से निगरण (निगल लेने) करने के कारण अतिशयोक्ति अलङ्कार है ॥ ९३ ॥

**ध्यान—'अ' । श्लोकस्थ वर्णबीज 'अ' का ध्यान** इस प्रकार है—

**अ—** केतकीपुष्पगर्भाभां द्विभुजां हंसलोचनाम् ।
शुक्लपट्टाम्बरधरां पद्ममालाविभूषिताम् ॥
चतुर्वर्गप्रदां नित्यं नित्यानन्दमयीं पराम् ।
वराभयकरां देवीं नागपाशसमन्विताम् ॥
शृणु तत्त्वमकारस्य अतिगोप्यं वरानने ।
शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा ॥
पञ्चदेवमयं वर्णं शक्तिद्वयसमन्वितम् ।
निर्गुणं सगुणोपेतं स्वयं कैवल्यमूर्तिमान् ।
बिन्दुद्वयमयं वर्णं स्वयं प्रकृतिरूपिणी ॥

**सकलाभीष्टसिद्धिकर यन्त्र**

ॐ ह्रीं
ह्रीं
ह्रीं

**बीजाक्षर**—'अ'; जप-संख्या—१०३०; जप-स्थान—सहस्रारचक्रः होम—द्राक्षा, बिल्वफल, पायस और रक्तकमल से—१०३ अथवा १३ या १४; तर्पण—१३ या १४; मार्जन—१३ या १४; श्लोक-पाठसंख्या—१३ या १४; श्लोकपाठ-आहुति—९; पूजनयन्त्र—पूर्ववत् ।

**भावार्थ**—हे भगवति ! आपके श्रीविग्रह का वर्ण अरुण होने से आप अरुणा हो । भगवान् शिव की आप लावण्यश्री हो । आपके केश धुँघराले हैं । आपका स्मित सहज हास्य है । आपके शरीर की आभा शिरीषवत् लाल है । कुच पाषाणवत् कठोर हैं । कटि अत्यन्त सूक्ष्म है तथा आप श्री के पृथु (जाँघ के जोड़) की श्री विश्व के लिए कल्याणकर है (= अरुणाकामेश्वरी) ॥ ९३ ॥

**कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं**
**कलाभिः कर्पूरैर्मरकतकरण्डं निबिडितम् ।**
**अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं**
**विधिर्भूयोभूयो निबिडयति नूनं तव कृते ॥ ९४ ॥**

**लक्ष्मीधरा—कलङ्कः** लाञ्छनं, **कस्तूरी** मृगनाभिः **रजनिकरबिम्बं** चन्द्रबिम्बं, **जलमयम्** । स्वार्थे मयट् । पन्नीरमित्यर्थः । **कलाभिः** कलात्मकैः, **कर्पूरैः** सह **मरकतकरण्डं** मरकतमणिना रचितम् । मरकतशब्दो वर्णव्यत्ययेन मकरशब्दादुत्पन्नः मकरात्

मकरतः । मकरवक्त्राज्जातं मकरतमिति भोजराजः । करण्डं **निबिडितं** अन्तःपूरितम् । **अतः त्वद्भोगेन** तव देव्याः उपभोगेनानुभवेन कस्तूरीपन्नीरकर्पूराणां अनुभवेन, **प्रतिदिनं** दिनेदिने **इदं** परिदृश्यमानमिन्दुमण्डलं, **रिक्तकुहरं** शून्यान्तरं, **विधिः** ब्रह्मा, **भूयोभूयः** प्रतिदिनं **निबिडयति** पूरयति । **नूनं तव कृते** तुभ्यमित्यर्थः ।

अर्थे कृते च तादर्थ्ये निपातद्वयमीरितम् ।

इति कृतेशब्दस्तादर्थ्ये निपातितः तद्योगे षष्ठ्येव ॥

**अत्रेत्थं पदयोजना**—हे भगवति ! कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं कलाभिः कर्पूरैः निबिडितं मरकतकरण्डम् । अतः इदं प्रतिदिनं त्वद्भोगेन रिक्तकुहरं विधिः भूयोभूयः तव कृते निबिडयति नूनम् ।

अत्रातिशयोक्तिरलङ्कारः, मरकतकरण्डत्वेन चन्द्रमण्डलस्याध्यवसानात् । यद्वा— अपह्नवालङ्कारः, अयं कलङ्को न भवति अपि तु कस्तूरी; इदं रजनिकरबिम्बं न भवति, किन्तु बहिः प्रतिफलितमन्तर्गतं पन्नीरं, इमाः कलाः न भवन्ति अपि तु कर्पूररजः; इदमिन्दुमण्डलं अन्तस्स्थितद्रव्यप्रतिफलनवशात् पीतवर्णं प्रतीयते, वस्तुतस्तु श्वेतवर्णमेवेत्याद्यवस्थापह्नवमालायाः प्रतीतेः ; उत्प्रेक्षालङ्कारश्च; प्रतिपदादिदिनेषु वृद्धिक्षयवतः चन्द्रमसः कस्तूर्यादिद्रव्यव्ययप्रवेशाभ्यां ईषद्रिक्तत्वसम्पूर्णत्वयोस्सम्भावनात् । अतः अनयोरनुसृष्टिः अङ्गाङ्गिभावेन पृथक्स्थित्या अवस्थानात् ॥ ९४ ॥

## * सरला *

**कलङ्क** इति । **कलङ्क** लाञ्छन, **कस्तूरी** मृगनाभि, **रजनिकरबिम्बं** चन्द्रबिम्ब, **जलमयं** यहाँ स्वार्थ में मयट् प्रत्यय है । पन्नीर इसका अर्थ है । **कलाभिः** कलात्मक कर्पूरों से **मरकतंकरण्डं** मरकतमणि से रचित (पिटारी), मरकत शब्द वर्णव्यत्यय होने से मकर शब्द से उत्पन्न हुआ है । **मकरात्** अर्थात् मकर से । मकर के मुख से उत्पन्न होने वाला 'मकरतं' ऐसा भोजराज का कहना है । **करण्डं निबिडितं** भीतर से परिपूर्ण, **अतः त्वद्-भोगेन** आप देवी के उपभोग रूप अनुभव से अर्थात् कस्तूरी, पन्नीर और कर्पूर के अनुभव से, **प्रतिदिनं** दिन प्रतिदिन, **इदं** यह दिखाई पड़ने वाला इन्दुमण्डल, **रिक्तकुहरं** जब उपयोग से खाली हो जाता है, तब **विधिः** ब्रह्मदेव, **भूयोभूयः** प्रतिदिन, **निबिडयति** पूर्ण कर देते हैं, **नूनं तवकृते** आपके लिये, तादर्थ्य में 'अर्थे' और 'कृते' ये दो निपातन होते हैं । यहाँ प्रकृत में 'कृते' यह शब्द तादर्थ्य में निपातन किया गया है । अतः तादर्थ्य में षष्ठी विभक्ति ही होती है ।

**पदयोजना का अर्थ**—हे भगवति ! कलङ्क, कस्तूरी, चन्द्रबिम्ब, पन्नीर तथा कला युक्त कर्पूरों से परिपूर्ण इस मरकतमणि के करण्डक (पिटारी) को जो प्रतिदिन आपके उपभोग से रिक्त हो जाता है उसे ब्रह्मदेव पुनः पुनः आपके लिये भर दिया करते हैं यह बात निश्चित है ।

यहाँ अतिशयोक्ति अलङ्कार है क्योंकि चन्द्रमण्डल को मरकत करण्ड से अध्यवसान किया गया है, अथवा अपह्नवालङ्कार है क्योंकि कलङ्क नहीं है । किन्तु कस्तूरी है यह रजनिकर (चन्द्र) का बिम्ब नहीं है । किन्तु बाहर से प्रतिफलित अन्तर्गत पन्नीर है, यह कलाएँ नहीं हैं, अपितु कर्पूर रज है यह इन्दुमण्डल भीतर के रहने वाले द्रव्यों से प्रतिबिम्बित होने के कारण पीतवर्ण प्रतीत हो रहा है । वस्तुतः यह श्वेतवर्ण ही हैं इत्यादि अवस्थाओं से

अपह्नव माला की प्रतीति भी होती है। यहाँ उत्प्रेक्षालङ्कार भी है। प्रतिपदादि क्रम से चन्द्रमा की वृद्धि और क्षय से कस्तूरी आदि द्रव्यों का क्षय एवं पुनः उनके प्रवेश के द्वारा चन्द्रमा के ईषद् रिक्तत्व और पूर्णत्व की सम्भावना की गई है। अतः अङ्गाङ्गिभाव होने से पृथक् स्थित् रहने के कारण दोनों मिलाकर संसृष्टि है ॥ ९४ ॥

**ध्यान—स्—** करीषभूषिताङ्गीं च साट्टहासां दिगम्बरीम्।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम् ॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम्।
सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम् ॥
एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत्।
सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम्।
कोटिविद्युल्लताकारं कुण्डलीमयसंयुतम् ॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा।
रजस्सत्वतमोयुक्तं त्रिबिन्दुसहितं सदा ॥

**इष्टसाधक यन्त्र**

ॐ ह्रीं
ह्रीं
ह्रीं

**बीजाक्षर**—'स'; जप-संख्या—१०४०; जप-स्थान—सहस्रारचक्र: होम—द्राक्षा, बिल्वफल, पायस और रक्तकमल से—१०४ अथवा १४; तर्पण—१४; मार्जन—१४; श्लोक-पाठसंख्या—१४; श्लोकपाठ-आहुति—१०; पूजनयन्त्र—त्रिकोण, उसके मध्य में 'ॐ ह्रीं ह्रीं ह्रीं' लिखे।

**भावार्थ**—हे भगवति! श्री चन्द्र की कालिमा कस्तूरी है। श्री रजनिकर चन्द्र का जलमय बिम्ब मरकत मणि का बना हुआ कला-कर्पूर से भरा करण्ड (= पिटारी) है। आपके भोग में यह द्रव्य प्रतिदिन खर्च होने से खाली हो जाता है तब श्री ब्रह्मा फिर उस करण्डक को पुनः भरते हैं।

**विमर्श**—चन्द्र को इस श्लोक में मरकत मणि के करण्डक (= डिब्बा) की उपमा दी गई है, जिसमें श्री भगवती के नैवेद्यार्थ कस्तूरी तथा कर्पूर भरा हुआ है। श्री भगवती के सेवक ब्रह्मा नित्य उसकी पूर्ति करते रहते हैं ॥ ९४ ॥

**पुरारातेरन्तः पुरमसि ततस्त्वच्चरणयोः**
**सपर्यामर्यादा तरलकरणानामसुलभा।**
**तथा ह्येते नीताः शतमखमुखाः सिद्धिमतुलां**
**तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः ॥ ९५ ॥**

**लक्ष्मीधरा—पुराराते:** पुरान्तकस्य, **अन्तःपुरं** अवरोधः पट्टमहिषीति यावत्। **असि** भवसि। **ततः** तस्मात्कारणात्, **त्वच्चरणयोः** तव पादयोः, **सपर्य्यामर्यादा** पूजाप्रकारः, **तरलकरणानां** चञ्चलचित्तानां, **असुलभा** दुर्लभा। 'अन्तःपुरप्रवेशः चञ्चलचित्तानां नास्ति' इति प्रसिद्धम्। अतो निश्चलचित्तैस्तु सौविदल्लैः प्रवेष्टव्यम्' इति नीतिवाक्यामृते। निर्मलचित्तैरेव सुधाम्भोधिमध्यस्थितायाः पादाम्बुजसेवा ज्ञायते नान्यैरित्यर्थः। **तथा, हि**

प्रसिद्धौ । **ऐते नीताः शतमखमुखाः** इन्द्रमुख्याः सुरगुणाः **सिद्धिं** संसिद्धिं, **अतुलां** असदृशीं, **तव** भवत्याः **द्वारोपान्तस्थितिभिः** द्वारसमीपे स्थितयो यासां ताभिः । **अणिमाद्याभिः** अणिमाप्रमुखाभिः सिद्धिभिः सह **अमराः** निर्जराः ॥

**अत्रेत्थं पदयोजना**—हे भगवति! पुरारातेरन्तःपुरमसि । ततस्त्वच्चरणयोस्सपर्या-मर्यादा तरलकरणानामसुलभा । तथा हि—एते शतमखमुखाः अमराः तव द्वारोपान्त-स्थितिभिः अणिमाद्याभिः सह अतुलां सिद्धिं नीताः ।

यथा तव द्वारोपान्तमेव अणिमादिसिद्धयस्सेवन्ते एवमिन्द्रादयोऽपि । इयांस्तु विशेषः—अणिमाद्यष्टसिद्धीनां द्वारपालकत्वेन सर्वदा तत्र वासः स्वभावसिद्धः । इन्द्रादीनां तु तरलकरणत्वात् अन्तःपुरप्रवेशानर्हत्वात् दौवारिकानुमत्या द्वारदेशेऽवस्थानं सिद्धिशब्दार्थः इति तात्पर्यम् ॥ ९५ ॥

## * सरला *

**पुरारातेः** इति । **पुरारातेः** त्रिपुरान्तक भगवान् सदाशिव के, **अन्तःपुरं** अवरोध की पट्टमहिषी, **असि** हो, **ततः** इस कारण से, **त्वच्चरणयोः** आपके पद की, **सपर्या मर्यादा** पूजा का प्रकार, **तरलकरणानां** चञ्चल चित्त वालों के लिये **असुलभा** दुर्लभ है । अन्तःपुर में चञ्चल चित्त वालों का प्रवेश वर्जित है यह प्रसिद्धि है । इसलिये 'निश्चल चित्त वाले सौविदल्लों का ही यहाँ प्रवेश सम्भव है' ऐसा नीतिवाक्यामृत में कहा गया है, अर्थात् निर्मल चित्त वाले ही सुधाम्बोधि मध्यस्थिता भगवती के पादाम्बुजों की सेवा जानते हैं, **तथा हि** यह प्रसिद्धि अर्थ में प्रयुक्त है । **एते नीताः शतमुखप्रमुखाः** इन्द्रादि प्रमुख देवगण, **सिद्धिं** संसिद्धि, **अतुलां** अतुलनीय, **तव** आपकी, **द्वारोपान्त स्थितिभिः** द्वार के सन्निकट रहने वाली, **अणिमाद्याभिः** अणिमा आदि प्रमुख सिद्धियों के साथ, **अमराः** देवगण लौट आते हैं ।

**पदयोजना का अर्थ**—हे भगवति ! आप सदाशिव की पट्टमहिषी हो, इसलिये आपके चरणों की सेवा की मर्यादा चञ्चल चित्त वालों के लिये दुर्लभ है । इसलिये इन्द्रादि प्रमुख देवगण आपके द्वार के समीप रहने वाली अणिमाद्यादि सिद्धियों के साथ अतुल सिद्धि प्राप्त कर लौट आते हैं ।

जिस प्रकार आपके द्वार के समीप की ही अणिमादि सिद्धियाँ सेवा करती रहती हैं, उसी प्रकार इन्द्रादि देवगण भी आपके द्वार की सेवा करते हैं । विशेषता यह है कि अणिमादि अष्टसिद्धियों का द्वारपाल रूपेण सर्वदा वहाँ वास रहता है । यह स्वभाव सिद्ध है । इन्द्रादि देवगण का चञ्चल इन्द्रियों के कारण अन्तःपुर में प्रवेश की योग्यता न होने से दौवारिक की आज्ञा से केवल द्वारदेश तक अवस्थान रहता है, यही 'सिद्धि' शब्द का तात्पर्य है ॥ ९५ ॥

**ध्यान**—पु = प् + उ **श्लोकस्थ वर्णबीज 'पु' का ध्यान**—

**प—** विचित्रवसनां देवीं द्विभुजां पङ्कजेक्षणाम् ।
रक्तचन्दनलिप्ताङ्गीं पद्ममालाविभूषिताम् ॥
मणिरत्नादिकेयूररत्नहारैकरविग्रहाम् ।
चतुर्वर्गप्रदां नित्यां नित्यानन्दमयीं पराम् ॥

एवं ध्यात्वा पकारं तु तन्मन्त्रं दशधा जपेत् ।
अतःपरं प्रवक्ष्यामि पकाराक्षरमव्ययम् ।
चतुर्वर्गप्रदं वर्णं त्रिशक्तिसहितं प्रिये ॥
पञ्चदेवमयं वर्णं शरच्चन्द्रमयप्रभम् ।
पञ्चप्राणमयं वर्णं स्वयं परमकुण्डली ॥
त्रिगुणीसहितं वर्णं आत्मादितत्त्वसंयुतम् ।
महामोक्षप्रदं देवि हृदि भावय पार्वति ॥

उ— पीतवर्णां त्रिनयनां पीताम्बरधरां पराम् ॥
द्विभुजां जटिलां भीमां सर्वसिद्धिप्रदायिनीम् ।
एवं ध्यात्वा सुरश्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥
उकारं परमेशानि अधःकुण्डलिनी स्वयम् ।
पीतचम्पकसङ्काशं पञ्चदेवमयं सदा ।
पञ्चप्राणमयं देवि चतुर्वर्गप्रदायकम् ॥

**सद्योव्रणविरोपणयन्त्र**

**बीजाक्षर**—'पु'; जप-संख्या—१०६०; जप-स्थान—सहस्रारचक्र, होम—द्राक्षा, बिल्वफल, पायस और रक्तकमल से—१०६ अथवा १६; तर्पण—१६; मार्जन—१६; श्लोक-पाठसंख्या—१६; श्लोकपाठ-आहुति—१२; पूजनयन्त्र—त्रिकोण के मध्य में 'ॐ ह्रीं' लिखे ।

**भावार्थ**—आप त्रिपुरसंहारी शिव जी के अन्तःपुर की महाराज्ञी हैं । अतः आपके चरणों की पूजा की मर्यादा चञ्चल इन्द्रियों वाले मनुष्यों को सुलभ नहीं है अर्थात् एकमात्र जितेन्द्रिय ही आपकी पूजा कर सकते हैं । इन्द्राद्यि देवता जब आपकी पूजा करने आये तब द्वार पर स्थित अणिमा आदि सिद्धियों के द्वारा रोक दिए गए । देवताओं के पास जो अणिमादि सिद्धियाँ होती हैं उनका स्थान भगवती के अन्तःपुर के बाहर ही है, जैसा कि श्रीचक्र के भूगृह के बहिर्द्वारों पर उनका स्थान बताया गया है । कहा भी है—'देवो भूत्वा देवं यजेत्' और सिद्धियाँ भी अन्तःपुर में प्रवेश नहीं कर पाती । इसलिए असंयतेन्द्रिय चञ्चल चित्त वाले मनुष्यों की वहाँ तक गति ही दुर्लभ है । उनको भगवती की पूजा करने का सौभाग्य प्राप्त नहीं होता ॥ ९५ ॥

**कलत्रं वैधात्रं कतिकति भजन्ते न कवयः**
**श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः ।**
**महादेवं हित्वा तव सति सतीनामचरमे**
**कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः ॥ ९६ ॥**

**लक्ष्मीधरा**—कश्मलात्त्रायत इति **कलत्रं** पत्नी । कश्मलं नरकं मध्यवर्णलोपः पृषोदरादित्वात्साधुः । कलत्रं कश्मलात् त्रायत इति रक्षितः । **वैधात्रं** विधातृसम्बन्धि । विधातृशब्दस्य 'तस्येदम्' इत्यणि कृते सम्बन्धमात्रपरत्वे तद्विशेषजिज्ञासायां कलत्रशब्दस्यान्वय इति । धातुः कलत्रमित्युक्ते तु सम्बन्धमात्रे निहिता षष्ठी सम्बन्धिन्येव पर्यवस्यतीति

साक्षादन्वय इति भावः । अतो नायं प्रयोगो दोषावहः । वैधात्रं कलत्रं सरस्वतीं **कतिकति भजन्ते** सेवन्ते । **न कवयः** के वा कवयो न भजन्ते, सर्वेऽपि भजन्त इत्यर्थः । **श्रियो देव्याः** लक्ष्म्याः, **को वा न भवति पतिः कैरपि धनैः । महादेवं** सदाशिवं **हित्वा तव** भवत्याः, सति ! पतिव्रते ! **सतीनां** पतिव्रतानां, **अचरमे** ! अग्रगण्ये ! **कुचाभ्यां आसङ्गः** आलिङ्गः, **कुरवकतरोरपि असुलभः** सुलभो न भवति । कुचालिङ्गनं दोहदत्वेनापि कुरवकतरोरचेतनस्यापि न सम्भवति, किमु वक्तव्यं पुरुषान्तर इति पातिव्रत्यं वाचामगोचरमिति भावः ॥

**अत्रेत्थं पदयोजना**—हे सति ! वैधात्रं कलत्रं कतिकति कवयः न भजन्ते । श्रियो देव्याः कैरपि धनैः को वा पतिः न भवति । हे सतीनामचरमे ! महादेवं हित्वा तव कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः ॥

**अयमर्थः**—ये मन्त्रजपाद्यासादितसारस्वताः ते सरस्वती वल्लभा इति गीयन्ते । ये धनधान्याश्वगजादिसमृद्धिमन्तः ते लक्ष्मीपतयः इति गीयन्ते । पार्वतीपतिस्तु महादेव एवेति पातिव्रत्यमहिमा अवाङ्मनसगोचर इति ॥ ९६ ॥

## * सरला *

**कलत्रमिति** । जो कश्मल से बचावे वही **'कलत्र'** है । **कश्मल** नरक को कहते हैं । पृषोदरादि गण होने से मध्यम वर्ण का लोप कर इस शब्द की सिद्धि हो जाती है । 'कश्मलात् त्रायते इति कलत्र' ऐसा अमरकोष के टीकाकार **रक्षित** का भी मत है । **वैधात्रं** विधाता सम्बन्धी, यहाँ 'तस्येदम्' इस सूत्र से अण् करने पर विधाता के सम्बन्ध मात्रापरत्व इस अर्थ में तद्विशेष जिज्ञासा मे कलत्र शब्द का अन्वय है । 'धातुः कलत्रम्' इस वाक्य के कहने पर सम्बन्धमात्र में रहने वाली षष्ठी का सम्बन्धिनि में ही पर्यवसान होता है, अतः वहाँ साक्षात् अन्वय है । इसलिये यह प्रयोग भी दोषावह नहीं है । **वैधात्रं कलत्रं** अर्थात् ब्रह्मा की पत्नी सरस्वती को, **कति कति भजन्ते** सेवा करते हैं, **न कवयः** कौन कवि सेवा नहीं करता, अर्थात् सभी कवि सेवा करते हैं । **श्रियो देव्याः** महालक्ष्मी का, **को वा न भवति पतिः** पति नहीं हो सकता है, **कैरपि धनैः** कौन थोड़ा सा भी धनवान् होकर, **महादेवं** सदाशिव को, **हित्वा** छोड़कर, **तव** आपके, **सति !** हे पतिव्रते ! **सतीनां** पतिव्रताओं में, **अचरमे** अग्रगण्ये, **कुचाभ्यामासङ्गः** आलिङ्गन, **कुरवकतरोरपि असुलभः** कुरवक वृक्ष को भी सुलभ नहीं होता । कुचालिङ्गन दोहदत्व होने पर भी कुरवक के अचेतन होने पर भी सम्भव नहीं है । फिर दूसरे पुरुष के द्वारा कुचालिङ्गन की बात तो बहुत दूर है? अतः आपका पातिव्रत्य वाणी से सर्वथा परे हैं ।

**पदयोजना का अर्थ**—हे सति ! विधाता के कलत्र (= वाणी) की कौन कौन कवि सेवा नहीं करते, अपितु सभी करते ही हैं । श्री देवी का गज-वाजी आदि अनेक प्रकार के धन होने से कौन पति नहीं होता? किन्तु, हे पतिव्रताग्रगण्ये ! महादेव को छोड़कर आपके कुचों का आलिङ्गन कामनापूर्ण करने वाले कुरवक जैसे अचेतन वृक्ष को भी दुर्लभ है ।

यहाँ यह अर्थ है—मन्त्र जपादि के द्वारा सरस्वती को प्राप्त करने वाले सरस्वती वल्लभ कहे जाते हैं, जो धन धान्य अश्व एवं गजादि से समृद्धि युक्त है, वे भी लक्ष्मीपति कहे जाते हैं । किन्तु पार्वती पति तो एक मात्र महादेव ही हैं । अतः आपके पातिव्रत्य की महिमा वाणी और मन के लिये भी अगोचर है ॥ ९६ ॥

**ध्यान—श्लोकस्थ वर्णबीज 'क' का ध्यान** इस प्रकार है—

जपापावकसिन्दूरसदृशीं कामिनीं पराम् ।
चतुर्भुजां त्रिनेत्रां च बाहुवल्लीविराजिताम् ॥
कदम्बकोरकाकारः स्तनयुग्मविराजिताम् ।
रत्नकङ्कणकेयूरहारनूपुरभूषिताम् ॥
एवं ककारं ध्यात्वा तु तन्मन्त्रं दशधा जपेत् ।
शङ्खकुन्दसमा कीर्तिर्मात्रा साक्षात्सरस्वती ॥
कुण्डली चांकुशाकारा कोटिविद्युल्लताऽऽकृतिः ।
कोटिचन्द्रप्रतीकाशो मध्ये शून्यः सदाशिवः ॥
शून्यगर्भस्थिता काली कैवल्यपददायिनी ।
अर्थश्च जायते देवि तथा धर्मश्च नान्यथा ॥
आसनं त्रिपुरा देव्याः ककारः पञ्चदैवतः ।
ईश्वरो यस्तु देवेशि त्रिकोणे तत्त्वसंस्थितः ॥
त्रिकोणमेतत्कथितं योनिमण्डलमुत्तमम् ।
कैवल्यं प्रपदे यस्याः कामिनी सा प्रकीर्तिता ॥
एषा सा कादिविद्या चतुर्वर्गफलप्रदा ।

**सद्योव्रणविरोपणयन्त्र**

**बीजाक्षर**—'क'; जप-संख्या—१०५०; जप-स्थान—सहस्रारचक्रः होम—द्राक्षा, बिल्वफल, पायस और रक्तकमल से—१०५ अथवा १५; तर्पण—१५; मार्जन—१५; श्लोक-पाठसंख्या—१५; श्लोकपाठ-आहुति—११; पूजनयन्त्र—त्रिकोण, उसके मध्य में 'क्लीं' लिखे ।

**भावार्थ**—हे भगवति ! श्री सरस्वती का स्वामित्व अनेक विद्या-विशारदों ने पाया है । अनेक धनवान लक्ष्मीपति कहलाते हैं । आप श्री का कुचालिङ्गन एक श्री महादेव भगवान् शिव के अतिरिक्त किसी ने नहीं पाया । किसी ने तो क्या कामना पूर्ण करने वाले कुरवक वृक्ष ने भी नहीं पाया ॥ ९६ ॥

**गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापि त्वं दुरधिगमनिस्सीममहिमा
महामाया विश्वं भ्रमयसि परब्रह्ममहिषि ॥ ९७ ॥**

**लक्ष्मीधरा—गिरां** वाचां, **आहुः** कथयन्ति । **देवीं** अधिदेवतां **द्रुहिणगृहिणीं** ब्रह्मणः पत्नीं **आगमविदः** आगमरहस्यवेदिनः, **हरेः** विष्णोः, **पत्नीं** जायां, **पद्मां** पद्मालयां **हर-सहचरीं** शम्भुपत्नीं **अद्रितनयां** पार्वतीम् । **तुरीया** चतुर्थी, **कापि** अनिर्वाच्या, **त्वं दुर-धिगमनिस्सीममहिमा** दुःखेन अधिगन्तुं शक्यः स चासौ निस्सीमो महिमा यस्याः सा, देशतः कालतो वस्तुतश्चापरिच्छेद्येत्यर्थः । **महामाया** शुद्धविद्यान्तर्गतं मायातत्त्वं, **विश्वं** प्रपञ्चं, **भ्रमयसि** विवर्तयसीति विवर्तं ब्रह्मधर्मं मायायामतिदिशति । **परब्रह्ममहिषि** परब्रह्मणः सदा-शिवस्य महिषि! तथा च श्रूयते—**'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ'** (तै.आ. ३.१३) इति

श्रीसूक्ते। ह्रीः भुवनेश्वरी लक्ष्मीः श्रीविद्या उभे ब्रह्मणस्ते पत्न्यौ । अत्र तयोर्मध्ये श्रीविद्यायाः प्राधान्यं, श्रीविद्यायां भुवनेश्वर्या अन्तर्भावात् । भुवनेश्वर्यां न श्रीविद्याया अन्तर्भाव इति चन्द्रकलाप्राधान्येन सैव महिषीति ध्येयम् ॥

**अत्रेत्थं पदयोजना**—हे परब्रह्ममहिषि ! आगमविदः त्वामेव द्रुहिणगृहिणीं गिरां देवीमाहुः; त्वामेव हरेः पत्नीं पद्मामाहुः, त्वामेव हरसहचरीं अद्रितनयामाहुः, त्वं तुरीया कापि दुरधिगमनिस्सीममहिमा महामाया सती विश्वं भ्रमयसि ॥

**अयमर्थः**—एकामेव भगवतीं नानानामभिः गृणन्त्यागमविदः परब्रह्ममहिषी श्रीविद्यापरनामधेया चन्द्रकला एकैवेति ॥ ९७ ॥

*** सरला ***

**गिरामिति । गिरां** वाणी के, **आहुः** कहते हैं, **देवीं** अधिदेवता को, **द्रुहणगृहिणीं** ब्रह्मदेव की पत्नी, **आगमविदः** आगमरहस्य के विद्वान्, **हरेः** विष्णु की, **पत्नीं** जाया को, **पद्मां** पद्मालय, **हरसहचरीं** शम्भुपत्नी को, **अद्रितनयां** पार्वती को, **तुरीया** चतुर्थी, **कापि** अनिर्वाच्या, **त्वं दुरधिगम निस्सीममहिमा** जिसकी निःसीम महिमा बहुत क्लेश करने पर जानी जा सके; आपकी महिमा वस्तुतः देश एवं काल से अपरिच्छेद्या है । **महामाया** शुद्धविद्या के अन्तर्गत रहने वाला मायातत्त्व, **विश्वं** इस सारे प्रपञ्च को, **भ्रमयसि** विवर्त्तन करती हो अर्थात् विवर्त्त जो ब्रह्म में रहने वाला धर्म है उसका अतिदेश माया में करती हो, **परब्रह्ममहिषि** परब्रह्म सदाशिव, उनकी महिषि । जैसा कि श्रुति भी कहती हैं—**'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ'** (श्रीसूक्त) ह्रीं भुवनेश्वरी हैं और लक्ष्मी श्रीविद्या हैं । ये दोनों ही ब्रह्मदेव की पत्नियाँ हैं । उन दोनों में श्रीविद्या का ही प्राधान्य है, क्योंकि श्रीविद्या में भुवनेश्वरी का अन्तर्भाव है । भुवनेश्वरी में श्रीविद्या का अन्तर्भाव नहीं है । अतः चन्द्रकलाओं की प्रधानता के कारण वही परब्रह्म की महिषी है ऐसा समझना चाहिए ।

**पदयोजना का अर्थ**—हे परब्रह्ममहिषि ! आगम शास्त्र के विद्वान् आपको ब्रह्मदेव की पत्नी सरस्वती कहते हैं और आप ही को विष्णु पत्नी पद्मालया पद्मा भी कहते हैं तथा आप ही को सदाशिव की सहचरी पार्वती भी कहते हैं किंतु आप कोई अनिर्वाच्य अर्थात् जिसकी महिमा बहुत तपस्या से जानी जा सके, ऐसी महामाया सती हैं जो विश्व को घुमाती रहती हैं ।

इसका तात्पर्य यह है—एक ही भगवती को मन्त्रवेत्ता विद्वान् अनेक नामों से कहते हैं किन्तु परब्रह्ममहिषी श्री विद्यापरनामधेया चन्द्रकला ललिता तो एक ही हैं ॥ ९७ ॥

**ध्यान**—'गि' = ग् + इ । **श्लोकस्थ वर्णबीज 'गि' का ध्यान**—

ग— दाडिमीपुष्पसङ्काशां चतुर्बाहुसमन्विताम् ।
रक्ताम्बरधरां नित्यां रक्तालङ्कारभूषिताम् ॥
एवं ध्यात्वा गकारं तु तन्मन्त्रं दशधा जपेत् ।
पञ्चप्राणमयं वर्णं सर्वशक्त्यात्मकं प्रिये ॥
तरुणादित्यसङ्काशां कुण्डलीं प्रणमाम्यहम् ।
अग्राकुञ्चितरेखा या गणेशी सा प्रकीर्त्तिता ॥
ततो दक्षगता या तु कमला तत्र संस्थिता ।
अधोगता गता या तु तस्यामीशः सदा वसेत् ॥

इ— इकारं परमानन्दं सुगन्धं कुंकुमच्छविः।
हरिब्रह्ममयं वर्णं सदाशिवमयं प्रिये॥
महाशक्तिमयं देवि गुरुब्रह्ममयं तथा।
विश्वत्रयमयं वर्णं परब्रह्मसमन्वितम्॥
ऊर्ध्वाधः कुब्जितामध्ये रेखा तत्सङ्गताभवेत्।
लक्ष्मीर्वाणी तथेन्द्राणी क्रमात्तास्वेव संवसेत्॥
धूम्रवर्णां महारौद्रीं पीताम्बरयुतां पराम्।
कामदां सिद्धिदां सौम्यांनित्योत्साहविवर्द्धिनीम्॥
चतुर्भुजां च वरदां हरिचन्दनभूषिताम्।
एवं ध्यात्वा ब्रह्मरूपां मन्त्रं तु दशधाजपेत्॥

**दृढकायकरयन्त्र**

ह्रीं

**बीजाक्षर**—'गि'; जप-संख्या—१०८०; जप-स्थान—सहस्रारचक्रः होम—द्राक्षा, बिल्वफल, पायस और रक्तकमल से—१०८ अथवा १८; तर्पण—१८; मार्जन—१८; श्लोक-पाठसंख्या—१८; श्लोकपाठ-आहुति—१४; पूजनयन्त्र—त्रिकोण के मध्य में 'ह्रीं' लिखे।

**भावार्थ**—हे माँ, हे परब्रह्ममहिषि ! आगमविद् महापुरुष आपको ही ब्रह्मा की स्त्री सरस्वती कहते हैं। आपको ही हरिकान्ता लक्ष्मी कहते हैं। आपको ही हरवल्लभा गिरिसुता कहते हैं। आप भगवती की महालीला से विश्व आश्चर्य-मुग्ध है। दुरधिगामिनी असीम महिमा वाली आप कोई अनिर्वाच्य तुरीया अर्थात् चौथी ही वस्तु हैं। हे महामाये ! आप विचित्र लीला से इस विश्व को आश्चर्य में डाले हुए हैं॥ ९७॥

**कदा काले मातः कथय कलितालक्तकरसं**
**पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम्।**
**प्रकृत्या मूकानामपि च कविताकारणतया**
**कदा धत्ते वाणीमुखकमलताम्बूलरसताम्॥ ९८॥**

**लक्ष्मीधरा—कदा काले** जन्मप्रभृत्यवसानपर्यन्त इति शेषः। **मातः !** जननि ! **कथय** सम्यगुपदिश। **कलितालक्तकरसं** कलितं उपदिग्धं अलक्तकरसं लक्षारसं यावकं वा। स्त्रीणां पादाधरोष्ठरञ्जनार्थं अलक्तकद्रवं उपदिहन्ति सैरन्ध्र्यः। **पिबेयं** प्रार्थनायां लिङ्। **विद्यार्थी** विद्याः अर्थयत इति विद्यार्थी। यद्वा—अर्थः प्रयोजनमस्य अर्थी विद्याभिः अर्थीति। अत्र रक्षित आह—'अर्थशब्दान्मत्वर्थे इनिप्रत्ययः' इति। अत एव 'तेनार्थवान् लोभपराङ्मुखेन' इति **कालिदासेन** मतुबेव प्रयुक्तः। **माघे**—'नितान्तमर्थिनः' इति णिनिरेव। 'अर्थी समर्थी विद्वान्' इत्यादावपि णिनिरेव। अत एव पूर्वव्याख्यैव समीचीना। **तव** भवत्याः, **चरणनिर्णेजनजलं** चरणयोः पादयोः निर्णेजनजलं पाद्योदकं, **प्रकृत्या** स्वभावेन **मूकानां, अपिः** विरोधे, चकारश्शङ्काच्छेदे, **कविताकारणतया** कवितायाः हेतुतया, **कदा धत्ते वाणीमुखकमलताम्बूलरसतां** वाण्याः सरस्वत्याः मुखकमले यस्ताम्बूलरसः तस्य भावस्तत्ता ताम्॥

**अयं भावः**—भगवतीपादारविन्दनिर्णेजनजलं सालक्तकं कविताहेतुः कवीश्वरस्य वदने स्थितं सरस्वतीताम्बूलरस इव प्रत्यक्षं भाति । स तु कवीश्वरः पुंभावमापन्ना सरस्वतीवाभातीति ॥

**अत्रेत्थं पदयोजना**—हे मातः तव कलितालक्तकरसं चरणनिर्णेजनजलं विद्यार्थी अहं कदा काले पिबेयं कथय । तच्च प्रकृत्या मूकानां अनेडमूकानां वक्तुं श्रोतुं अशिक्षितानामपि च कविताकारणतया वाणीमुखकमलताम्बूलरसतां कदा धत्ते ॥

**अत्रेदमनुसन्धेयम्**—भगवत्पादैः अनेडमूकेभ्यः **लघुचर्चास्तोत्रद्वयं** हस्तमस्तकसंयोगमहिम्ना अवाचि । तन्महिम्ना भगवती पादारविन्दनिर्णेजनजलं तन्मुखे दत्तवती । तन्निर्णेजनजलं पुनः प्रार्थयत्याचार्यः । अनेन सामीप्यमुक्तिरुदिता । तद्विशेषानुत्तरश्लोके विवरिष्यामः । चरणनिर्णेजनजलमिति वदता समयिमतमेवोक्तं, कौलमते भुजगाकारेणैव देव्या अवस्थानात् चरणनिर्णेजनजलस्याभावात् ! सहस्रकमल एव चरणनिर्णेजनजलमिति पूर्वमेव बहुधा प्रपञ्चितम् । अत एव—

**सुधाधारासारैश्चरणयुगलान्तर्विगलितैः ।**
**प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः ॥** (१० श्लोक)

इतीदमर्धं समयमतप्रतिपादकम् ।

**अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं ।**
**स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि ॥**

इतीदमर्धं कौलमतप्रतिपादकमिति विवेकः ॥

अत्रोत्प्रेक्षालङ्कारः, चरणनिर्णेजनालक्तकरसस्य सरस्वतीताम्बूलरसत्वेनाध्यवसानात् । समयिनः साक्षात् सरस्वतीस्वरूपत्वेनाध्यवसानाच्च उत्प्रेक्षातिशयोक्त्योः शङ्करः ॥ ९८ ॥

**ध्यान—श्लोकस्थ वर्णबीज 'क' का ध्यान** इस प्रकार है—

जपापावकसिन्दूरसदृशीं कामिनीं पराम् ।
चतुर्भुजां त्रिनेत्रां च बाहुवल्लीविराजिताम् ॥
कदम्बकोरकाकारः स्तनयुग्मविराजिताम् ।
रत्नकङ्कणकेयूरहारनूपुरभूषिताम् ॥
एवं ककारं ध्यात्वा तु तन्मन्त्रं दशधा जपेत् ।
शङ्खकुन्दसमा कीर्तिर्मात्रा साक्षात्सरस्वती ॥
कुण्डली चांकुशाकारा कोटिविद्युल्लताऽऽकृतिः ।
कोटिचन्द्रप्रतीकाशो मध्ये शून्यः सदाशिवः ॥
शून्यगर्भस्थिता काली कैवल्यपददायिनी ।
अर्थश्च जायते देवि तथा धर्मश्च नान्यथा ॥
आसनं त्रिपुरा देव्याः ककारः पञ्चदैवतः ।
ईश्वरो यस्तु देवेशि त्रिकोणे तत्त्वसंस्थितः ॥
त्रिकोणमेतत्कथितं योनिमण्डलमुत्तमम् ।
कैवल्यं प्रपदे यस्याः कामिनी सा प्रकीर्तिता ॥
एषा सा कादिविद्या चतुर्वर्गफलप्रदा ।

**बीजाक्षर**—'क'; जप-संख्या—१०७०; जप-स्थान—सहस्त्रारचक्र: होम—द्राक्षा, बिल्वफल, पायस और रक्तकमल से—१०७ अथवा १७; तर्पण—१७; मार्जन—१७; श्लोक-पाठसंख्या—१७; श्लोकपाठ-आहुति—१३ या १४; पूजनयन्त्र—त्रिकोण के मध्य में 'ह्रीं' लिखे ।

प्रक्रान्तां स्तुतिम् उपसंहरन् षट्कमलभेदसिद्धान्तं निर्दिशति—

**सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विहरते**
**रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।**
**चिरञ्जीवन्नेव क्षपितपशुपाशव्यतिकरः**
**परानन्दाभिख्यं रसयति रसं त्वद्भजनवान् ॥ ९९ ॥**

**लक्ष्मीधरा—सरस्वत्या** भारत्या, **लक्ष्म्या** पद्मालयया, **विधिहरिसपत्नः** यथाक्रममिति शेषः । सरस्वतीपतित्वेन विधेः ब्रह्मणः सपत्नः असूयास्पदम्, लक्ष्मीपतित्वेन हरेः असूयास्पदमित्यर्थः । **विहरते** विहरमाणः, **रतेः** काममहिष्याः, **पातिव्रत्यं** पतिव्रताधर्मं पुरुषान्तरासम्पर्करूपं **शिथिलयति** मन्मथाकारतया रतेः मन्मथभ्रान्तिं जनयन् सम्भोगेच्छां जनयतीति भावः । **रम्येण** अतिसुन्दरेण, **वपुषा** शरीरेण, तादात्म्यबुद्ध्येति यावत् । एवं सादाख्यायाः कलायाः उपासकस्य ऐहिकफलमुक्त्वा आमुष्मिकमप्याह—**चिरञ्जीवन्नेव** नित्यजीवनस्सन् । सावयवद्रव्यस्य नित्यत्वं पशुपाशव्यतिकरक्षपणहेतुकम् । अत्र केवलव्यतिरेकि अनुमानं साधनत्वेन प्रयोज्यम् । सावयवं यत् **क्षपितपशुपाशव्यतिकरं** न भवति, तन्नित्यं न भवति, यथा पश्वादि, इति जीवन्मुक्तिसिद्धिः । सावयवाः कपिलादयः, मार्कण्डेयादयो नित्यसिद्धाः, अतः अन्वयव्यतिरेकि वा भवतु सावयवस्य नित्यतायां साधनम् । एवं नित्यजीवनः सन् **क्षपितपशुपाशव्यतिकरः** क्षपितः विनष्टः पशुपाशयोः व्यतिकरः । पशुः जीवः, इन्द्रियैः प्रपञ्चं पश्यतीति । यद्वा—पश बन्धने इत्यस्माधातोः पशुः अविद्याबद्धो जीवः, पाशः = अविद्या । एतच्च श्रूयते—

**अदि॒तिः पाशं॒ प्र मु॑मोक्त्वे॒तन्नमः॑ ।**
**प॒शुभ्यः॑ पशु॒पत॑ये करोमि ॥** (तै.सं. ३.१.४)

**अस्यार्थः**—अदितिः आदित्यमण्डलान्तर्गता बैन्दवी शक्तिः । पाशं अविद्याकृतं बन्धं प्रमुमोक्तु प्रकर्षेण अत्यन्तं मोचयतु । एतत् नमः नमस्कारं पशुपतये करोमि । पशुभ्य इति तादर्थ्ये चतुर्थी । तदर्थत्वं निवृत्तिः । पशुत्वनिवृत्त्यर्थम् । अयमर्थः—अदितिः पशुपतिना सदाशिवेन युक्ता पाशविमोचनं करोत्विति । पशुशब्दस्य जीववाचित्वं तैत्तिरीयके सौम्यकाण्डे **'तेषामसुराणाम्'** (तै.सं. ६.१.३) इत्यनुवाके तेषामसुराणामित्यारभ्य 'तस्माद्रुद्रः **पशूनामधिपतिः'** इत्यन्तेन प्रतिपादितम् ।

अतः पशुपाशौ जीवाविद्ये, तयोर्व्यतिकरः सम्बन्धः, स च क्षपितः विदलितपशुपाशसबन्धः सदाशिवतत्त्वात्मनाऽवस्थितः, **परानन्दाभिख्यं** परानन्दात्मिका अभिख्या ज्योतिर्यस्य सः तं परानन्दाभिख्यं ज्योतीरूपं, **रसयति** आस्वादयति **रसं**, सुखं, **त्वद्भजनवान्** त्वद्भक्तः—तव भजनं सेवा ।

**अत्रेत्थं पदयोजना**—हे भगवति! त्वद्भजनवान् सरस्वत्या लक्ष्म्या विधिहरिसपत्नः सन् विहरते । रम्येण वपुषा रतेः पातिव्रत्यं शिथिलयति । क्षपितपशुपाशव्यतिकरः चिरञ्जीवन्नेव परानन्दाभिख्यं रसं रसयति ।

**अत्रेदमनुसन्धेयम्**—जीवन्मुक्तानां अविद्यानिवृत्तावपि कुलालचक्रभ्रमणन्यायेन देहसम्बन्धः । यथोक्तं **षष्टितन्त्रे** सप्तत्याम्—

**सम्यज्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।**
**तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः** ॥ इति ॥

अत्र त्वद्भजनवानित्यत्र द्विविधं भजनं—षट्चक्रसेवात्मकं धारणात्मकं च । आद्यं निरूप्यते—आधारस्वाधिष्ठाने तामिस्रलोकत्वात् नोपास्ये । मणिपूरप्रभृतिसहस्रकमलपर्यन्तं पञ्च चक्राणि पूज्यानीति । (१) तत्र मणिपूरकपूजापराणां सार्ष्टिरूपा मुक्तिः । सार्ष्टिर्नाम देव्याः पुरसमीपे पुरान्तरं निर्माय सेवां कुर्वाणस्य अवस्थितिः । (२) संवित्कमलपूजारतानां सालोक्यमुक्तिः, सालोक्यं नाम देव्याः पट्टणे निवासः । (३) विशुद्धिचक्रोपासकानां सामीप्यमुक्तिः । सामीप्यं नाम अङ्गसेवकत्वम् । (४) आज्ञाचक्रोपासकनां सारूप्यमुक्तिः । सारूप्यं नाम समानरूपत्वम् । पृथग्देहधारित्वेनेति सायुज्याद्भेदः । एतत् चतुर्विधं गौणं बाह्य-दुःखातिवर्तित्वमात्रात् मुक्तिरिति व्यपदिश्यते । परं तु सायुज्यात्मिकैव शाश्वती मुक्तिः सहस्र-कमलोपासकानामेवेति । अत एव परानन्दाभिख्यं रसं यथायोग्यं त्वद्भजनवान् रसयति इति ॥

**अत्रेदं मततत्त्वम्**—षट्कमलभेदमते सुखस्वरूपैव मुक्तिः । सुखं तु लौकिकदृष्टान्तेन स्त्रीसम्भोगात्मिकै(त्मकमे)व । लोकेऽपि स्त्रीसम्मेलनात् परं सुखं नास्ति । एवमत्यन्तदुःखो-च्छेदानन्तरं सायुज्यसंसिद्धौ शिवशक्तिसम्पुटान्तर्भावात् तदात्मिकैव मुक्तिरिति ॥

**तदयमत्र निष्कर्षः**—पूर्वं मूलाधारादिषट्चक्राणां त्रिकोणाष्टकोण-दशारद्वितयमन्व-श्रशिवचक्रात्मना तादात्म्यं प्रतिपादितम् । एतदेव नादबिन्द्वोरैक्यम् । तथा हि—नादो नाम श्रीचक्रम् । बिन्दुर्नाम षट्कमलगहनं वक्ष्यते । तयोरैक्यं नाम आधारचक्रं चतुर्दलं, तत्कर्णिका त्रिकोणात्मिका; स्वाधिष्ठानं षड्दलं, तत्कर्णिका अष्टकोणात्मिका; मणिपूरं दशदलं पद्मं, तत्कर्णिका दशकोणात्मिका; अनाहतं द्वादशदलं, तत्कर्णिका द्वितीयदशकोणा-त्मिकैव; विशुद्धिचक्रं षोडशदलं, तत्कर्णिका चतुर्दशकोणात्मिका; एतावत्पर्यन्तं शक्ति-चक्रैक्यम् । आज्ञाचक्रं द्विदलं, अष्टकोणमेकत्र षोडशकोणमपरत्रेति द्विधा भिन्ना कर्णिका ।

**अयं भावः**—द्विधा भिन्नं चतुरस्रप्रकृतिकं शिवचक्रचतुष्टयात्मकं आधारस्वाधिष्ठाना-त्मकं चेति प्रपञ्चितम् । वृत्तत्रयं स्वाधिष्ठानान्ते एकं वृत्तं रुद्रग्रन्थ्यात्मकं; अनाहतान्ते एकं विष्णुग्रन्थ्यात्मकं, आज्ञाचक्रान्ते एकं ब्रह्मग्रन्थ्यात्मकम् । तत उपरि चतुर्द्वारोपेतं भूपुरत्रितयं द्वारेषु चतुर्षु सोपानयुक्तम् । तच्च सहस्रदलकर्णिका । तस्य कमलस्य दलानि सहस्रम् । बैन्दवस्थानं चतुर्द्वारोपेतं कर्णिकामध्ये । एवं प्रासादन्यायेन श्रीचक्रस्य कमलानां चैक्यमनु-सन्धेयम् । एतच्च नादबिन्द्वैक्यं गुह्यात् गुह्यतमं शिष्यानुग्रहात् उपदिष्टम् ।

अस्मिन् षट्चक्रे पञ्चाशत्कलानामन्तर्भावः कथितः । चन्द्रखण्डे स्वराः, सूर्यखण्डे स्पर्शाः, अग्निखण्डे अन्तस्थाः ऊष्माणश्च हकारवर्जिताः, हकारळकारौ बैन्दवे, क्षकार-स्सर्वत्रेति 'सवित्रीभिः' इति (१७) श्लोकेन प्रागेव प्रतिपादितम् । मूलाधारादिदलेषु कलानां अन्तर्भावः प्रागेव प्रतिपादितः । कलानां तिथ्यात्मकत्वं, नित्यानां कलात्मकत्वं, कलानां

मूलमन्त्रगतपञ्चदशाक्षरात्मकत्वं, पञ्चदशाक्षराणां त्रिखण्डत्वं, त्रिखण्डस्य सोमसूर्यानलात्मकत्वं, सोमसूर्यानलानां ग्रन्थित्रयात्मकत्वं, ग्रन्थित्रयस्य मन्त्रगतह्रीङ्कारत्रयात्मकत्वं, ह्रीङ्कारस्य भुवनेश्वरीमन्त्रत्वं, भुवनेश्वरीमन्त्रस्य मूलमन्त्रान्तर्गतत्वं मूलमन्त्रस्य चक्रेणैक्यं, तच्चक्रनवकस्य मूलाधारादिषट्चक्रेषु ब्रह्मग्रन्थ्यादित्रिकेऽपि सहस्रकमलकर्णिकादौ तादात्म्यम् । एतदेव कलानादयोरैक्यं नाम ।

**अयमत्र निष्कर्षः**—नादेन बिन्दोरैक्यं, बिन्दुना कलायाः ऐक्यं, कलायाश्च नादेनैक्यं, एवं त्रितयं; कलया बिन्दोरैक्यं, कलया नादस्यैक्यं, श्रीविद्याया पञ्चकस्यैक्यमिति षड्विधत्वमैक्यस्येति परमरहस्यं गुरूपदेशवशात् ज्ञेयम् । एवं षोढैक्यं भगवत्याः सपर्येति सम्यगुपवर्णितम् । षोढैक्यानुसन्धानानन्तरं दशभुजा भगवती श्रीविद्या मणिपूरे प्रत्यक्षं परिदृश्यमाना सपर्यया सन्निधेयेति ऐक्यानुसन्धानमेव सपर्येति वदतो ममाशयः इति विज्ञेयम् ।

अधुना बिन्दुस्वरूपं प्रपञ्च्यते—बिन्दुरिति मूलाधारादिचक्रषट्कम् । बिन्दुः जगदुत्पत्तिलयहेतुः शिवस्य शक्तिविशेषः । स च एक एव सहस्रकमलान्तचतुर्द्वारात्मककर्णिकामध्यगतचतुष्कोणात्मकं शक्तितत्त्वम् । तन्मध्यगतशिवतत्त्वं नाद इत्युच्यते । स चतुर्विध इति प्रागेवोक्तम् । उभयोः शक्तिशिवयोः शब्दार्थरूपत्वात् कलात्मकत्वं उभयसाधारणम् । अतश्च मेलनं नादबिन्दुकलातीतमिति समयमतरहस्यम् । स च बिन्दुः दशधा भिद्यते । यथोक्तम्—

**दशधा भिद्यते बिन्दुरेक एव परात्मकः ।**
**चतुर्धाऽऽधारकमले षोढाऽधिष्ठानपङ्कजे ॥**
**उभयाकाररूपत्वादितरेषां तदात्मता ॥** इति ॥

**अस्यार्थः**—एक एव बिन्दुः मूलाधारकमलगतचतुर्दलेषु चतुर्धा, स्वाधिष्ठानपद्मगतषड्दलेषु षोढा, एवं दशधा भिद्यते ।

**अयं भावः**—मूलाधारं चतुष्पत्रं सरसिजं, स्वाधिष्ठानं षड्दलं, मणिपूरं दशदलं, अनाहतपद्मं द्वादशदलं, विशुद्धिपद्मं षोडशदलं, आज्ञाचक्रं द्विदलमिति सर्वयोगशास्त्रसिद्धम् । अत्र आधारपद्मस्य दलचतुष्टयं बिन्दुचतुष्टयात्मकम् । ते च बिन्दवो मनोबुद्ध्यहङ्कारचित्ताख्याः प्रकृत्यात्मकाः जगन्निर्माणहेतव इति सर्वयोगशास्त्रसिद्धम् । स्वाधिष्ठानपद्मगतषड्दलानां कामक्रोधलोभमोहमदमात्सर्यात्मकाः षड्बिन्दवः । अत एव ते संहृतिबिन्दव इत्याहुः । तदुक्तं भगवता **पतञ्जलिना**—

**'स्वाधिष्ठाने संहारः षड्बिन्दुकृतः'** इति ।

एवं दश बिन्दवः कमलद्वयदलात्मकाः । मणिपूरं मूलाधारस्वाधिष्ठानात्मकमिति कृत्वा दशदलम् । अनाहतचक्रे मणिपूरप्रकृतिकं दशदलं, पूर्वकमलद्वयप्रकृतिकं दलद्वयं द्वादशदलं अनाहतपद्मम् । विशुद्धिपद्मं तु अनाहंतचक्रप्रकृतिकं द्वादशदलम्, आधारप्रकृतिकं चतुर्दलम्, एवं षोडशदलम् । तथा मणिपूरप्रकृतिकं दशदलं स्वाधिष्ठानप्रकृतिकं षड्दलमिति षोडशदलम् । आज्ञाचक्रं तु आधारस्वाधिष्ठानात्मकमिति द्विदलम् । एवं मणिपूरप्रभृति आज्ञान्तानि चत्वारि कमलानि मूलाधारस्वाधिष्ठानप्रकृतिकानि । अत एव मूलाधारद्विके उत्तरकमलचतुष्कमन्तर्भूतमिति एकस्यैव बिन्दोः दशधात्वं नान्यथेति सिद्धम् ॥

यद्यपि कौलानां द्विकानुसन्धानात् षट्कमलानुसन्धानफलं सेत्स्यति, तथापि षड्विधै-

क्यानुसन्धानाभावात् कुलमार्ग एवेति न देव्या मणिपूरे सान्निध्यं, पञ्चविधमुक्तियुत्त्यभावश्च, नादबिन्दुकलातीतत्वमप्यसम्भाव्यमेव कौलमते इति । समयिनां तु कार्यभूतचतुष्कानुसन्धानादेव कारणभूतकमलद्वयानुसन्धानफलं सेत्स्यतीति । अत एव पञ्चविधसाम्यसिद्धौ समयसमयिभाव: प्रत्यक्षं परिदृश्यते समयसमयिनो: समयिनां सेवकानामिति भगवत्पादमततत्त्वम् ।

एवं भजनशब्दार्थं प्रतिपाद्य प्रकारान्तरेण भजनशब्दार्थो निरूप्यते । यदाहु: भगवत्पादा:—'धारणापरिज्ञानान्मुक्ति:' इति ।

**अस्यार्थ:**—धारणा: षष्ट्युत्तरत्रिशतसङ्ख्याका: (= ३६०) । धारणा नाम वायो: कमलेषु नादकलाभ्यां निरोध: । स च षट्कमलेषु षोढा सप्तमे कमले समयशब्दाभिलप्येन सार्धं सप्तविध: । एकैकस्मिन् कमले पञ्चाशदिति षष्ट्युत्तरत्रिशतं धारणा: (= ३५०) । ताश्च पृथक् नादबिन्दुकलाभिस्सार्धं मेलनप्रकारैरनन्ता धारणा गुरूपदेशवशादवगन्तव्या: । धारणानां फलं आधारादिचक्रषट्के यथाक्रमं मतिस्मृतिबुद्धिप्रज्ञामेधाप्रतिभासंविद्रूपं दिङ्मात्रं दर्शितम् । अधिकं तु **सुभगोदये चरणागमे** च सप्रपञ्चं बहुधा प्रतिपादितं, तत एवावधार्यं ग्रन्थविस्तरभयान्नोपवर्णितमिहेति । अत एव **कालिदास**भगवत्पादै: कुलसमयमतभेदप्रतिपादकश्लोकेन **सकलजननीस्तोत्रे** कथितम् । यथा—

**चतुष्पत्रान्तष्षड्दलपुटभगान्तस्त्रिवलय-**
**स्फुरद्विद्युद्वह्निद्युमणिनियुताभद्युतिलते ।**
**षडस्रं भित्वाऽऽदौ दशदलमथ द्वादशदलं**
**कलाश्रं च द्व्यश्रं गतवति नमस्ते गिरिसुते ॥ ९ ॥**

**अस्यार्थ:**—चतुष्पत्रं आधारकमलं अन्त: अन्तस्स्थितं अन्तर्भूतमित्यर्थ:, यस्मिन् तत् । स्वाधिष्ठानमिति बहुव्रीहि:, न तु तत्पुरुष:, उत्तरस्य पूर्वस्मिन्नन्तर्भावायोगात् । 'षडस्रं भित्वाऽऽदौ' इत्युत्तरवाक्यानन्वयाच्च बहुव्रीहिरेव । चतुष्पत्रान्तश्च तत् षड्दलं स्वाधिष्ठानं च चतुष्पत्रान्तष्षड्दलम् । तस्य पुटभगा: पुटात्मका: सम्पुटात्मका: तत्प्रकृतिका इति यावत्, ते च ते भगा: त्रिकोणानि । मणिपूरप्रभृति चतुश्चक्रस्य मूलाधारप्रकृतिकत्वस्योक्तत्वात् तेषां त्रिकोणात्मकत्वम् । 'त्रिकोणे बैन्दवं श्लिष्टं अष्टारेऽष्टदलाम्बुजम्' इत्यत्र सम्यङ्निर्णीतम् । पुटभगानां अन्त: मध्ये । त्रिवलयं ग्रन्थित्रयं स्वाधिष्ठानानाहताज्ञान्तेषु अग्निसूर्यचन्द्रात्मकरुद्रग्रन्थिविष्णुग्रन्थिब्रह्मग्रन्थिपर्यायत्वेन स्थितमित्यर्थ: । तत्र स्फुरत् स्फुरन्ती । 'स्त्रिया: पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे' इत्यादिना पुंवद्भाव: । विद्युत: सौदामिन्या: वह्ने: अग्ने: द्युमणेस्सूर्यस्य । नियुतशब्द: अगाणेयां सङ्ख्यां लक्षयति । तस्येवाभा यस्यास्सा, सा च सा द्युतिलता, नित्या तटिद्वल्ली स्थिरसौदामिनीति यावत् । तस्या: सम्बुद्धि: । आज्ञाचक्रान्ते ब्रह्मग्रन्थिभेदनसमये विद्युन्नियुताभा, स्वाधिष्ठानान्ते रुद्रग्रन्थिभेदनसमये वह्निनियुताभा, अनाहतचक्रान्ते विष्णुग्रन्थिभेदनसमये द्युमणिनियुताभा इति विवेक: । षडश्रं मूलाधारगर्भितं स्वाधिष्ठानं आदौ भित्त्वा, अथ तदनन्तरं दशदलं मणिपूरं भित्त्वा, द्वादशदलं अनाहतचक्रं भित्त्वा, कलाश्रं विशुद्धिचक्रं भित्त्वा, द्व्यश्रं आज्ञाचक्रं भित्त्वा गतवति सहस्रकमलमिति शेष: । हे गिरिसुते ! हिमाचलतनये ! ते नम: ।

अत्र चतुष्पत्रं मूलाधारं स्वाधिष्ठाने अन्तर्भूतं कौला: उपासत इति प्रागेव प्रतिपादितम् । समयिनस्तु स्वाधिष्ठानं भित्वा मणिपूरं प्रविष्टाया: देव्या: उपासनं कुर्वन्तीति समयमततत्त्वं च

प्रतिपादितम् ! अत्रेदमुपह्वरं—षट्कमलेषु मनष्षष्ठं भूतपञ्चकं तादात्म्येनावतिष्ठते । तच्च पिण्डाण्डब्रह्माण्डयोरैक्यानुसन्धानमहिम्ना षट्कमलानुसन्धानमहिम्ना पञ्चविधसाम्यानुसन्धान-महिम्ना षड्विधैक्यानुसन्धानमहिम्ना पिण्डाण्डं ब्रह्माण्डवदवभासत इति सर्वयोगशास्त्र-रहस्यम् । अत एव योगिना चतुर्विधैक्यानुसन्धानं कर्तव्यमेव । तथा च श्रूयते—

**पिण्डब्रह्माण्डयोरैक्यं लिङ्गसूत्रात्मनोरपि ।**
**स्वापाव्याकृतयोरैक्यं क्षेत्रज्ञपरमात्मनोः ॥**

**अयमर्थः**—पिण्डाण्डब्रह्माण्डयोरैक्यं ज्ञातव्यम् । तदनन्तरं लिङ्गात्मसूत्रात्मनोरैक्यं अवगन्तव्यम् । तदनन्तरं लिङ्गात्मसूत्रात्मनोरैक्यं अवगन्तव्यम् । लिङ्गात्मा लिङ्गशरीरं एकादशेन्द्रियगणः तन्मात्रापञ्चकं षोडशकं लिङ्गशरीरम् । सूत्रात्मा ब्रह्माण्डावच्छिन्नो वायुः लिङ्गशरीरस्य अर्चिरादिमार्गप्रापकः । तस्योरैक्यमवगन्तव्यम् । स्वापाव्याकृतयोः—स्वापः सुषुप्त्यवस्थापन्नः साक्षी प्राज्ञः अव्याकृतः अविद्याशबलितं ब्रह्म तयोरैक्यम् । क्षेत्रज्ञः जीवः, परमात्मा ब्रह्मस्वरूपं, तयोरैक्यं ज्ञातव्यम् । एवं सम्प्रदायरहस्यसंक्षेपः । विस्तरस्तु **सुभगोदये शारीरके** ज्ञातव्यः । अस्मिन् श्लोके सौन्दर्यलहर्या यावत्प्रमेयजातं समयसिद्धान्तरहस्यत्वेन कौलसिद्धान्तरहस्यत्वेन च प्रतिपादितमस्माभिः संक्षेपतः तत्सर्वं सूक्ष्मदृशा महात्मभिरनु-सन्धेयमिति सर्वमनवद्यम् ॥ ९९ ॥

## * सरला *

इस प्रकार प्रारम्भ की हुई अपनी स्तुति का उपसंहार करते हुये भगवत्पाद षट्कमल के भेद का सिद्धान्त प्रदर्शित करते हैं—

**सरस्वत्या इति—सरस्वत्या** भारती के साथ, **लक्ष्म्या** पद्मालया के साथ, **विधिहरि सपत्नः** सरस्वती पति होने से ब्रह्मदेव की असूया का स्थान, लक्ष्मीपति होने से विष्णु की असूया का स्थान, **विहरते** विहार करता हुआ, **रतेः** काममहिषी का, **पातिव्रत्यं** पतिव्रता धर्म, पुरुषान्तर सम्पर्करूप, **शिथिलयति** मन्मथाकार होने से मन्मथ की भ्रान्ति उत्पन्न करता हुआ उसमें संभोगेच्छा उत्पन्न करता है, **रम्येण** अत्यन्त सुन्दर, **वपुषा** शरीर के द्वारा तादात्म्य बुद्धि से, इस प्रकार सादाख्य कला के उपासक का ऐहिक फल कहकर परलोक का फल कहते हैं, **चिरञ्जीवन्नेव** नित्य जीते हुए, सावयव द्रव्य की नित्यता में पशु-जीव और पाश (माया) दोनों का संक्षय हेतु है । यहाँ केवल व्यतिरेकि अनुमान ही साधन में प्रयोज्य है केवलान्वयि नहीं । जैसे जो क्षपित पशुपाश संक्षय का हेतु नहीं होता वह नित्य नहीं होता है । जिस प्रकार 'पश्वादि' इसी को जीवन्मुक्तिसिद्धि भी कहते हैं । कपिलादि मार्कण्डेयादि सावयव होने पर भी नित्य सिद्ध हैं ही । इसलिये चाहे अन्वय हो, चाहे व्यतिरेकि हो, दोनों ही सावयव द्रव्यों के नित्यता में साधन हैं इस प्रकार नित्य जीते हुये **क्षपित पशुपाश व्यातिकरः** नष्ट हो गया है पशु और पाश का मिश्रण जिसका, यहाँ इन्द्रियैः प्रपञ्चं पश्यति यः सः पशुः इस व्युत्पत्ति से पशु का अर्थ है 'जीव' । दूसरी व्युत्पत्ति के अनुसार बन्धनार्थक 'पश' धातु से पशु का अर्थ है— अविद्या से आबद्ध जीव । पाश अविद्या को कहते हैं । श्रुति भी कहती हैं ।

**अदितिः**—आदित्य मण्डल में रहने वाली 'बैन्दवी शक्ति' अदिति है । **पाश** अर्थात् अविद्या के द्वारा किया गया बन्धन, उसको **प्रमुमोक्तु** अर्थात् अत्यन्त रूप से छुड़ा देवे, **एतत् नमः** उस पशुपति को हम नमस्कार करते है, **पशुभ्यः** में तादर्थ्य में चतुर्थी विभक्ति

है। उसके लिये निवृत्ति, अर्थात् पशुता से निवृत्ति के लिये प्रणाम है। इसका अर्थ इस प्रकार है—अदिति पशुपति (सदाशिव) से युक्त होकर पाशविमोचन करे। पशु शब्द जीव का वाचक है। इसे हम तैत्तिरीय श्रुति के सौम्यकाण्ड में 'तेषामसुराणां' इस अनुवाक में 'तेषामसुराणां' यहाँ से आरम्भ कर 'तस्माद्रुद्रः पशूनामधिपतिः' इत्यन्त पर्यन्त प्रतिपादन कर दिया है। इसलिये पशु एवं पाश 'जीव और अविद्या' के वाचक हैं। उनका व्यतिकर सम्बन्ध अर्थात् विदलित पशुपाश का सम्बन्ध ही सदाशिवात्मना रूप में अवस्थित है। **परानन्दाभिख्यं** परानन्दात्मिका अभिख्या ज्योति है जिसका, उस परानन्दाख्य ज्योतिरूप का, **रसयति** जो आस्वादन करता है वह **रसं** आपकी सेवा करने वाला।

**पदयोजना का अर्थ**—हे भगवति ! आपका भजन करने वाला सरस्वती तथा लक्ष्मी के साथ रह कर ब्रह्मदेव तथा महाविष्णु की ईर्ष्या का आस्पद हो कर विहार करता है, किं बहुना, अपने शरीर के सौन्दर्य से रति की पतिव्रता धर्म को भी शिथिल कर देता है और जीव एवं अविद्या दोनों के सम्बन्धों को तोड़कर चिरञ्जीवी होकर 'परानन्दात्मिका' नामक ज्योति को प्राप्त करता है।

यहाँ यह अनुसन्धातव्य है—अविद्या की निवृत्ति हो जाने पर भी जीवन्मुक्तों का कुलाल चक्र भ्रमण न्याय से देहसम्बन्ध बना रहता है जैसा कि षष्टितन्त्र (= सांख्यसप्पतिः) के सत्तरहवीं कारिका में कहा है—

**सम्यगिति**—सम्यग् ज्ञान की प्राप्ति हो जाने पर एवं शरीर धर्म के अकारण प्राप्ति होने पर संस्कारवशात् जीवन्मुक्त हुए महात्मा शरीर धारण करते हुये कुलालचक्र के भ्रमण के समान स्थित रहते हैं।

यहाँ 'त्वद् भजनवान्' में दो प्रकार का भजन कहा गया है पहला षट्चक्र सेवात्मक, दूसरा धारणात्मक। उसमें प्रथम भजन का निरूपण करते हैं। आधार और अधिष्ठान ये दो चक्र तामिस्र लोक होने के कारण उपासना के योग्य नहीं है। मणिपूर से लेकर सहस्रकमल पर्यन्त पाँच चक्र उपासना (पूजा) के योग्य हैं। (१) उसमें मणिपूरक की पूजा करने वालों की **सार्ष्टि रूपा मुक्ति** होती है अर्थात् देवी के पुर के समीप अपना दूसरा पुर बना कर भगवती की सेवा करते हुये स्थित रहना यह **'सार्ष्टि'** मुक्ति है। (२) संवित्कला में पूजा करने वालों की 'सालोक्य' मुक्ति होती है। देवी के नगर में निवास करना यह **'सालोक्य' मुक्ति** है। (३) विशुद्धिचक्र की उपासना करने वालों की **'सामीप्य' मुक्ति** होती है। (४) आज्ञा चक्र की उपासना करने वालों की **'सारूप्य' मुक्ति** होती है। समान रूप प्राप्त कर लेना यह 'सारूप्य' मुक्ति है। अलग शरीर धारण करने के कारण सायुज्य से इसका भेद है। ये चार प्रकार की मुक्तियाँ गौण मुक्तियाँ हैं जो बाह्य दुःखों के अतिक्रमण करने के कारण मुक्ति कही जाती हैं। किन्तु मुख्य मुक्ति तो सायुज्य ही है जो नित्य है। वह मुक्ति सहस्रदल कमलों की उपासना करने वालों को प्राप्त होती है। इसीलिये परानन्द नामक रस को यथायोग्य आपका भजन करने वाला साधक प्राप्त करता है ऐसा कहा गया है।

इस प्रकार **इस मत का यह तात्पर्य** है - षट्कमल के भेदन करने वालों के मत में सुखस्वरूपा ही मुक्ति कही गई है। लौकिक दृष्टान्त से स्त्री सम्भोग ही सुख है। लोक में

भी स्त्री के सम्मिलन से अधिक सुख नहीं है । इस प्रकार समस्त दुःखों के विनष्ट हो जाने पर सायुज्य की प्राप्ति होती है जो शिवशक्ति के सम्पुट में अन्तर्भाव होने के कारण **'तदात्मिका मुक्ति'** है ।

इसका **निष्कर्ष** इस प्रकार है - पहले हमने मूलाधार आदि षट्चक्रों का त्रिकोण, अष्टकोण, दो दशार, चतुर्दशात्मक कोण का शिवात्मक होने के कारण श्री चक्र में उसका अन्तर्भाव कह दिया है । यही नाद और बिन्दु का ऐक्य भी है । जैसा कि श्रीचक्र नाद है । छः चक्रों का समूह 'बिन्दु' है । इसे आगे चलकर कहेंगे । उनकी एकता इस प्रकार है— (१) आधारचक्र चार दलों वाला है, उसकी कर्णिका त्रिकोणात्मिका है । (२) स्वाधिष्ठान षड्दलात्मक है, उसकी कर्णिका अष्टकोणात्मिका है । (३) मणिपूर में दशदल वाले पद्म हैं, जिसकी कर्णिका दशकोणात्मिका है । (४) अनाहत द्वादशदलात्मक है, उसकी कर्णिका भी दूसरी दशकोणात्मिका है । (५) विशुद्धि चक्र षोडशदलात्मक है, उसकी कर्णिका चतुर्दश कोणात्मिका है । यहाँ तक एकमात्र शक्ति चक्र हैं । (६) आज्ञा चक्र द्विदलात्मक है, जिसका एक पत्र अष्टकोणात्मक और दूसरा पत्र षोडश कोणात्मक होने के कारण उस कर्णिका के दो भेद हैं । इसका यही भाव है—चौकोर शिवचक्र चतुष्टयात्मक के आधार और अधिष्ठान ये दो भेद हैं । यह पहले सविस्तार कह आये हैं । तीन वृत्त हैं, जिनमें एक वृत्त स्वाधिष्ठान के बाद है जिसे **'रुद्र ग्रन्थि'** कहते हैं । दूसरा वृत्त अनाहत के अन्त में हैं इसे **'विष्णु ग्रन्थि'** भी कहते हैं । तीसरा वृत्त आज्ञाचक्र के अन्त में है जिसे **'ब्रह्मग्रन्थि'** भी कहते हैं । उसके बाद चार द्वारों से युक्त तीन भूपुर भी है जो चारों द्वारों के सोपान हैं । वह सोपान सहस्र दल की कर्णिका है । उस सहस्रदल कमल में सहस्र दल हैं । उस सहस्रदल कमल के कर्णिका के मध्य में चार द्वारों से युक्त वैन्दव स्थान है । इस प्रकार प्रासादन्याय से श्रीचक्र के सभी कमलों में एकता है ऐसा समझ लेना चाहिए । नाद एवं बिन्दु की यह एकता अत्यन्त गुह्य है । इसे हमने अपने शिष्यों के ऊपर अनुग्रह कर उपदेश किया है ।

इस षट्चक्र में पचास कलाओं का अन्तर्भाव पहले कह दिया है । चन्द्र खण्ड में स्वरों का, सूर्यखण्ड में स्पर्श वर्णो का, अग्निखण्ड में अन्तःस्थ वर्णों का तथा हकार को छोड़कर ऊष्मा वर्णो का, हकार ळकार का बिन्दु स्थान में, क्षकार सर्वत्र अनुस्यूत है । यह बात हमने 'सवित्रीभिर्वाचां' इस सत्रहवें श्लोक में पहले भी कह दी है । मूलाधारादि दलों में कलाओं का अन्तर्भाव पहले कह आये हैं । कलाएँ तिथ्यात्मक हैं । नित्याओं की कलात्मकता तथा कलाओं का मूल मन्त्रगत पञ्चदशाक्षरात्मकता, पञ्चदश अक्षरों की त्रिखण्डता, त्रिखण्डों की सोमसूर्यानलात्मकता, सोमसूर्यानलों की ग्रन्थित्रयात्मकता, ग्रन्थित्रय का मन्त्रगत ह्रीकार त्रयात्मकता, ह्रींकार का भुवनेश्वरी मन्त्रत्व, भुवनेश्वरी मन्त्र का मूलमन्त्रान्तर्गतत्व, मूलमन्त्र की श्रीचक्र के साथ एकता और उस नवचक्रात्मक का मूलाधारादि षट् चक्रों में ब्रह्मग्रन्थि आदि तीन में तथा सहस्र कमलादि की कर्णिका में तादात्म्य है । इसी को कला और नाद की एकता समझनी चाहिए ।

इसका **तात्पर्य** इस प्रकार है—१. नाद से बिन्दु की एकता है, २. बिन्दु की कला से एकता है और ३. कला की नाद से एकता है—इस प्रकार ये तीन ऐक्य हैं । ४. कला से बिन्दु की एकता तथा ५. कला से नाद की एकता—इस प्रकार श्रीविद्या की पाँच एकता हुई । यह षड्विध की एकता परम रहस्यपूर्ण है । इसे गुरु के उपदेश से जाननी चाहिए ।

इस प्रकार छः प्रकार की एकता ही भगवती की सपर्या है जिसे यहाँ तक हमने अच्छी प्रकार से वर्णन किया। इस प्रकार छः प्रकार के ऐक्य के अनुसन्धान के बाद दशभुजा वाली भगवती श्रीविद्या मणिपूर चक्र में प्रत्यक्ष रूप से दिखाई पड़ती है। इसे सपर्या के द्वारा अपने सन्निधान में लाना चाहिए। मेरा यही आशय है कि ऐक्यानुसन्धान ही सपर्या है।

अब **बिन्दु का स्वरूप** विस्तार से कहते हैं—मूलाधार से लेकर षट्चक्रात्मक स्थान ही बिन्दु है। संसार की उत्पत्ति और लय करने वाला शिव का शक्ति विशेष है। वह एक ही है जो सहस्र कमलान्तर्गत चतुर्द्वारात्मक कर्णिका मध्यगत चतुष्कोणात्मक शक्ति तत्त्व है। उसके मध्य में रहने वाले शिवतत्त्व को 'नाद' कहते हैं। वह चार प्रकार का होता है। इसे पहले भी कह आये हैं। यतः शक्ति और शिव शब्दार्थ रूप है। इसलिये कलात्मकता दोनो में सामान्य रूप से स्थित है। इसलिये उनका मेल नाद, बिन्दु एवं कला से परे है। इतना ही समय मत का रहस्य है। वह बिन्दु दश भेदों वाला है। जैसा कि कहा है—

**दशधेति**। इसका अर्थ इस प्रकार है—एक ही बिन्दु मूलाधार में रहने वाले चार दलों पर होने से चार प्रकार का एवं स्वाधिष्ठानगत षड्दलों पर रहने से छः प्रकार का है। इस प्रकार उसके दस भेद हुये। इसका भाव इस प्रकार है—१. मूलाधार चतुष्पत्रात्मक पद्म है, २. स्वाधिष्ठान षड्दलात्मक, ३. मणिपूर दशदलात्मक, ४. अनाहत पद्म द्वादशदलात्मक, ५. विशुद्धि पद्म षोडशदलात्मक, ६. आज्ञाचक्र द्विदलात्मक है। यह बात सभी योगशास्त्रों में प्रसिद्ध हैं। इनमें आधारदल के चार दल 'बिन्दु-चतुष्टयात्मक' हैं। वे बिन्दु मन, बुद्धि, चित्त और अहंकार रूप हैं, जो प्रकृत्यात्मक रूप से जगत् के निर्माण में हेतु हैं। इसे सभी योगशास्त्र मानते हैं। स्वाधिष्ठान में रहने वाले षड्दल, काम, क्रोध, लोभ, मोह, मद मात्सर्यात्मक षड् बिन्दुस्वरूप हैं। इसलिये वे संहार-बिन्दु भी कहे जाते हैं, जैसा कि भगवान् पतञ्जलि भी कहते हैं—स्वाधिष्ठान में संहार है जो षड् बिन्दुओं के द्वारा व्यवहार किया जाता है। इस प्रकार दश बिन्दु दो पद्म अर्थात् द्वादश दलात्मक हैं। मूलाधार और स्वाधिष्ठान को मिलाकर दश दल मणिपूर दल में है, अनाहत चक्र मणिपूर के दशदल और पूर्वकमलद्वय-प्रकृति वालों को दो दल को मिलाकर द्वादशदलात्मक हैं। विशुद्धि चक्र अनाहत में रहने वाले द्वादश दल के तथा आधार प्रकृतिक चार दलों को मिलाकर सोलह दलात्मक हैं तथा मणिपूर में रहने वाले दश दल तथा स्वाधिष्ठान में रहने वाले षड्दलों को मिलाकर षोडशदलात्मक हैं। आज्ञाचक्र मात्र आधार और स्वाधिष्ठानात्मक है, इसलिये द्विदलात्मक हैं। इस प्रकार मणिपूर से लेकर आज्ञाचक्र पर्यन्त चार चक्रपद्म मूलाधार स्वाधिष्ठान प्रकृति वाले ही हैं। मूलाधार और स्वाधिष्ठान इन दो चक्रों में आगे के चार कमल चतुष्क का अन्तर्भाव है जो एक ही बिन्दु का दशभेद स्वरूप है दूसरा नहीं है।

यद्यपि कौल विद्वानों के मत में दो की पूजा होने से षड् कमलों के अनुसन्धान का फल प्राप्त हो जायगा तथापि षड्विध ऐक्य के अनुसन्धान न होने से वह कुलमार्ग ही है। उससे मणिपूर में निवास करने वाली देवी का प्रत्यक्ष नहीं हो सकता और ऐसा न होने से पञ्च प्रकार की मुक्ति भी सम्भव नहीं है। नाद, बिन्दु और कला की अतीतता भी सम्भावित नहीं हो सकती। इस प्रकार के कौलों के मत में समय मत वालों को 'कार्यभूत मणिपूर आदि चतुष्चक्र के अनुसन्धान से शेष कारणभूत कमलद्वय का अनुसन्धान' अपने आप सिद्ध हो जायगा। इसलिये समय और समयी इन दोनों की सेवा करने वालों को पाँच प्रकार की

साम्यता सिद्धि से समय-समयिभाव प्रत्यक्ष दिखाई पड़ते हैं। यही भगवत्पाद का रहस्य है।

इस प्रकार प्रथम श्रीचक्र में होने वाले भजन का प्रतिपादन कर अब दूसरे प्रकार के समाधिरूप भजन का प्रतिपादन करते हैं जैसा कि भगवत्पाद ने कहा है—

**'धारणापरिज्ञानान्मुक्तिः'** ।

इसका अर्थ इस प्रकार है—धारणा की संख्या कुल मिलाकर ३६० हैं। षट्चक्रों में नाद और कला के द्वारा वायु का निरोध 'धारणा' है। वह षट्कमलों में छः प्रकार तथा सप्तम कमल में 'समय' शब्द से कहा जाने वाला सातवाँ होने से सात प्रकार का है। एक-एक कमल में पचास-पचास की धारणा होने से कुल धारणाओं की संख्या ३६० हो जाती है (?)। उन धारणाओं की अलग-अलग नाद और बिन्दुओं के साथ एकता गुरु के मुख से जाननी चाहिए। धारणा का फल क्रमशः आधारादि षट्चक्रों में यथाक्रम बुद्धि, स्मृति, बुद्धि, प्रज्ञा, मेधा एवं प्रतिभा के संवित् रूप में प्रगट होती है। यह हमने किञ्चिन्मात्र प्रदर्शित किया है। इसको विस्तृत रूप में हमने **सुभगोदय चरणागम** में प्रतिपादित किया है। वहीं से इसका ज्ञान करना चाहिए। ग्रन्थ के विस्तार के भय से हमने यहाँ नहीं कहा। इसीलिये कालिदास भगवत्पाद ने कौलमत और समयमत का भेद निरूपण करते हुये 'सकलजननीस्तोत्र' में इस प्रकार कहा है—

**चतुष्पत्रान्तरिति**। 'चारपत्रों वाला आधारचक्र अन्तर्भूत है। जिसके उस स्वाधिष्ठान चक्र में'—यहाँ बहुव्रीहि है तत्पुरुष नहीं। क्योंकि उत्तर में रहने वाले अधिष्ठान का पूर्व के आधारचक्र में अन्तर्भाव की सम्भावना नहीं की जा सकती। ऐसा करने से 'षडस्रं भित्त्वादौ में अन्वय की संगति भी ठीक नहीं बैठेगी। इसलिये यहाँ बहुव्रीहि ही मानना चाहिए। चतुष्पत्रान्त और षड्दल वाला स्वाधिष्ठान उसके सम्पुटात्मक तत्प्रकृतिक स्वरूप को जो त्रिकोणात्मक भग अर्थात् त्रिकोण है, मणिपूर से लेकर चतुष्चक्र मूलाधार प्रकृति पर्यन्त की त्रिकोणात्मकता है ही, जिसे त्रिकोण में बिन्दु चिपका हुआ है और अष्टार में अष्टदलाम्बुज' इस स्थल पर भलीभाँति कह दिया गया है। इन दोनों के पुटभागों के मध्य में—त्रिवलयाकार तीन ग्रन्थियाँ जो स्वाधिष्ठान, अनाहत और आज्ञाचक्र में अग्नि, सूर्य, चन्द्रात्मक स्वरूप से रुद्रग्रन्थि, विष्णुग्रन्थि और ब्रह्मग्रन्थि के पर्याय रूप से स्थित हैं—वहाँ स्फुरित होती हुई हैं। यहाँ 'स्त्रियाँ पुंवत्भाषितपुंस्कानदननूड' इस सूत्र से पुंवद्भाव है। विद्युतः = सौदामिनी के, वह्नेः = अग्नि के, द्युमणेः = सूर्य के, यहाँ नियुत शब्द अगणित संख्या का निर्देश करता है। उसकी आभा वाली द्युतिलता नित्या तडिद्वल्ली स्थिर सौदामिनी उसका सम्बोधन में रूप है। **आज्ञा चक्र** के अन्त में ब्रह्मग्रन्थि के भेदन के समय अगणित विद्युत् की आभा वाली, **स्वाधिष्ठान** के अन्त में रुद्रग्रन्थि के भेदन के समय अगणित अग्नि के समान आभा वाली, **अनाहत चक्र** के अन्त में विष्णु ग्रन्थि के भेदन के समय अगणित सूर्य के समान आभा वाली इतना समझना चाहिए। छः कोणों वाले मूलाधार से संयुक्त स्वाधिष्ठान का प्रथम भेदन कर, उसके बाद दश दल वाले मणिपूर का भेदन कर फिर द्वादशदलात्मक अनाहत चक्र का भेदन कर, सोलह दल वाले आज्ञाचक्र का भेदन कर, फिर द्विदलात्मक आज्ञाचक्र का भेदन कर सहस्रकमल में पहुँच जाने वाली, हे गिरिसुते! आपको नमस्कार है॥

यहाँ चारपत्र वाले मूलाधार को जो स्वाधिष्ठान के अन्तर्भूत हैं उसकी पूजा कौल साधक करते हैं यह पहले कह चुके है। समयमत वाले साधक स्वाधिष्ठान का भेदन कर

मणिपूर में प्रवेश करने वाली देवी की उपासना करते है। इस समयमत का भी पहले ही हमने प्रतिपादन कर दिया है। यहाँ के षट्कमलों में छठवें मन के साथ पाँच पृथिवी आदि महाभूत तादात्म्य सम्बन्ध से स्थित रहते हैं। उसका कारण पिण्डाण्ड और ब्रह्माण्ड की एकता की महिमा है। षट्कमलों के अनुसन्धान की महिमा से तथा पाँच प्रकार के साम्य के अनुसन्धान की महिमा से और षड्विध ऐक्य की अनुसन्धान की महिमा से यह पिण्डाण्ड ब्रह्माण्ड के समान भासित होता है। इतना ही सर्वयोग शास्त्र का रहस्य है। इसलिये योगियों को उक्त चार प्रकार का अनुसन्धान करना ही चाहिए। जैसा कि सुना भी जाता है—पिण्डेति।

इसका अर्थ इस प्रकार है—पिण्डाण्ड और ब्रह्माण्ड की एकता जाननी चाहिए। इसके अनन्तर लिङ्गात्मा और सूत्रात्मा की एकता जाननी चाहिए। लिङ्गात्मा ग्यारह इन्द्रियां और पाँच तन्मात्राओं को मिलाकर सोलह तत्त्वात्मक लिङ्गशरीर है। सूत्रात्मा ब्रह्माण्डावच्छिन्न वायु है, जो लिङ्ग शरीर को अर्चिमार्ग तक पहुँचाने वाला है, उन दोनों की एकता समझनी चाहिए। स्वाप और अव्याकृत की, स्वाप सुशुप्त्यवस्थावच्छिन्न साक्षी, प्राज्ञ, अव्याकृत, अविद्या शवलित ब्रह्म उनकी एकता जाननी चाहिए और क्षेत्रज्ञ, जीव, ब्रह्मस्वरूप परमात्मा की एकता जाननी चाहिए।

इस प्रकार हमने (लक्ष्मीधर ने) सम्प्रदाय के रहस्य को संक्षेप में कह दिया। इसका विस्तार सुभगोदय स्तुति के शरीरिक भाष्य से जानना चाहिए। इस श्लोक में सौन्दर्यलहरी में आने वाले जितने भी प्रमेय समूह हैं उनके समय-सिद्धान्त के रहस्यमय होने के कारण तथा कौल सिद्धान्त के भी रहस्यमय होने के कारण हमने संक्षेप में प्रतिपादन कर दिया है। महात्माओं को सूक्ष्मदृष्टि से इस पर विचार करना चाहिए, शेष सब स्पष्ट है ॥ ९९ ॥

**ध्यान—स्। श्लोकस्थ वर्णबीज 'स' का ध्यान—**

करीषभूषिताङ्गीं च साट्टहासां दिगम्बरीम्।
अस्थिमाल्यामष्टभुजां वरदामम्बुजेक्षणाम् ॥
नागेन्द्रहारभूषाढ्यां जटामुकुटमण्डिताम्।
सर्वसिद्धिप्रदां नित्यां धर्मकामार्थमोक्षदाम् ॥
एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत्।
सकारं शृणु चार्वङ्गि शक्तिबीजं परात्परम्।
कोटिविद्युल्लताकारं कुण्डलीमयसंयुतम् ॥
पञ्चदेवमयं देवि पञ्चप्राणात्मकं सदा।
रजस्सत्त्वतमोयुक्तं त्रिबिन्दुसहितं सदा ॥

**शौर्यवर्द्धकयन्त्र**

**बीजाक्षर**—'स'; जप-संख्या—१०९०; जप-स्थान—सहस्रारचक्र, होम—द्राक्षा, बिल्वफल, पायस और रक्तकमल से—१०९ अथवा १९; तर्पण—१९; मार्जन —१९; श्लोक-पाठसंख्या—१९; श्लोकपाठ-आहुति—१५।

**पूजनयन्त्र**—त्रिशूलयुक्त त्रिकोण में 'ह्रीं' लिखे।

**श्रीविद्यारहस्यार्थ**—हे भगवति ! आप श्री के उपासक सरस्वती और लक्ष्मी को प्राप्त करते हैं तथा विष्णु एवं विधि के चित्त में ईर्ष्या उत्पन्न करते हैं । उस साधक का सौन्दर्य इतना बढ़ जाता है कि वह रति के पातिव्रत्य को शिथिल करने में भी सामर्थ्यवान् हो सकता है । वह पशुपाश से छूटकर दीर्घजीवी होता है और अत्यन्त मीठे परानन्द रस के स्वाद का भोगी होता है ।

भजन-साधन यहाँ दो प्रकार का कहा है—(क) षट्चक्र-वेध और (ख) धारणा ।

(क) षट्चक्र-वेध विषय में किसी-किसी आचार्य का कहना है कि प्रथम दो चक्रों (मूलाधार और स्वाधिष्ठान) में अन्धकार होने से उनमें आराधना नहीं की जा सकती; अतः सहस्रार-सहित अन्य पाँच चक्रों में आराधना का विधान है । परन्तु चक्रवेधाभ्यासियों का मन्तव्य इससे विपरीत है । उनका कहना है कि मूलाधार तथा स्वाधिष्ठान में ध्यान करने से पहले अन्धकार भासता अवश्य है परन्तु थोड़े समय तक अभ्यास करने से वह स्थान काश्यमय दिव्य भासने लगता है और दिव्य मणिकाशमय वहाँ के दैवत श्री ब्रह्म तथा श्री विष्णु का दर्शनभाव उन चक्रों में प्रकट होता है । इन चक्रों में आराधना किये बिना श्री कुण्डलिनी की जागृति सरलता से नहीं होती । षट्चक्र-वेध के विधान से साधना करने वाले साधक के लिये इन चक्रों में आराधना करना अत्यन्त आवश्यक है । (१) मणिपूर में उपासना करने से सार्ष्टि मोक्ष (समान नगर, स्थान में रहना) होता है । (२) अनाहतोपासना में सालोक्य मुक्ति, (३) विशुद्धि की उपासना में सामीप्य, (४) आज्ञा में सारूप्य और (५) सहस्रार में सायुज्य मुक्ति होती है । इस प्रकार के उपासकों ने 'नादब्रह्म' को श्रीचक्र कहा है तथा 'बिन्दु' को षट्चक्र ।

(ख) आराधना के द्वितीय प्रकार में नाद और कला-द्वारा प्राण की 'धारणा' करते हैं । धारणा सात प्रकार की है । प्रत्येक धारणा की उपासना मूलाधार से सहस्रार-पर्यन्त भिन्न-भिन्न चक्रों में होती है । षट्चक्रों में धारणा करने का फल इस प्रकार है—

(१) मूलाधार में धारणा करने से 'मति', (२) स्वाधिष्ठान में स्मृति, (३) मणिपूर में बुद्धि, (४) अनाहत में प्रज्ञा, (५) विशुद्धि में मेधा और (६) आज्ञा में धारणा करने से प्रतिभा उत्पन्न होती है ॥ ९९ ॥

**प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः**
**सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।**
**स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं**
**त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥ १०० ॥**

**लक्ष्मीधरा**—**प्रदीपस्य** करदीपिकायाः, **ज्वालाभिः** कीलाभिः, **दिवसकरस्य** सूर्यस्य, **नीराजनविधिः** नीराजनकृत्यम्, **सुधासूतेः** चन्द्रस्य, **चन्द्रोपलजललवैः** चन्द्रोपलानां चन्द्रकान्तानां जललवैः निष्यन्दैः, **अर्घ्यरचना । स्वकीयैः** आत्मसम्बन्धिभिः, एतत्स्वकीयपदं प्रदीपज्वालाभिरित्यादौ व्यत्ययेनान्वेति स्वकीयाभिरिति । **अम्भोभिः** जलैः, **सलिलनिधिसौहित्यकरणं** समुद्रस्य तृप्तिहेतुः तर्पणविशेषः । **त्वदीयाभिः** त्वदुत्पन्नैः त्वत्स्वरूपैः **वाग्भिः** वाक्यसन्दर्भैः **तव** भवत्याः, **जननि !** मातः! सवित्रीत्यर्थः । **वाचां** वाक्यप्रपञ्चस्य **स्तुतिरियम् ।**

**अत्रेत्थं पदयोजना**—हे वाचां जननि ! यथा स्वकीयाभिः प्रदीपज्वालाभिः दिवसकर-

नीराजनविधिः, यथा स्वकीयैश्चन्द्रोपलजललवैः सुधासूतेरर्घ्यरचना भवति, यथा स्वकीयै-रम्भोभिः सलिलनिधिसौहित्यकरणं भवति, तथा त्वदीयाभिः वाग्भिरेव तवेयं स्तुतिः ।

अत्र इयं स्तुतिरिति यदा पूर्वोक्तप्रदीपज्वालादिवाक्यप्रतिपादितार्थसाम्यपरामर्शः तदा प्रतिवस्तूपमालङ्कारः, उपमानोपमेययोर्वस्तुप्रतिवस्तुभावेनान्वयात् । यदा इयं स्तुतिरिति स्वरूपमात्रं परामृश्यते तदा भिन्नवाक्यत्वेन बिम्बप्रतिबिम्बाक्षेपात् दृष्टान्तालङ्कारः । एवं प्रतिवस्तूपमादृष्टान्तालङ्कारयोः अन्वयभेदेन प्रतीयमानत्वात् वाक्यद्वयाश्रयणात् संसृष्टिरेवेति ध्येयम् ।

अस्मिन् सौन्दर्यलहरीश्लोकशतके 'समानीतः पद्मां' (९३ श्लोकानन्तरं) इति, 'समुद्भूतस्थूलस्तनभरम्' इति, 'निधे नित्यस्मेरे' इति श्लोकत्रयं वर्तते । तत्तु भगवत्पादरचितं न भवति केनचित्प्रक्षिप्तमिति न व्याख्यातम् । श्लोकशतकमेव व्याख्यातम् ॥ १०० ॥

## * सरला *

**प्रदीपेति** । **प्रदीपस्य** हाथ में ली गई दीप की, **ज्वालाभिः** ज्वाला से, **दिवसकरस्य** सूर्य के, **नीराजनविधिः** नीराजन कार्य, आरती करने की क्रिया, **सुधासूतेः** चन्द्रमा के, **चन्द्रोपलजललवैः** चन्द्रकान्ति से चूते हुये जल से, अर्घ्यरचना होती है, **स्वकीयैः** अपने से सम्बन्धित, यह स्वकीय पद 'प्रदीपज्वालाभिः' में लिङ्गव्यत्यय से अन्वित करना चाहिए, यथा स्वकीयाभिः प्रदीपज्वालाभिः, **अम्भोभिः** जल से, **सलिलनिधिसौहित्यकरणं** समुद्र की तृप्ति के लिये (समुद्र) तर्पण रूप विशेष क्रिया, **त्वदीयाभिः** आपसे उत्पन्न अथवा त्वत्स्वरूपों वाले, **वाग्भिः** वाक्यसन्दर्भों से, **तव** आपकी, **जननि** ! हे मातः अर्थात् सवित्री हे उत्पन्न करने वाली, **वाचां** वाक्प्रपञ्चों वाली, **स्तुतिरियम्** यह स्तुति है ।

**पदयोजना का अर्थ**—हे (वाणी को उत्पन्न करने के कारण) वाग्जननि ! जिस प्रकार दीप की ज्वाला से उनके आरती की क्रिया होती है, जिस प्रकार चन्द्रकान्तमणि के द्रव से चन्द्रदेव की अर्घ्यरचना की जाती है, अथवा जिस प्रकार समुद्र के अपने ही जल से उसके तर्पण की क्रिया की जाती है, उसी प्रकार हमने आपकी वाणी से ही आपकी यह स्तुति की है । मेरा अपना कुछ भी नहीं है ।

यहाँ 'इयं स्तुतिः' का पूर्वोक्त 'प्रदीपज्वालाभिः' इस वाक्यप्रतिपादित अर्थ से साम्य करने पर प्रतिवस्तूपमा अलङ्कार है, क्योंकि उपमान और उपमेय का वस्तु और प्रतिवस्तुभाव से अन्वय किया गया है । जब यह स्तुति स्वरूपमात्र समझी जावे, तब भिन्न वाक्य होने से बिम्बप्रतिबिम्बभाव के आक्षेप से दृष्टान्त अलङ्कार है । इस प्रकार प्रतिवस्तूपमा और दृष्टान्त अलङ्कार के अन्वय भेद से प्रतीति होने पर दो वाक्य हो जाने के कारण संसृष्टि अलङ्कार है—ऐसा समझना चाहिए ।

इस सौन्दर्यलहरी में सौ श्लोक हैं । अतः **'अराला केशेषु'** ९३ श्लोक के बाद पठित **'समानीतः पद्मां'** और **'गिरिमाहुः'** (९७) श्लोक के बाद पठित 'समुद्भूतस्थूल-स्तमभरम्' तथा 'सरस्वस्त्या' आदि (९९) श्लोक के बाद पठित 'निधे नित्यस्मेरे' आदि तीन पद्य प्रक्षिप्त होने से और भगवत्पाद आचार्य शङ्कर द्वारा रचित न होने से मेरे (लक्ष्मी-धर) द्वारा व्याख्यात नहीं हैं । अतः शत श्लोकों की ही व्याख्या की गई है ॥ १०० ॥

**ध्यान—प—** विचित्रवसनां देवीं द्विभुजां पङ्कजेक्षणाम् ।
रक्तचन्दनलिप्ताङ्गीं पद्ममालाविभूषिताम् ॥
मणिरत्नादिकेयूररत्नहारैकरविग्रहाम् ।
चतुर्वर्गप्रदां नित्यां नित्यानन्दमयीं पराम् ।
एवं ध्यात्वा पकारं तु तन्मन्त्रं दशधा जपेत् ।
अतःपरं प्रवक्ष्यामि पकाराक्षरमव्ययम् ।
चतुर्वर्गप्रदं वर्णं त्रिशक्तिसहितं प्रिये ॥
पञ्चदेवमयं वर्णं शरच्चन्द्रमयप्रभम् ॥
पञ्चप्राणमयं वर्णं स्वयं परमकुण्डली ॥
त्रिगुणीसहितं वर्णं आत्मादितत्त्वसंयुतम् ।
महामोक्षप्रदं देवि हृदि भावय पार्वति ॥

**र—** ललज्जिह्वां महारौद्रीं रक्तास्यां रक्तलोचनां ।
रक्तमाल्याम्बरधरां रक्तालङ्कारभूषिताम् ॥
रक्तवर्णामिष्टभुजां रक्तपुष्पोपशोभिताम् ।
महामोक्षप्रदां नित्यां अष्टसिद्धिप्रदायिकां ॥
एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत् ।
रेफं च चञ्चलापाङ्गि कुण्डलीद्वयसंयुतं ।
सर्वतेजोमयं वर्णं सततं मनसि चिन्तयेत् ।

**सकलकार्यसिद्धिकर यन्त्र**

**बीजाक्षर**—'प्र'; जप-संख्या—११०० जप-स्थान—सहस्रारचक्रः होम—द्राक्षा, बिल्वफल, पायस और रक्तकमल से—११०-२०; तर्पण—२०; मार्जन—२०; श्लोक-पाठसंख्या—२०; श्लोकपाठ-आहुति—१६ ।

**श्रीविद्यारहस्यार्थ**—हे भगवति ! आप श्री से उत्पन्न हुये शब्दों में आप के इस स्तवन की रचना सूर्य को दीपक दिखाने के समान है, चन्द्रोत्पल-पात्र में चन्द्र को अर्घ्य देने के समान है किं वा समुद्र को स्नान कराने के समान है ।

**दिव्य शताक्षरी मन्त्र**—इस मन्त्र के प्रत्येक बीज से सौन्दर्यलहरी का एक-एक श्लोक आरम्भ होता है । यथा—

**ह्रीं श्रीं ॐ शिं तं अं त्वं हं धं क्वं सुं मं सुं चं त्वं नं क्षिं शं कं सं तं मुं किं तं भं त्वं जं त्रं विं जं सुं किं स्वं चं शिं स्मं शं मं तं विं सं तं तं तं गं धुं तं अं लं भ्रुं अं विं कं शिं गं विं पं निं तं दूं अं स्फुं सं अं प्रं स्मिं अं रं विं कं भुं गं मृं नं सं अं वं त हं यं स्थिं निं कुं गुं कं पं श्रुं नं मृं हिं पं नं दं पं गं अं कं पुं कं गिं कं सं प्रं ऐं क्लीं सौः क ए इ ल ह्रीं, हसकहलह्रीं, सकलह्रीं ह्रीं श्रीं** ॥ ११२ मन्त्राक्षर ॥

**शताक्षरी महाविद्या का न्यास—**

१—ह्रीं श्री ॐ शिं तं अं त्वं हं धं क्कं सुं मं सुं चं त्वं नं क्षिं शं ऐं—

मूलाधारे—**मूलाधारचक्रे** ।

२—ह्रीं श्रीं ॐ कं सं तं मुं किं तं भं त्वं जं त्रं विं जं सुं किं स्वं क्लीं—

लिङ्गे—**स्वाधिष्ठानचक्रे** ।

३—ह्रीं श्रीं ॐ चं शिं स्मं शं मं तं विं सं तं तं तं गं धुं वं अं सौः—

नाभौ—**मणिपूरचक्रे** ।

४—ह्रीं श्रीं ॐ लं भ्रु अं विं कं शिं गं विं पं निं तं दृं अं स्फुं सं कएइलह्रीं—

हृदि—**अनाहतचक्रे** ।

५—ह्रीं श्रीं ॐ अं प्रं स्मिं अं रं विं कं भुं गं मृं नं सं अं वं तं हं हसकहल ह्रीं—

कण्ठे—**विशुद्धिचक्रे** ।

६—ह्रीं श्रीं ॐ यं स्थिं निं कुं गुं कं पं रुं नं मृं हिं पं नं दं पं—सकल ह्रीं—

भ्रुवौ—**आज्ञाचक्रे** ।

७—ह्रीं श्रीं ॐ गं अं सं कं पुं कं गिं सं कं सं श्रीं ह्रीं ॐ—

सहस्रारे—**ब्रह्माण्डे** ।

ह्रीं श्रीं आदि मूलमन्त्र—जप-संख्या—११११; जप-स्थान—सहस्रारचक्र, होम—द्राक्षा, बिल्वफल, पायस और रक्तकमल से—१११; तर्पण—२१; मार्जन—२१; प्रथम श्लोक 'शिवः शक्त्या युक्तो' का पाठ—२१; श्लोकपाठ-आहुति—२१; श्रीयन्त्र—पूजन-यन्त्र बनाना है ।

**पूजन यन्त्र—**

## संतुष्टा भवतु भगवती भवानी

इति श्रीलोल्लकुलसम्प्रदायप्रवर्तकभ्रमराम्बिकावरप्रसादसमुल्लसितमहासारस्वतभट्ट-लोल्लपतिग्रन्थविवरणकर्तृश्रीमहोपाध्यायमहादेवाचार्यसप्तमेन साहित्यपारिजातस्मृतिकल्प-तरूप्रबन्धप्रबन्धृलक्ष्मीधरार्यषष्ठेन भरतार्णवपोताख्यसाहित्यमीमांसाग्रन्थद्वयप्रणेतृविरिञ्चि-मिश्रपञ्चमेन मीमांसाद्वयजीवातुनिर्मातृपुरुषोत्तममहोपाध्यायनप्त्रा प्राभाकरामृतवाहिनीप्रभावली-खण्डनाद्यनेकप्रबन्धसन्दर्भप्रवर्तकबिरुदपदमहोपाध्यायलक्ष्मणार्यपौत्रेण नयविवेकदीपिका-प्रबन्धसंविधातृमहोपाध्यायविद्वत्सार्वभौमनूतनव्यासाद्यनेकबिरुदाङ्कित**श्रीविश्वनाथभट्टारक**तनयेन अधीतदशशतनयेन पार्वतीगर्भशुक्तिमुक्तारत्नेन बहूकृतधीचिरत्नेन लोल्लकुलकलशाम्बुधि-सुधांशुना यश: प्रांशुना हरितगोत्रकल्पशाखिना आपस्तम्बशाखिना षड्दर्शनीपारदृश्वना प्रतिपक्षवृक्षझञ्झामातरिश्वना भ्रमराम्बिकाप्रसादसमासादितप्रतिभाविशेषेण भुवि शेषेण निखिलयामलतन्त्रार्णवावगाहनरुद्रेण आश्रयीकृतगजपतिवीररुद्रेण नीलगिरिसुन्दरचरणार-विन्दचञ्चरीकेण वाणीसहचरीकेण सरस्वतीविलासाद्यनेकस्मृतिनिबन्धनलक्ष्मीधराद्यनेक-साहित्यनिबन्धननयविवेक भूषणाद्यनेकगुरुमतनिबन्धन'योगदीपिका'द्यनेक पातञ्जलमत-निबन्धनमहानिबन्धनाख्य'मानवधर्मशास्त्र'टीकाकर्णावतंस-सबर्हावतंसाद्यनेककाव्यकल्पकेन आश्रितजनकल्पकेन निग्रहानुग्रहकौशिकेन श्रीमहोपाध्याय**लक्ष्मीधरदेशिकेन** कृतेयं लक्ष्मी-धराख्या सौन्दर्यलहरीस्तुतिव्याख्या । अनया सन्तुष्टा भवतु भगवती भवानी ।

**अर्थ**—टीकाकार के शब्दों में ही उनके **वंश का परिचय**—श्री लोल्लकुल सम्प्रदाय के प्रवर्त्तक भ्रमर अम्बिका के वर प्रसाद से एधमान सारस्वत भट्ट लोल्लपति नामक ग्रन्थ के विवरणकार श्रीमहोपाध्याय महादेवाचार्य जिसके सप्तम पीढ़ी में साहित्यपारिजात स्मृतिकल्पतरु नामक प्रबन्ध के टीकाकार लक्ष्मीधर आर्य जिसके षष्ठ पीढ़ी में भरत और अर्णवपोत नामक साहित्य मीमांसा इन दो ग्रन्थों के प्रणेता विरिञ्च मिश्र जिसके पञ्चम पीढ़ी में मीमांसाद्वयजीवातु के निर्माता पुरुषोत्तम महोपाध्याय के नाती (चौथी पीढ़ी में) प्राभाकर अमृतवाहिनी प्रभावली खण्डन आदि अनेक प्रबन्ध के सन्दर्भ के प्रवर्त्तक विरुद पदवी से विभूषित महोपाध्याय लक्ष्मण आर्य के पौत्र (तृतीय पीढ़ी में) नय विवेक दीपिकाप्रबन्ध के रचयिता महोपाध्याय विद्वत्सार्वभौम नूतन व्यासादि अनेक विरुद से विभूषित विश्वनाथ भट्टारक के आत्मज एक सहस्र नीति ग्रन्थ के अध्येता पार्वतीगर्भ रूप शुक्ति से मोती के समान उत्पन्न होने वाले सभी विद्वानों में पुरातन, लोलकुल कलश रूपी अमृत समुद्र से उत्पन्न सुधांशु, प्रशस्त, यशस्वी, हरितगोत्रकल्पवृक्ष के आपस्तम्ब शाखा वाले षड्दर्शनों के पारदर्शी विद्वान्, प्रतिपक्ष रूपी वृक्ष को कम्पित करने वाले झञ्झावात (आँधी) भ्रमर अम्बिकाप्रसाद से विशेष प्रतिभा प्राप्त करने वाले, पृथ्वी के शेषावतार सम्पूर्ण यामल, सम्पूर्ण तन्त्र शास्त्रों में, रुद्र के समान सर्वज्ञ गजपति वीररुद्र का आश्रय लेने वाले नीलगिरि पर विद्यमान सुन्दर के चरणारविन्द के चञ्चरीक, वाणी सहचरी वाले सरस्वती विलासादि अनेक स्मृतियों के रचयिता लक्ष्मीधरादि अनेक साहित्य निबन्धों के नय विवेक भूषणादि अनेक गुरु (= प्रभाकर) मत निबन्धों के योगदीपिका आदि अनेक पातञ्जलमत निबन्धों के, महानिबन्ध नामक मानव धर्मशास्त्र के टीकाकार कर्णावतंस वर्हावतंस आदि अनेक काव्यों के रचयिता आश्रित जनों के लिए कल्पतरु स्वरूप निग्रहानुग्रह में स्वयं देवेन्द्र इन्द्र के समान

**श्री महोपाध्याय लक्ष्मीधर आचार्य** के द्वारा विरचित सौन्दर्यलहरी स्तुति की व्याख्या **'लक्ष्मीधरा'** नाम की यह टीका प्रस्तुत है।

इस टीका से भगवती भवानी सन्तुष्ट हों।

**अस्मदीयानां लक्ष्मीधराचार्याणां पद्यम्—**

**वयमिह पदविद्यां तन्त्रमान्वीक्षकीं वा**
**यदि पथि विपथे वा वर्तयामः स पन्थाः।**
**उदयति दिशि यस्यां भानुमान्सैव पूर्वा**
**न हि तरणिरुदीते दिक्पराधीनवृत्तिः ॥ १ ॥**

हमारे जैसे लक्ष्मीधर आचार्यों के विषय में पद्य—

हम लोग पदविद्या (व्याकरणशास्त्र), तन्त्रशास्त्र, आन्वीक्षिकी (न्याय-तर्क या आत्म-विद्या) विद्या को चाहे पथ या कुपथ (अच्छे या बुरे मार्ग) जिस मार्ग में स्थापित करते हैं बस एकमात्र वही शास्त्र का मार्ग है। जिस दिशा में सूर्य का उदय हो, वही दिशा 'पूर्व दिशा' मानी जाती है। भगवान् सूर्य, दिशा के पराधीन होकर कभी उदित नहीं होते (अर्थात् सूर्य यह नहीं सोचते कि यह पूर्व दिशा है अतः हमें इसी दिशा में उदित होना चाहिए। बल्कि वे स्वतन्त्र होकर जिधर उदित होते हैं वही दिशा पूर्व दिशा मानी जाती है)। इसी प्रकार व्याकरण, तन्त्र, तर्क, न्याय तर्कादि शास्त्रों में हम जो निर्णय देते हैं वही मान्य मार्ग है ॥ १ ॥

**सायं सम्फुल्लमल्लीसुमसुरभिसुधामाधुरीसाधुरीति-**
**प्रेङ्खत्पुङ्खानुपुङ्खस्फुरदमरसरिद्वीचिवाचालवाचः।**
**लोल्लश्रीलक्ष्मणाख्यो गुणमणिजलधिर्भासते भूसुराली-**
**केलीनालीकपालीदशशतकिरणो विद्वदग्रेसरोऽसौ ॥ २ ॥**

सायङ्काल में पुष्पित मल्लिका के पुष्पों की सुगन्धित सुधा माधुरी से संयुक्त वायु द्वारा बारम्बार आमूल कम्पायमान, भगवती भागीरथी के चञ्चल तरङ्गों के समान चञ्चल और मधुर वाणी वाले लोल्ल वंश में उत्पन्न गुणसमूहों के समुद्र, ब्राह्मण समूह रूप क्रीडा कमल वन को विकसित करने वाले सूर्य के समान तेजस्वी विद्वद्वरेण्य यह वही आचार्य लक्ष्मीधर हैं ॥ २ ॥

**यस्य सप्तमः—**

**यः कर्णाटवसुन्धराधिपमहास्थाने सुवर्णायितो**
**यो विद्वन्निकषायितो नृपगृहे वेमाख्यपृथ्वीशितुः।**
**श्रीमल्लोल्लटभट्टशिष्य इति यो लोल्लाख्यया श्रूयते**
**श्रीशेषान्वयशेखरः स हि महादेवोविपश्चिन्महान् ॥ ३ ॥**

जिनके सप्तम पीढ़ी में—

जो कर्णाटक नरेश के वसुन्धरा स्थान (राज्य) में सुवर्ण के समान देदीप्यमान हो रहे हैं, जो 'वेम' नामक पृथ्वीपति के राजगृह में विद्वत्ता की खरी कसौटी पर खरे उतरे हैं जिनकी श्रीमान् लोल्लट भट्ट के शिष्य होने से 'लोल्ल' नाम से प्रसिद्धि है, जो शेषवंश में

सर्वापेक्षया श्रेष्ठ हैं, ऐसे महान् विपश्चिद् महादेव जिनके सप्तम पीढ़ी के पूर्वज हैं वही मैं लक्ष्मीधर हूँ ॥ ३ ॥

**तस्योक्तिः—**

**निकषायितुमीहे वा सुवर्णायितुमेव वा ।**
**सुवर्णायितुमेवेहे निकषो न ह्यलङ्क्रिया ॥ ४ ॥**

उन लक्ष्मीधर की यह उक्ति है—

कसौटी के समान होना अच्छा है अथवा कसौटी पर कसे गए देदीप्यमान सुवर्ण के समान होना अच्छा है । इन दोनों में कसौटी पर कसे गए सुवर्ण की समानता रखने वाले को ही मैं अच्छा समझता हूँ । विद्वत्ता में कसौटी मात्र पर्याप्त नहीं है ॥ ४ ॥

**तर्कन्यक्कृतवावदूकनिचयं वादित्वमास्तां मम**
**व्याख्यातृत्वमुदारशिष्यनिवहश्लाघ्यं तथा तिष्ठतु ।**
**स्वर्लोकच्यवमानसिद्धतटिनीकल्लोलसल्लापिनां**
**उल्लासा वचसां न कस्य मनसां मत्काश्चमत्कारिणः ॥ ५ ॥**

समस्त विद्वद् वृन्दों को अपने तर्क समूहों से परास्त करने की मुझ वादी की क्षमता की कसौटी की बात तो दूर रहे, किन्तु अनेक शिष्य समूहों के द्वारा श्लाघ्य हमारी सुवर्णायित व्याख्यान पद्धति मुझमें सदैव विद्यमान रहे । उस मेरे सुवर्णायित व्याख्यान को कोई देखे कि मैं कितना खरा सोना हूँ । स्वर्गलोक से प्रच्युत श्री भगवती भागीरथी के कल्लोल से संल्लापित उल्लास के समान मन और वचन से निकले हुए मेरे 'उल्लास' किसे आश्चर्यान्वित नहीं करते ॥ ५ ॥

**गतोऽयं शङ्कराचार्यो वीरमाहेश्वरो गतः ।**
**षट्चक्रभेदने को वा जानीते मत्परिश्रमम् ॥ ६ ॥**

**॥ समाप्तोऽयं ग्रन्थः ॥**

---

शङ्कराचार्य चले गए, वीर माहेश्वर अभिनवगुप्त भी अब नहीं रहे, फिर षट्चक्र के भेदन में मैने कितना परिश्रम किया है, भला उसको जानने में कौन समर्थ हो सकता है ॥ ६ ॥

द्विसहस्रमिते वर्षे पञ्चषष्ट्युत्तरे तथा ।
प्लवसंवत्सरे प्राप्ते वैक्रमीये सुवत्सरे ॥ १ ॥
आश्विने शुक्लपक्षे तु दशम्यां विजया तिथौ ।
गुरुवारे खश्रवणे शुभलग्ने सुखावहे ॥ २ ॥
लहरी सुसौन्दर्यस्य भगवतीदैवतस्य च ।
समाप्तिमगमट्टीका 'सरला'ख्या मया कृता ॥ ३ ॥

# (५) सकलजननीस्तोत्रम्

अजानन्तो यान्ति क्षयमवशमन्योन्यकलहैः
अमी मायाग्रन्थौ तव परिलुठन्तस्समयिनः ।
जगन्मातः! जन्मज्वरभयतमःकौमुदि! वयं
नमस्ते कुर्वाणाश्शरणमुपयामो भगवतीम् ॥ १ ॥
वचस्तर्कागम्यस्वरसपरमानन्दविभव-
प्रबोधाकाराय द्युतितुलितनीलोत्पलरुचे ।
शिवाद्याराध्याय स्तनभरविनम्राय सततं
नमस्तस्मै कस्मैचन भवतु मुग्धाय महसे ॥ २ ॥
अनाद्यन्ताभेदप्रणयरसिकापि प्रणयिनी
शिवस्यासीर्यत्त्वं परिणयविधौ देवि! गृहिणी ।
सवित्री भूतानामपि यदुदभूश्शैलतनया
तदेतत्संसारप्रणयनमहानाटकमुखम् ॥ ३ ॥
ब्रुवन्त्येके तत्त्वं भगवति सदन्ये विदुरसत्
परे मातः! प्राहुस्तव सदसदन्ये सुकवयः ।
परे नैतत्सर्वं समभिदधते देवि! सुधियः
तदेतत्त्वन्मायाविलसितमशेषं ननु शिवे ॥ ४ ॥
लुठद्गुञ्जाहारस्तनभरनमन्मध्यलतिकां
उदञ्चद्घर्माम्भःकणगुणितवक्त्राम्बुजरुचम्[१] ।
शिवं पार्थत्राणप्रवणमृगयाकारगुणितं
शिवामन्वग्यान्तीं शरणमहमन्वेमि शबरीम् ॥ ५ ॥
मिथःकेशाकेशिप्रथननिधनास्तर्कघटनाः
बहुश्रद्धाभक्तिप्रणतिविषयाश्शास्त्रविधयः ।
प्रसीद प्रत्यक्षीभव गिरिसुते! देहि शरणं
निरालम्बं चेतः परिलुठति पारिप्लवमिदम् ॥ ६ ॥
शुनां वा वह्नेर्वा खगपरिषदो वा यदशनं
कदा केन क्वेति क्वचिदपि न कश्चित्कलयति ।
अमुष्मिन् विश्वासं विजहिहि ममाह्नाय वपुषि
प्रपद्येथाश्चेतः! सकलजननीमेव शरणम् ॥ ७ ॥

---

१. 'नीलोत्पलरुचिम्' इति वा पाठः ।

तटित्कोटिज्योतिर्द्युतिदलितषड्ग्रन्थिगहनं
प्रविष्टं स्वाधारं पुनरपि सुधावृष्टिवपुषा ।
किमप्यष्टाविंशत्किरणसकलीभूतमनिशं
भजे धाम श्यामं कुचभरनतं बर्बरकचम् ॥ ८ ॥

चतुष्पत्रान्तष्षड्दलपुटभगान्तस्त्रिवलय-
स्फुरद्विद्युद्वह्निद्युमणिनियुताभद्युतिलते ।
षडश्रं भित्त्वाऽऽदौ दशदलमथ द्वादशदलं
कलाश्रं च द्व्यश्रं गतवति नमस्ते गिरिसुते ॥ ९ ॥

कुलं केचित्प्राहुर्वपुरकुलमन्ये तव बुधाः
परे तत्संभेदं समभिदधते कौलमपरे ।
चतुर्णामप्येषामुपरि किमपि प्राहुरपरे
महामाये! तत्त्वं तव कथममी निश्चिनुमहे ॥ १० ॥

षडध्वारण्यानीं प्रलयरविकोटिप्रतिरुचा
रुचा भस्मीकृत्य स्वपदकमलप्रह्वशिरसाम् ।
वितन्वानश्शैवं किमपि वपुरिन्दीवररुचिः
कुचाभ्यामानम्रस्तव पुरुषकारो विजयते ॥ ११ ॥

प्रकाशानन्दाभ्यामविदितचरीं मध्यपदवीं
प्रविश्यैतद्द्वन्द्वं रविशशिसमाख्यं कबलयन् ।
प्रपद्योर्ध्वं नादं लयदहनभस्मीकृतकुलः
प्रसादात्ते जन्तुश्शिवमकुलमम्ब ! प्रविशति ॥ १२ ॥

मनुष्यास्तिर्यञ्चो मरुत इति लोकत्रयमिदं
भवाम्भोधौ मग्नं त्रिगुणलहरीकोटिलुठितम् ।
कटाक्षश्चेद्यत्र क्वचन तव मातः करुणया
शरीरी सद्योऽयं व्रजति परमानन्दतनुताम् ॥ १३ ॥

प्रियङ्गुश्यामाङ्गीमरुणतरवासः किसलयां
समुन्मीलन्मुक्ताफलवहलनेपथ्यसुभगाम् ।
स्तनद्वन्द्वस्फारस्तबकनमितां कल्पलतिकां
सकृद्ध्यायन्तस्त्वां दधति शिवचिन्तामणिपदम्॥ १४ ॥

षडाधारावर्तैरपरिमितमन्त्रोर्मिपटलैः
लसन्मुद्राफेनैर्बहुविधचलद्दैवतझषैः ।
क्रमस्रोतोभिस्त्वं वहसि परनादामृतनदी
भवानि ! प्रत्यग्रा शिवचिदमृताब्धिप्रणयिनी ॥ १५ ॥

महीपाथोवह्निश्वसनवियदात्मेन्दुरविभिः
वपुर्भिर्ग्रस्ताशैरपि तव कियानम्ब ! महिमा ।

अमून्यालोल्यन्ते भगवति! न कुत्राप्यणुतमां
अवस्थां प्राप्तानि त्वयि तु परमव्योमवपुषि ॥ १६ ॥
कलामाज्ञां प्रज्ञां समयमनुभूतिं समरसं
गुरुं पारम्पर्यं विनयमुपदेशं शिवपदम्।
प्रमाणं निर्वाणं प्रकृतिमभिभूतिं परगुहां
विधिं विद्यामाहुस्सकलजननीमेव मुनयः ॥ १७ ॥
प्रलीने शब्दौघे तदनु विरते बिन्दुविभवे
ततस्तत्त्वे चाष्टध्वनिभिरनपायिन्यधिगते।
श्रिते शाक्ते पर्वण्यनुकलितचिन्मात्रगहनां
स्वसंवित्तिं योगी रसयति शिवाख्यां भगवतीम्॥ १८ ॥
परानन्दाकारां निरवधिशिवैश्वर्यवपुषं
निराकारां ज्ञानप्रकृतिमपरिच्छिन्नकरुणाम्।
सवित्रीं लोकानां निरतिशयधामास्पदपदां
भवो वा मोक्षो वा भवतु भवतीमेव भजताम् ॥ १९ ॥
जगत्काये कृत्वा तदपि हृदये तच्च पुरुषे
पुमांसं बिन्दुस्थं तदपि वियदाख्ये च गहने।
तदेतद्ज्ञानाख्ये तदपि परमानन्दगहने
महाव्योमाकारे त्वदनुभवशीलो विजयते ॥ २० ॥
विधे! वेद्ये! विद्ये! विविधसमये! वेदगुलिके!
विचित्रे! विश्वाद्ये! विनयसुलभे! वेदजननि!
शिवज्ञे! शूलस्थे! शिवपदवदान्ये! शिवनिधे!
शिवे! मातः! मह्यं त्वयि वितर भक्तिं निरुपमाम् ॥ २१ ॥
विधेर्मुण्डं हृत्वा यदकुरुत पात्रं करतले
हरिं शूलप्रोतं यदगमयदंसाभरणताम्।
अलंचक्रे कण्ठं यदपि गरलेनाम्ब! गिरिशः
शिवस्थायाश्शक्तेस्तदिदमखिलं ते विलसितम् ॥ २२ ॥
विरिञ्च्याख्या मातः! सृजसि हरिसंज्ञा त्वमवसि
त्रिलोकीं रुद्राख्या हरसि विदधासीश्वरदशाम्।
भवन्ती नादाख्या विहरसि च पाशौघदलनी
त्वमेवैकाऽनेका भवसि कृतिभेदैर्गिरिसुते ॥ २३ ॥
मुनीनां चेतोभिः प्रमुदितकषायैरपि मनाक्
अशक्यं संस्प्रष्टुं चकितचकितैरम्ब! सततम्।
श्रुतीनां मूर्धानः प्रकृतिकठिनाः कोमलतरे
कथं ते विन्दन्ते पदकिसलये पार्वति! पदम् ॥ २४ ॥

तटिद्वल्लीं नित्याममृतसरितं पाररहितां
मलोत्तीर्णां ज्योत्स्नां प्रकृतिमगुणग्रन्थिगहनाम् ।
गिरां दूरां विद्यामविनतकुचां विश्वजननीं
अपर्यन्तां लक्ष्मीमभिदधति सन्तो भगवतीम् ॥ २५ ॥

शरीरं क्षित्यम्भःप्रभृतिरचितं केवलमचित्
सुखं दुःखं चायं कलयति पुमांश्चेतन इति ।
स्फुटं जानानोऽपि प्रभवति न देही रहयितुं
शरीराहङ्कारं तव समयबाह्यो गिरिसुते ॥ २६ ॥

पिता माता भ्राता सुहृदनुचरस्सद्म गृहिणी
वपुः क्षेत्रं मित्रं धनमपि यदा मां विजहति ।
तदा मे भिन्दाना सपदि भयमोहान्धतमसं
महाज्योत्स्ने! मातः! भव करुणया सन्निधिकरी ॥ २७ ॥

सुता दक्षस्यादौ किल सकलमातः! त्वमुदभूः
सदोषं तं हित्वा तदनु गिरिराजस्य दुहिता ।
अनाद्यन्ता शम्भोरपृथगपि शक्तिर्भगवती
विवाहाज्जायाऽसीत्यहह चरितं वेत्ति तव कः ॥ २८ ॥

कणास्त्वद्दीप्तीनां रविशशिकृशानुप्रभृतयः
परं ब्रह्म क्षुद्रं तव नियतमानन्दकणिका ।
शिवादि क्षित्यन्तं त्रिवलयतनोस्सर्वमुदरे
तवास्ते भक्तस्य स्फुरसि हृदि चित्रं भगवति ॥ २९ ॥

पुरः पश्चादन्तर्बहिरपरिमेयं परिमितं
परं स्थूलं सूक्ष्मं सकलमकलं गुह्यमगुह्म् ।
दवीयो नेदीयस्सदसदिति विश्वं भगवती
सदा पश्यन्त्याख्यां वहसि भुवनक्षोभजननीम् ॥ ३० ॥

प्रविश्य त्वन्मार्गं सहजदयया देशिकदृशा
षडध्वध्वान्तौघच्छिदुरगणनातीतकरुणाम् ।
परामाज्ञाकारां सपदि शिवयन्तीं शिवतनुं
स्वमात्मानं धन्याश्चिरमुपलभन्ते भगवतीम् ॥ ३१ ॥

मयूखाः पूष्णीव ज्वलन इव तद्दीप्तिकणिकाः
पयोधौ कल्लोलाः प्रतिहतमहिम्नीव पृषतः ।
उदेत्योदेत्याम्ब! त्वयि स निजैस्सात्त्विकगुणैः
भजन्ते तत्त्वौघाः प्रशममनुकल्पं परवशाः ॥ ३२ ॥

विधुर्विष्णुब्रह्मा प्रकृतिरणुरात्मा दिनकरः
स्वभावो जैनेन्द्रस्सुगतमुनिराकाशमलिनः ।

शिवश्शक्तिश्चेति श्रुतिविषयतां तामुपगता
विकल्पैरेभिस्त्वामभिदधति सन्तो भगवतीम् ॥ ३३ ॥
शिवस्त्वं शक्तिस्त्वं त्वमसि समया त्वं समयिनी
त्वमात्मा त्वं दीक्षा त्वमयमणिमादिर्गुणगणः ।
अविद्या त्वं विद्या त्वमसि निखिलं त्वं किमपरं
पृथक्तत्वं त्वत्तो भगवति न वीक्षामह इमे ॥ ३४ ॥
त्वयासौ जानीते रचयति भवत्यैव सततं
त्वयैवेच्छत्यम्ब! त्वमसि निखिला यस्य तनवः ।
जगत्साम्यं शम्भोर्वहसि परमव्योमवपुषः
तथाप्यर्धं भूत्वा विहरसि शिवस्येति किमिदम् ॥ ३५ ॥
असङ्ख्यैः प्राचीनैर्जननि! जननैः कर्मविलयात्
सकृज्जन्मन्यन्ते गुरुवपुषमासाद्य गिरिशम् ।
अवाप्याज्ञां शैवीं शिवतनुमपि त्वां विदितवान्
नयेयं त्वत्पूजास्तुतिविरचनेनैव दिवसान् ॥ ३६ ॥

यत् षट्पत्रं कमलमुदितं तस्य या कर्णिकाख्या
योनिस्तस्याः प्रथितमुदरे यत्तदोङ्कारपीठम् ।
तस्याप्यन्तः कुचभरनतां कुण्डलीति प्रसिद्धां
श्यामाकारं सकलजननीं सन्ततं भावयामि ॥ ३७ ॥

भुवि पयसि कृशानौ मारुते खे शशाङ्के
सवितरि यजमानेऽप्यष्टधा शक्तिरेका ।
वहसि कुचभराभ्यां याऽवनम्रापि विश्वं
सकलजननि! सा त्वं पाहि मामित्यवाच्यम् ॥ ३८ ॥

**॥ इति सकलजननीस्तवः पञ्चमः ॥**

**॥ इति पञ्चस्तवी समाप्ता ॥**

**परिशिष्ट—४**

# सौन्दर्यलहरी

## विनियोगः

ॐ अस्य श्रीसौन्दर्यलहरीस्तोत्रस्य गोविन्दः ऋषिः । अनुष्टुप् छन्दः । श्रीमहात्रिपुरसुन्दरी देवता । शिवः शक्त्या युक्त इति बीजम् । सुधासिन्धोर्मध्य इति शक्तिः । जपो जल्पः शिल्पमिति कीलकम् । श्रीललितामहात्रिपुरसुन्दरीप्रीत्यर्थे सौन्दर्यलहरीस्तोत्रपाठे विनियोगः ॥

## षडङ्गन्यासः

ह्रां अङ्गुष्ठाभ्यां नमः, ह्रीं तर्जनीभ्यां नमः,
ह्रूं मध्यमाभ्यां नमः, ह्रैं अनामिकाभ्यां नमः,
ह्रौं कनिष्ठिकाभ्यां वौषट्, ह्रः करतलकरपृष्ठाभ्यां फट् ।

ह्रां हृदयाय नमः, ह्रीं शिरसे स्वाहा,
ह्रूँ शिखायै वौषट्, ह्रैं कवचाय हुं,
ह्रौं नेत्रत्रयाय वौषट्, ह्रः अस्त्राय फट् ॥

## ध्यानम्

**लौहित्यनिर्जितजपाकुसुमानुरागां**
**पाशाङ्कुशे धनुरिषूनपि धारयन्तीम् ।**
**ताम्रेक्षणामरुणमाल्यविशेषभूषां**
**ताम्बूलपूरितमुखीं त्रिपुरां नमामि ॥**

लं पृथिव्यात्मने गन्धं कल्पयामि, हं आकाशात्मने पुष्पं कल्पयामि, यं वाय्वात्मने धूपं कल्पयामि, रं वह्न्यात्मने दीपं कल्पयामि, वं जलात्मने नैवेद्यं कल्पयामि ॥ ॐ ॥

॥ श्रीः ॥

श्रीशङ्कराचार्यविरचिता

# सौन्दर्यलहरी

(मूलपाठः)

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥ १ ॥

तनीयांसं पांसुं तव चरणपङ्केरुहभवं
विरिञ्चिः सञ्चिन्वन्विरचयति लोकानविकलम् ।
वहत्येनं शौरिः कथमपि सहस्रेण शिरसां
हरः संक्षुद्यैनं भजति भसितोद्धूलनविधिम् ॥ २ ॥

अविद्यानामन्तस्तिमिरमिहिरद्वीपनगरी
जडानां चैतन्यस्तबकमकरन्दस्रुतिझरी ।
दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ
निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवति ॥ ३ ॥

त्वदन्यः पाणिभ्यामभयवरदो दैवतगणः
त्वमेका नैवासि प्रकटितवराभीत्यभिनया ।
भयात्त्रातुं दातुं फलमपि च वाञ्छासमधिकं
शरण्ये लोकानां तव हि चरणावेव निपुणौ ॥ ४ ॥

हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीं
पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत् ।
स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा
मुनीनामप्यन्तः प्रभवति हि मोहाय महताम् ॥ ५ ॥

धनुः पौष्पं मौर्वी मधुकरमयी पञ्च विशिखाः
वसन्तः सामन्तो मलयमरुदायोधनरथः ।

तथाप्येकः सर्वं हिमगिरिसुते कामपि कृपां
अपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥ ६ ॥

क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥ ७ ॥

सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां
भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम् ॥ ८ ॥

महीं मूलाधारे कमपि मणिपूरे हुतवहं
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।
मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं
सहस्रारे पद्मे सह रहसि पत्या विहरसे ॥ ९ ॥

सुधाधारासारैश्चरणयुगलान्तर्विगलितैः
प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः ।
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि ॥ १० ॥

चतुर्भिश्श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि
प्रभिन्नाभिः शम्भोर्नवभिरपि मूलप्रकृतिभिः ।
चतुश्चत्वारिंशद्वसुदलकलाश्रत्रिवलय-
त्रिरेखाभिः सार्धं तव शरणकोणाः परिणताः ॥ ११ ॥

त्वदीयं सौन्दर्यं तुहिनगिरिकन्ये तुलयितुं
कवीन्द्राः कल्पन्ते कथमपि विरिञ्चिप्रभृतयः ।
यदालोकौत्सुक्यादमरललना यान्ति मनसा
तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम् ॥ १२ ॥

नरं वर्षीयांसं नयनविरसं नर्मसु जडं
तवापाङ्गालोके पतितमनुधावन्ति शतशः ।
गलद्वेणीबन्धाः कुचकलशविस्रस्तसिचयाः
हठात्त्रुट्यत्काञ्च्यो विगलितदुकूला युवतयः ॥ १३ ॥

क्षितौ षट्पञ्चाशद्द्विसमधिकपञ्चाशदुदके
हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले ।
दिवि द्विष्षट्त्रिंशन्मनसि च चतुष्षष्टिरिति ये
मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम् ॥ १४ ॥

शरज्योत्स्नाशुद्धां शशियुतजटाजूटमकुटां
वरत्रासत्राणस्फटिकघटिकापुस्तककराम् ।
सकृन्न त्वा नत्वा कथमिव सतां सन्निदधते
मधुक्षीरद्राक्षामधुरिमधुरीणाः फणितयः ॥ १५ ॥

कवीन्द्राणां चेतःकमलवनबालातपरुचिं
भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम् ।
विरिञ्चिप्रेयस्यास्तरुणतरशृङ्गारलहरी-
गभीराभिर्वाग्भिर्विदधति सतां रञ्जनममी ॥ १६ ॥

सवित्रीभिर्वाचां शशिमणिशिलाभङ्गरुचिभिः
वशिन्याद्याभिस्त्वां सह जननि सञ्चिन्तयति यः ।
स कर्ता काव्यानां भवति महतां भङ्गिरुचिभिः
वचोभिर्वाग्देवीवदनकमलामोदमधुरैः ॥ १७ ॥

तनुच्छायाभिस्ते तरुणतरणिश्रीसरणिभि-
र्दिवं सर्वामुर्वीमरुणिमनिमग्नां स्मरति यः ।
भवन्त्यस्य त्रस्यद्वनहरिणशालीननयनाः
सहोर्वश्या वश्याः कतिकति न गीर्वाणगणिकाः ॥ १८ ॥

मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो
हरार्धं ध्यायेद्यो हरमहिषि ते मन्मथकलाम् ।
स सद्यः संक्षोभं नयति वनिता इत्यतिलघु
त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥ १९ ॥

किरन्तीमङ्गेभ्यः किरणनिकुरुम्बामृतरसं
हृदि त्वामाधत्ते हिमकरशिलामूर्तिमिव यः ।
स सर्पाणां दर्पं शमयति शकुन्ताधिप इव
ज्वरप्लुष्टान् दृष्ट्या सुखयति सुधाधारसिरया ॥ २० ॥

तडिल्लेखातन्वीं तपनशशिवैश्वानरमयीं
निषण्णां षण्णामप्युपरि कमलानां तव कलाम् ।

महापद्माटव्यां मृदितमलमायेन मनसा
महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ॥ २१ ॥

भवानि त्वं दासे मयि वितर दृष्टिं सकरुणा-
मिति स्तोतुं वाञ्छन् कथयति भवानि त्वमिति यः।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटमकुटनीराजितपदाम् ॥ २२ ॥

त्वया हृत्वा वामं वपुरपरितृप्तेन मनसा
शरीरार्द्धं शम्भोरपरमपि शङ्के हृतमभूत् ।
यदेतत्त्वद्रूपं सकलमरुणाभं त्रिनयनं
कुचाभ्यामानम्रं कुटिलशशिचूडालमकुटम् ॥ २३ ॥

जगत्सूते धाता हरिरवति रुद्रः क्षपयते
तिरस्कुर्वन्नेतत्स्वमपि वपुरीशस्तिरयति ।
सदापूर्वः सर्वं तदिदमनुगृहणाति च शिव-
स्तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ॥ २४ ॥

त्रयाणां देवानां त्रिगुणजनितानां तव शिवे
भवेत्पूजा पूजा तव चरणयोर्या विरचिता ।
तथा हि त्वत्पादोद्वहनमणिपीठस्य निकटे
स्थिता ह्येते शश्वन्मुकुलितकरोत्तंसमकुटाः ॥ २५ ॥

विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं
विनाशं कीनाशो भजति धनदो याति निधनम् ।
वितन्द्री माहेन्द्री विततिरपि सम्मीलितदृशा
महासंहारेऽस्मिन् विहरति सति त्वत्पतिरसौ ॥ २६ ॥

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥ २७ ॥

सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरिणीं
विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः ।
करालं यत्क्ष्वेलं कबलितवतः कालकलना
न शम्भोस्तन्मूलं तव जननि ताटङ्कमहिमा ॥ २८ ॥

किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः
कठोरे कोटीरे स्खलसि जहि जम्भारिमकुटम् ।
प्रणम्रेष्वेतेषु प्रसभमुपयातस्य भवनं
भवस्याभ्युत्थाने तव परिजनोक्तिर्विजयते ॥ २९ ॥

स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितः
निषेव्ये नित्ये त्वामहमिति सदा भावयति यः ।
किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतः
महासंवर्ताग्निर्विरचयति नीराजनविधिम् ॥ ३० ॥

चतुष्षष्ट्या तन्त्रैः सकलमतिसन्धाय भुवनं
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः ।
पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना-
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥ ३१ ॥

शिवश्शक्तिः कामः क्षितिरथ रविश्शीतकिरणः
स्मरो हंसश्शक्रस्तदनु च परामारहरयः ।
अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिताः
भजन्ते वर्णास्ते तव जननि नामावयवताम् ॥ ३२ ॥

स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ तव मनो-
र्निधायैके नित्ये निरवधिमहाभोगरसिकाः ।
भजन्ति त्वां चिन्तामणिगुणनिबद्धाक्षवलयाः
शिवाग्नौ जुह्वन्तस्सुरभिघृतधाराहुतिशतैः ॥ ३३ ॥

शरीरं त्वं शम्भोश्शशिमिहिरवक्षोरुहयुगं
तवात्मानं मन्ये भगवति नवात्मानमनघम् ।
अतश्शेषः शेषीत्ययमुभयसाधारणतया
स्थितः सम्बन्धो वां समरसपरानन्दपरयोः ॥ ३४ ॥

मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि
त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम् ।
त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा
चिदानन्दाकारं शिवयुवति भावेन बिभृषे ॥ ३५ ॥

तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं
परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता ।

यमाराध्यन् भक्त्या रविशशिशुचीनामविषये
निरालोकेऽलोके निवसति हि भालोकभुवने ॥ ३६ ॥

विशुद्धौ ते शुद्धस्फटिकविशदं व्योमजनकं
शिवं सेवे देवीमपि शिवसमानव्यवसिताम् ।
ययोः कान्त्या यान्त्याः शशिकिरणसारूप्यसरणे-
र्विधूतान्तर्ध्वान्ता विलसति चकोरीव जगती ॥ ३७ ॥

समुन्मीलत्संवित्कमलमकरन्दैकरसिकं
भजे हंसद्वन्द्वं किमपि महतां मानसचरम् ।
यदालापादष्टादशगुणितविद्यापरिणति-
र्यदादत्ते दोषाद्गुणमखिलमद्भ्यः पय इव ॥ ३८ ॥

तव स्वाधिष्ठाने हुतवहमधिष्ठाय निरतं
तमीडे संवर्तं जननि महतीं तां च समयाम् ।
यदालोके लोकान् दहति महति क्रोधकलिते
दयार्द्रा या दृष्टिः शिशिरमुपचारं रचयति ॥ ३९ ॥

तडित्त्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया
स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम् ।
तव श्यामं मेघं कमपि मणिपूरैकशरणं
निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम् ॥ ४० ॥

तवाधारे मूले सह समयया लास्यपरया
नवात्मानं मन्ये नवरसमहाताण्डवनटम् ।
उभाभ्यामेताभ्यामुदयविधिमुद्दिश्य दयया
सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ॥ ४१ ॥

गतैर्माणिक्यत्वं गगनमणिभिस्सान्द्रघटितं
किरीटं ते हैमं हिमगिरिसुते कीर्तयति यः ।
स नीडेयच्छायाच्छुरणशबलं चन्द्रशकलं
धनुः शौनासीरं किमिति न निबध्नाति धिषणाम् ॥ ४२ ॥

धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनं
घनस्निग्धश्लक्ष्णं चिकुरनिकुरुम्बं तव शिवे ।
यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो
वसन्त्यस्मिन्मन्ये बलमथनवाटीविटपिनाम् ॥ ४३ ॥

तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी-
परीवाहस्रोतः सरणिरिव सीमन्तसरणिः ।
वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-
द्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् ॥ ४४ ॥

अरालैः स्वाभाव्यादलिकलभसश्रीभिरलकैः
परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् ।
दरस्मेरे यस्मिन् दशनरुचिकिञ्जल्करुचिरे
सुगन्धौ माद्यन्ति स्मरदहनचक्षुर्मधुलिहः ॥ ४५ ॥

ललाटं लावण्यद्युतिविमलमाभाति तव यत्
द्वितीयं तन्मन्ये मकुटघटितं चन्द्रशकलम् ।
विपर्यासन्यासादुभयमपि सम्भूय च मिथः
सुधालेपस्यूतिः परिणमति राकाहिमकरः ॥ ४६ ॥

भ्रुवौ भुग्ने किञ्चिद्भुवनभयभङ्गव्यसनिनि
त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणम् ।
धनुर्मन्ये सव्येतरकरगृहीतं रतिपतेः
प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमुमे ॥ ४७ ॥

अहः सूते सव्यं तव नयनमर्कात्मकतया
त्रियामां वामं ते सृजति रजनीनायकतया ।
तृतीया ते दृष्टिर्दरदलितहेमाम्बुजरुचिः
समाधत्ते सन्ध्यां दिवसनिशयोरन्तरचरीम् ॥ ४८ ॥

विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः
कृपाधाराऽऽधारा किमपिमधुराऽऽभोगवतिका ।
अवन्ती दृष्टिस्ते बहुनगरविस्तारविजया
ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते ॥ ४९ ॥

कवीनां सन्दर्भस्तबकमकरन्दैकरसिकं
कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम् ।
अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरलौ
असूयासंसर्गादलिकनयनं किञ्चिदरुणम् ॥ ५० ॥

शिवे श्रृङ्गारार्द्रा तदितरजने कुत्सनपरा
सरोषा गङ्गायां गिरिशचरिते विस्मयवती ।

हराहिभ्यो भीता सरसिरुहसौभाग्यजननी
सखीषु स्मेरा ते मयि जननि दृष्टिः सकरुणा ॥ ५१ ॥

गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती
पुरां भेत्तुश्चित्तप्रशमरसविद्रावणफले ।
इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके
तवाकर्णाकृष्टस्मरशरविलासं कलयतः ॥ ५२ ॥

विभक्तत्रैवर्ण्यं व्यतिकरितलीलाञ्जनतया
विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते ।
पुनः स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान्
रजः सत्त्वं बिभ्रत्तम इति गुणानां त्रयमिव ॥ ५३ ॥

पवित्रीकर्तुं नः पशुपतिपराधीनहृदये
दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः ।
नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं
त्रयाणां तीर्थानामुपनयसि सम्भेदमनघम् ॥ ५४ ॥

निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती
तवेत्याहुः सन्तो धरणिधरराजन्यतनये ।
त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः
परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥ ५५ ॥

तवापर्णे कर्णे जपनयनपैशुन्यचकिताः
निलीयन्ते तोये नियतमनिमेषाश्शफरिकाः ।
इयं च श्रीर्बद्धच्छदपुटकवाटं कुवलयं
जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥ ५६ ॥

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ ५७ ॥

अरालं ते पालीयुगलमगराजन्यतनये
न केषामाधत्ते कुसुमशरकोदण्डकुतुकम् ।
तिरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलस-
न्नपाङ्गव्यासङ्गो दिशति शरसन्धानधिषणाम् ॥ ५८ ॥

स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं
चतुश्चक्रं मन्ये तव मुखमिदं मन्मथरथम् ।
यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं
महावीरो मारः प्रमथपतये सज्जितवते ॥ ५९ ॥

सरस्वत्याः सूक्तीरमृतलहरीकौशलहरीः
पिबन्त्याः शर्वाणि श्रवणचुलुकाभ्यामविरलम् ।
चमत्कारश्लाघाचलितशिरसः कुण्डलगणो
झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ॥ ६० ॥

असौ नासावंशस्तुहिनगिरिवंशध्वजपटि
त्वदीयो नेदीयः फलतु फलमस्माकमुचितम् ।
वहत्यन्तर्मुक्ताः शिशिरकरनिःश्वासगलितं
समृद्ध्या यत्तासां बहिरपि च मुक्तामणिधरः ॥ ६१ ॥

प्रकृत्याऽऽरक्तायास्तव सुदति दन्तच्छदरुचेः
प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलता ।
न बिम्बं तद्बिम्बप्रतिफलनरागादरुणितं
तुलामध्यारोढुं कथमिव विलज्जेत कलया ॥ ६२ ॥

स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां
चकोराणामासीदतिरसतया चञ्चुजडिमा ।
अतस्ते शीतांशोरमृतलहरीमाम्लरुचयः
पिबन्ति स्वच्छन्दं निशि निशि भृशं काञ्जिकधिया ॥ ६३ ॥

अविश्रान्तं पत्युर्गुणगणकथाऽऽम्रेडनजपा
जपापुष्पच्छाया तव जननि जिह्वा जयति सा ।
यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी
सरस्वत्या मूर्तिः परिणमति माणिक्यवपुषा ॥ ६४ ॥

रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभि-
र्निवृत्तैश्चण्डांशत्रिपुरहरनिर्माल्यविमुखैः ।
विशाखेन्द्रोपेन्द्रैः शशिविशदकर्पूरशकलाः
विलीयन्ते मातस्तव वदनताम्बूलकबलाः ॥ ६५ ॥

विपञ्च्या गायन्ती विविधमपदानं पशुपतेः
त्वयाऽऽरब्धे वक्तुं चलितशिरसा साधुवचने ।

तदीयैर्माधुर्यैरपलपिततन्त्रीकलरवां
निजां वीणां वाणी निचुलयति चोलेन निभृतम् ॥ ६६ ॥

कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया
गिरीशेनोदस्तं मुहुरधरपानाकुलतया ।
करग्राह्यं शम्भोर्मुखमुकुरवृन्तं गिरिसुते
कथंकारं ब्रूमस्तव चुबुकमौपम्यरहितम् ॥ ६७ ॥

भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती
तव ग्रीवा धत्ते मुखकमलनालश्रियमियम् ।
स्वतः श्वेता कालागुरुबहुलजम्बालमलिना
मृणालीलालित्यं वहति यदधो हारलतिका ॥ ६८ ॥

गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे
विवाहव्यानद्धप्रगुणगुणसंख्याप्रतिभुवः ।
विराजन्ते नानाविधमधुररागाकरभुवां
त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते ॥ ६९ ॥

मृणालीमृद्वीनां तव भुजलतानां चतसृणां
चतुर्भिः सौन्दर्यं सरसिजभवस्तौति वदनैः ।
नखेभ्यः संत्रस्यन् प्रथममथनादन्धकरिपोः
चतुर्णां शीर्षाणां सममभयहस्तार्पणधिया ॥ ७० ॥

नखानामुद्योतैर्नवनलिनरागं विहसतां
कराणां ते कान्तिं कथय कथयामः कथमुमे ।
कयाचिद्वा साम्यं भजतु कलया हन्त कमलं
यदि क्रीडल्लक्ष्मीचरणतललाक्षारसचणम् ॥ ७१ ॥

समं देवि स्कन्दद्विपवदनपीतं स्तनयुगं
तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम् ।
यदालोक्याशङ्काकुलितहृदयो हासजनकः
स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झडिति ॥ ७२ ॥

अमू ते वक्षोजावमृतरसमाणिक्यकुतुपौ
न सन्देहस्पन्दो नगपतिपताके मनसि नः ।
पिबन्तौ तौ यस्मादविदितवधूसङ्गरसिकौ
कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ ॥ ७३ ॥

वहत्यम्ब स्तम्बेरमदनुजकुम्भप्रकृतिभिः
समारब्धां मुक्तामणिभिरमलां हारलतिकाम् ।
कुचाभोगो बिम्बाधररुचिभिरन्तश्शबलितां
प्रतापव्यामिश्रां पुरदमयितुः कीर्तिमिव ते ॥ ७४ ॥

तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः
पयःपारावारः परिवहति सारस्वतमिव ।
दयावत्या दत्तं द्रविलशिशुरास्वाद्य तव यत्
कवीनां प्रौढानामजनि कमनीयः कवयिता ॥ ७५ ॥

हरक्रोधज्वालावलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतसङ्गो मनसिजः ।
समुत्तस्थौ तस्मादचलतनये धूमलतिका
जनस्तां जानीते तव जननि रोमावलिरिति ॥ ७६ ॥

यदेतत्कालिन्दीतनुतरतरङ्गाकृति शिवे
कृशे मध्ये किञ्चिज्जननि तव यद्भाति सुधियाम् ।
विमर्दादन्योऽन्यं कुचकलशयोरन्तरगतं
तनूभूतं व्योम प्रविशदिव नाभिं कुहरिणीम् ॥ ७७ ॥

स्थिरो गङ्गाऽऽवर्तः स्तनमुकुलरोमावलिलता-
कलावालं कुण्डं कुसुमशरतेजोहुतभुजः ।
रतेर्लीलागारं किमपि तव नाभिर्गिरिसुते
बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते ॥ ७८ ॥

निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो
नमन्मूर्तेर्नारीतिलकशनकैस्त्रुट्यत इव ।
चिरं ते मध्यस्य त्रुटिततटिनीतीरतरुणा
समावस्थास्थेम्नो भवतु कुशलं शैलतनये ॥ ७९ ॥

कुचौ सद्यस्स्विद्यत्तटघटितकूर्पासभिदुरौ
कषन्तौ दोर्मूले कनककलशाभौ कलयता
तव त्रातुं भङ्गादलमिति वलग्नं तनुभुवा
त्रिधा नद्धं देवि त्रिवलि लवलीवल्लिभिरिव ॥ ८० ॥

गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजात्
नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे ।

अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं
नितम्बप्राग्भारस्स्थगयति लघुत्वं नयति च ॥ ८१ ॥

करीन्द्राणां शुण्डान् कनककदलीकाण्डपटलीं
उभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवति ।
सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते
विधिज्ञे जानुभ्यां विबुधकरिकुम्भद्वयमसि ॥ ८२ ॥

पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते
निषङ्गौ जङ्घे ते विषमविशिखो बाढमकृत ।
यदग्रे दृश्यन्ते दशशरफलाः पादयुगली–
नखाग्रच्छद्मानः सुरमकुटशाणैकनिशिताः ॥ ८३ ॥

श्रुतीनां मूर्धानो दधति तव यौ शेखरतया
ममाप्येतौ मातः शिरसि दयया धेहि चरणौ ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी
ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ८४ ॥

नमोवाकं ब्रूमो नयनरमणीयाय पदयोः
तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते ।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते
पशूनामीशानः प्रमदवनकङ्केलितरवे ॥ ८५ ॥

मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं
ललाटे भर्तारं चरणकमले ताडयति ते ।
चिरादन्तश्शल्यं दहनकृतमुन्मूलितवता
तुलाकोटिक्वाणैःकिलिकिलितमीशानरिपुणा ॥ ८६ ॥

हिमानीहन्तव्यं हिमगिरिनिवासैकचतुरौ
निशायां निद्राणं निशि चरमभागे च विशदौ ।
वरं लक्ष्मीपात्रं श्रियमतिसृजन्तौ समयिनां
सरोजं त्वत्पादौ जननि जयतश्चित्रमिह किम् ॥ ८७ ॥

पदं ते कीर्तीनां प्रपदमपदं देवि विपदां
कथं नीतं सद्भिः कठिनकमठीकर्परतुलाम् ।
कथं वा बाहुभ्यामुपयमनकाले पुरभिदा
यदादाय न्यस्तं दृषदि दयमानेन मनसा ॥ ८८ ॥

नखैर्नाकस्त्रीणां करकमलसङ्कोचशशिभिः
तरूणां दिव्यानां हसत इव ते चण्डि चरणौ ।
फलानि स्वस्स्थेभ्यः किसलयकराग्रेण ददतां
दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥ ८९ ॥

ददाने दीनेभ्यश्श्रियमनिशमाशानुसदृशीं
अमन्दं सौन्दर्यप्रकरमकरन्दं विकिरति ।
तवास्मिन् मन्दारस्तबकसुभगे यातु चरणे
निमज्जन् मज्जीवः करणचरणष्षट्चरणताम् ॥ ९० ॥

पदन्यासक्रीडापरिचयमिवारब्धुमनसः
स्खलन्तस्ते खेलं भवनकलहंसा न जहति ।
अतस्तेषां शिक्षां सुभगमणिमञ्जीररणित–
च्छलादाचक्षाणं चरणकमलं चारुचरिते ॥ ९१ ॥

गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः
शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः ।
त्वदीयानां भासां प्रतिफलनरागारुणतया
शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥ ९२ ॥

अराला केशेषु प्रकृतिसरला मन्दहसिते
शिरीषाभा चित्ते दृषदुपलशोभा कुचतटे ।
भृशं तन्वी मध्ये पृथुरुरसिजारोहविषये
जगत्त्रातुं शम्भोर्जयति करुणा काचिदरुणा ॥ ९३ ॥

कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं
कलाभिः कर्पूरैर्मरकतकरण्डं निबिडितम् ।
अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं
विधिर्भूयोभूयो निबिडयति नूनं तव कृते ॥ ९४ ॥

पुरारातेरन्तः पुरमसि ततस्त्वच्चरणयोः
सपर्यामर्यादा तरलकरणानामसुलभा ।
तथा ह्येते नीताः शतमखमुखाः सिद्धिमतुलां
तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः ॥ ९५ ॥

कलत्रं वैधात्रं कतिकति भजन्ते न कवयः
श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः ।

महादेवं हित्वा तव सति सतीनामचरमे
कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः ॥ ९६ ॥

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापि त्वं दुरधिगमनिस्सीममहिमा
महामाया विश्वं भ्रमयसि परब्रह्ममहिषि ॥ ९७ ॥

कदा काले मातः कथय कलितालक्तकरसं
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम् ।
प्रकृत्या मूकानामपि च कविताकारणतया
कदा धत्ते वाणीमुखकमलताम्बूलरसताम् ॥ ९८ ॥

सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विहरते
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।
चिरञ्जीवन्नेव क्षपितपशुपाशव्यतिकरः
परानन्दाभिख्यं रसयति रसं त्वद्भजनवान् ॥ ९९ ॥

प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः
सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥ १०० ॥

॥ इति श्रीशङ्कराचार्यविरचिता सौन्दर्यलहरी समाप्ता ॥

# श्लोकानुक्रमणिका

# टीकोद्धृतग्रन्थनामानुक्रमणिका

*

# सौन्दर्यलहरीस्थ पारिभाषिक शब्दकोश

अग्निं (श्लोक ३३) = अग्नि बीज 'र'

आग्नेय खण्ड = क (शिव), ए (शक्ति), ई (काम) और ल (क्षिति)—ये चार वर्ण आग्नेयखण्ड कहलाते हैं (पृ० ११७)।

आदिस्वरः (श्लोक ३३) = आदिस्वर बीज 'अ'

कामः (श्लोक ३२) = काम बीज 'ई'

कामः (श्लोक ३३) = काम बीज 'क'

कौलिनी (श्लोक ४१) = कौल साधक महाशक्ति कुण्डलिनी को 'कौलिनी' कहते हैं।

क्षितिः (श्लोक ३२) = पृथ्वी बीज 'ल'

चन्द्रकला (श्लोक ३२) = श्रीविद्या का अपर नाम (पृ० ११७, १२४)

चन्द्रकला खण्ड = (? गुरूपदेश से जानना चाहिए) यह चौथा एकाक्षर खण्ड है (पृ० ११७)।

चन्द्रबिम्बः = श्रीचक्र (पृ० ११८)।

चन्द्रमण्डल = सहस्रदलकमलान्तस्स्थित बैन्दव स्थान को 'चन्द्रमण्डल' कहते हैं। इसी को कुण्डलिनी शक्ति फूत्कार मारकर तीन ग्रन्थियों का भेदन कर डस लेती है जिससे अमृत निकलने लगता है (पृ० ११८)।

चान्द्रलोकः = विशुद्धिचक्र (पृ० ११८)।

ज्योतिर्लोकः = अनाहत चक्र (पृ० ११८)।

त्रिखण्ड (श्लोक ३२) = नाद, बिन्दु और कलात्मक श्रीचक्र 'त्रिखण्ड' कहलाता है।

परा (श्लोक ३२) = शक्ति बीज 'स'

प्रस्तार (श्लोक ३२) = मन्त्रभेद

ब्रह्मग्रन्थि = सौम्य (स क ल) एवं चन्द्रकलाखण्ड के मध्य हल्लेखाबीज (ह्रीँ) को 'ब्रह्मग्रन्थि' कहते हैं।

मारं (श्लोक ३२) = काम बीज 'क'

योनिं (श्लोक ३३) = योनि बीज 'ह्रीं'

रविः (श्लोक ३२) = सूर्य बीज 'ह'

रुद्रग्रन्थि = आग्नेय (क ए इ ल) एवं सौर (ह स क ह ल) खण्ड के मध्य भुवनेश्वरीबीज (ह्रीँ) को रुद्रग्रन्थि कहते हैं (पृ० ११७)।

**लक्ष्मीं** (श्लोक ३३) = लक्ष्मी बीज 'श्रीं'
**वामाचार** (श्लोक ३१) = शूद्रादिकों के लिए अपसव्य मार्ग से निरूपित अनुष्ठान 'वामाचार' कहलाता है ।
**विष्णुग्रन्थि** = सौम्य (स क ल) एवं सौर (ह स क ल ह) खण्ड के मध्य भुवनेश्वरी बीज (ह्रीँ) को विष्णु ग्रन्थि कहते हैं (पृ० ११७) ।
**विसर्ग** (श्लोक ३३) = शिव चिद्बीज
**व्यापक** (श्लोक ३३) = अ स्वर
**शक्रः** (श्लोक ३२) = इन्द्र बीज 'ल'
**शक्तिं** (श्लोक ३३) = शक्ति बीज 'स'
**शक्तिः** (श्लोक ३२) = शक्ति बीज 'ए'
**शीतकिरणः** (श्लोक ३२) = चन्द्र बीज 'स'
**शिवः** (श्लोक ३२) = शित बीज 'क'
**शिवाग्नि** (श्लोक ३३) = योगाग्नि (पृ० १३९)
**शुभागमपञ्चक** (श्लोक ३१) = वसिष्ठसनकशुकसनन्दनसनत्कुमारैः पञ्चभिः मुनिभिः प्रदर्शितः मार्गः ।
**श्रीविद्या** = श्रीँ बीज ! श्री बीजात्मिका विद्या श्रीविद्येति रहस्यम् ।
**षोडशी कला** = षोडशी कला नाम शकार-रेफ-ईकार-बिन्द्वन्तो मन्त्रः । एतस्यैव बीजस्य नाम श्रीविद्येति (द्र० लक्ष्मीधरा पृ० ११७) ।
**समयाचार** (श्लोक ३१) = शुभागमपञ्चक निरूपित आचार (मार्ग)
**सादाख्य कला** (श्लोक ३२) = चन्द्रकला, श्रीविद्या का अपर पर्याय, (पृ० ११९, १६७) ।
**सुधालोकः** = आज्ञाचक्र (पृ० ११८) ।
**सौम्य खण्ड** = स (परा), क (मार) और ल (हरि)—ये तीन वर्ण सौम्य खण्ड कहलाते हैं (पृ० ११७) ।
**सौर खण्ड** = ह (रवि), स (चन्द्र), क (स्मर), ह (हंस) और ल (शक्र)—ये पाँच वर्ण सौरखण्ड कहे जाते हैं (पृ० ११७) ।
**स्मर** (श्लोक ३३) = काम बीज 'क्लीं'
**स्मरः** (श्लोक ३२) = मन्मथ बीज 'क'
**हरिः** (श्लोक ३२) = हरि बीजाक्षर 'ल'
**हंसः** (श्लोक ३२) = हंस मन्त्रस्थ आकाश बीज 'ह'

*

**डॉ. सुधाकर मालवीय** का जन्म (1944 ई.) कड़ा, शैमी, इलाहाबाद में हुआ था। आपके पिता स्व. प्रो. पं. रामकुबेर मालवीय (भूतपूर्व साहित्य विभागाध्यक्ष, का. हि. वि. वि. और वाराणसेय संस्कृत विश्वविद्यालय) थे जो आपके आद्यगुरु भी थे। आपने काशी हिन्दु विश्वविद्यालय से एम. ए. संस्कृत तथा पी-एच्. डी. की उपाधि और सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी से साहित्याचार्य की उपाधि प्राप्त की।

**वैदिक कृतियाँ**—1. ऐतरेयब्राह्मणम् , सायणभाष्य एवं हिन्दी व्याख्या सहित, दो भाग में (उ. प्र. संस्कृत अकादमी द्वारा पुरस्कृत), 2. पारस्करगृह्यसूत्रम्, हरिहर-गदाधर भाष्य एवं हिन्दी व्याख्या सहित, 3. ऋग्वेद प्रथमाष्टक, अन्वितार्थप्रकाशिका हिन्दी व्याख्या सहित (उ. प्र. संस्कृत अकादमी द्वारा पुरस्कृत) 4. गोभिलगृह्यसूत्रम्, हिन्दी व्याख्या (पुरस्कृत, उ. प्र. संस्कृत अकादमी)

**साहित्यिक कृतियाँ**—1. कर्णभार, भासकृत, (उ. प्र. संस्कृत अकादमी द्वारा पुरस्कृत), 2. स्वप्नवासवदत्तम् 3. मध्यमव्यायोग, 4. दूतवाक्य, 5. यज्ञफलम् (भासकृत), 6. दशरूपकम्, धनिक कृत अवलोक एवं हिन्दी व्याख्या सहित (पुरस्कृत, उ. प्र. संस्कृत अकादमी), 7. अभिज्ञान-शाकुन्तलम्, कालिदास कृत, 8. पञ्चतन्त्रम्, विष्णुशर्मा कृत, संस्कृत-हिन्दी व्याख्या सहित, 9. अमरकोश (प्रथमकाण्ड) हिन्दीटीका सहित, 10. उदारराघवम्, मल्लमल्लाचार्य कृत, अज्ञातकर्तृक संस्कृत टीका सहित। 11. नाट्यशास्त्रम् टिप्पणी एवं श्लोकार्धानुक्रमणी सहित, 12. कुमारसम्भवम् मल्लिनाथ कृत संजीवनी एवं हिन्दी टीका सहित।

**तान्त्रिक कृतियाँ**—1. क्रमदीपिका, केशव काश्मीरिक कृत, गोविन्द कृत संस्कृत टीका एवं हिन्दी सहित (पुरस्कृत, उ. प्र. संस्कृत अकादमी), 2. माहेश्वरतन्त्रम् (हिन्दी टीका सहित), 3. शारदातिलकतन्त्रम्, लक्ष्मणदेशिकेन्द्र कृत, हिन्दी टीका सहित, 4. रुद्रयामलम् (उत्तरतन्त्रम्) हिन्दी व्याख्या सहित, 5. कर्पूरस्तव, महाकाल कृत, हिन्दी व्याख्या सहित। 6. विन्ध्यमाहात्म्यम्, 7. सौन्दर्यलहरी, लक्ष्मीधरी संस्कृत टीका एवं हिन्दी सहित।

**निबन्ध रचनाएँ**—1. Different Interpretations of the Rigvedic Mantra "Catvari Shringa. 2. हंसः शुचिषत्, मन्त्र की विभिन्न व्याख्यायें हैं।

**तन्त्रविज्ञान और साधना** । सीताराम चतुर्वेदी

**तन्त्रसारसङ्ग्रहः** । नारायण विरचित । सव्याख्या । आंग्ल एवं संस्कृत भूमिका सहित । वैद्यराज प॰ एम॰ दुरैस्वामी आंयगार

**दुर्गासप्तशती** । दुर्गाप्रदीप-गुप्तवती-चतुर्धरी-शान्तनवी-नागोजीभट्टी-जगच्चन्द्रिका-दंशोद्धार नामक सप्तटीकायुक्त । हरिकृष्ण शर्मा संग्रहित ।

**देवीरहस्यम्** । परिशिष्ट सहित (श्रीरुद्रयामलतन्त्रान्तर्गत)। सम्पादक-रामचन्द्र काक एवं हरभट्टशास्त्री'।

**प्रपञ्चसारसारसंग्रहः (1-2 भाग)** । गीर्वाणेन्द्रसरस्वतीविरचित । के.एस. सुब्रह्मण्य शास्त्री सम्पादित

**पुरश्चर्यार्णवः (तन्त्रम्)**। श्रीनेपालमहाराजाधिराज श्रीप्रतापसिंह साहदेव विरचित । सम्पादक-म॰ म॰ पण्डित मुरलीधर झा महोदय

**बृहत्तन्त्रसारः** । कृष्णानन्द आगमवागीशकृत । 'साधनात्मक' हिन्दी टीका सहित [illegible] पिलदेव नारायण ।

**भारतीय शक्ति-साधना** । (शक्ति-विज्ञान : स्वरुप एवं सिद्धान्त) । डॉ॰ [illegible] द्विवेदी 'आनन्द'

**महाकालसंहिता** । कामकला कालीखण्ड । 'ज्ञानवती' हिन्दी भाष्य सहित। प्रो॰ [illegible]

**मन्त्रमहोदधिः** । श्रीमन्महीधर विरचित । स्वोपज्ञ 'नौका' संस्कृत टीका तथा '[illegible]' व्याख्या सहित । व्याख्याकार - डॉ॰ सुधाकर मालवीय

**रुद्रयामलम् (1-2 भाग)** । हिन्दी टीका सहित । टीकाकार-डॉ॰ सुधाकर मालवीय

**ललितासहस्रनाम** । भास्करराय प्रणीत 'सौभाग्यभास्करभाष्य' एवं श्रीभारतभूषण कृत विस्तृत हिन्दी व्याख्या सहित ।

**शारदातिलकम् (1-2 भाग)** । लक्ष्मणदेशिकेन्द्र कृत । राघवभट्ट कृत 'पदार्थादर्श संस्कृत टीका एवं डॉ॰ सुधाकर मालवीय कृत हिन्दी टीका सहित ।

**चौखम्बा संस्कृत प्रतिष्ठान**
**दिल्ली**

RGD, New Delhi